नुयुक्तवान् ॥ २६ ॥ स जगाद यदप्यासी—च्चैत्यं पूर्णं तथापि ते ॥ नियमः शिवयात्रायां । मोक्तुं युक्तस्तदग्रतः ॥ २७ ॥ तदंगीकृत्य चौलुक्यो । हेमाचार्ये समुत्थिते ॥ सभायां तद्गुणग्रामं । तुष्टस्तुष्टाव भक्तवत ॥ २८ ॥ तां निशम्य स्तुतिं सूरे—रसहिष्णुः पुरोहितः ॥ जज्वालेवाशिखं युक्त—मेतत्खलजनस्य हि ॥ २९ ॥ ऊचे च देव त्वच्चित्तं । वशीकर्तुमयं शठः ॥ त्वदीष्टं वक्ति धर्मं ते । विष्टवन्नैव रज्यति ॥ ३० ॥ न यद्येवं तदेषोऽपि । श्रीसोमेशं नमस्यितुं ॥ देवेन सममायातु । परमुक्तोऽपि नेष्यति ॥ ३१ ॥ तन्निवेश्य हृदि प्रात—र्हेमाचार्यं समागतं ॥ श्रीसोमनाथयात्रार्थं । प्रार्थयामास पार्थिवः ॥ ३२ ॥

तत्कथंचित्परिज्ञाय । दुरात्मत्वं पुरोधसः ॥ चौलुक्यमार्हतीकर्तुं । कथयामास सूरिराट् ॥३३॥ बुभुक्षितोऽपि किं राजन् । भोजनाय निमंत्र्यते ॥ महात्मापि किमत्यर्थं । यात्रार्थं क्वचिदर्थ्यते ॥ ॥ ३४ ॥ इदमेवास्ति मे कृत्यं । यत्तीर्थपरिशीलनं ॥ कृणोऽपि व्यथयेन्मांत—र्विना भूतगतार्थवत् ॥ ३५ ॥ सूरिराजे वदत्येवं । भूभृताभिमुखेक्षितः ॥ मषीलिप्त इव श्यामा—ननोऽजनि पुरोहितः ॥ ३६ ॥ भूभुग्जगाद यद्येवं । तद् गृहाण सुखासनं ॥ सूरिणोक्तं ममानेन । किं कार्यं पादचारि-

णु. ॥ ३७ ॥ गृहस्थोऽपि विविक्तात्मा । विना यानेन गच्छति ॥ तीर्थयात्रां यतिः किं नु । यः शा-
श्वत्पादचारकः ॥ ३८ ॥ आपृच्छ्य तदिदानीं त्वां । स्तोकस्तोकप्रयाणकृत ॥ नत्वा शत्रुंजयं तेऽहं ।
संगस्ये देवपत्तने ॥ ३९ ॥ ततः पृष्ट्वा महीनाथं । हेमाचार्यस्तदैव सः ॥ प्रतस्थे तीर्थयात्रार्थं ।
संतो ह्यविनयोज्झयः ॥ ४० ॥ स्वयं कुमारपालोऽपि । यात्रार्थं प्रस्थितस्तदा ॥ विस्मापयन् जनं प्रौ-
ढ—संपदया चक्रवर्तिवत् ॥ ४१ ॥ दिनैः कतिपयैर्देव—पत्तनं समुपेत्य तत ॥ वर्हीव वारिवाहस्य ।
सूरेरागममैहत ॥ ४२ ॥ युग्मं ॥ यावत्प्रतिष्ठते नृपः । सोमनाथनमस्क्रियै ॥ तावत् सूरिः समाग-
त्य । संजग्मे स्निग्धबंधुवत ॥ ४३ ॥ दर्शने हेमसूरींदो—श्चौलुक्यानंदवारिधिः ॥ उद्वेलतां यदाद-
द्दे । तत्किं नौचित्यमंचति ॥ ४४ ॥ स्मित्वोवाच नृपो वाचं । वाचंयमशिरोमणे ॥ परिणेत्रेव वे-
लेयं । नवता साधु साधिता ॥ ४५ ॥ अतिप्रीत्या समादाय । तमाचार्यं महीपतिः ॥ सोमनाथं न-
मस्कर्तुं । महेन महताचलत् ॥ ४६ ॥ पारेवाग्वर्तिचारुत्वं । तच्चैत्यं स्वेन कारितं ॥ दृष्ट्वा विमा-
नवद्भ्रमान् । हर्षेण न ममौ हृदि ॥ ४७ ॥ उन्मीलत्पुलकांकुर—पक्ष्मलीकृतविग्रहः ॥ महेश्वरं न-
मश्चक्रे । चौलुक्यो विनयांचितः ॥ ४८ ॥

नुयुक्तवान् ॥ २६ ॥ स जगाद यदप्यासी—च्चैत्यं पूर्णं तथापि ते ॥ नियमः शिवयात्रायां । मो-
क्तुं युक्तस्तदग्रतः ॥ २७ ॥ तदंगीकृत्य चौलुक्यो । हेमाचार्ये समुत्थिते ॥ सभायां तद्गुणग्रामं । तु-
ष्टस्तुष्टाव भक्तवत ॥ २८ ॥ तां निशम्य स्तुतिं सूरे—रसहिष्णुः पुरोहितः ॥ जज्वालेवाशिवं यु-
क्त—मेतत्खलजनस्य हि ॥ २९ ॥ ऊचे च देव त्वच्चित्तं । वशीकर्तुमयं शठः ॥ त्वदीष्टं वक्ति ध-
र्मं ते । चित्तवन्नैव रज्यति ॥ ३० ॥ न यद्येवं तदेषोऽपि । श्रीसोमेशं नमस्यितुं ॥ देवेन सममा-
यातु । परमुक्तोऽपि नेष्यति ॥ ३१ ॥ तन्निवेश्य हृदि प्रात—र्हेमाचार्यं समागतं ॥ श्रीसोमनाथ-
यात्रार्थं । प्रार्थयामास पार्थिवः ॥ ३२ ॥

तत्कथंचित्परिज्ञाय । दुरात्मत्वं पुरोधसः ॥ चौलुक्यमार्हतीकर्तुं । कथयामास सूरिराट् ॥३३॥
बुभुक्षितोऽपि किं राजन् । भोजनाय निमंत्र्यते ॥ महात्मापि किमत्यर्थं । यात्रार्थं कश्चिदर्थ्यते ॥
॥ ३४ ॥ इदमेवास्ति मे कृत्यं । यत्तीर्थपरिशीलनं ॥ क्षणोऽपि व्यथयेन्मांत—द्विना द्यूतगतार्थवत्
॥ ३५ ॥ सूरिराजे वदत्येवं । जृंभताभिमुखेक्षितः ॥ मषीलिप्त इव श्यामा—ननोऽजनि पुरोहितः
॥ ३६ ॥ भूभुग्जगाद यद्येवं । तद् गृहाण सुखासनं ॥ सूरिणोक्तं ममानेन । किं कार्यं पादचारि-

गः ॥ ३७ ॥ गृहस्थोऽपि विविक्तात्मा । विना यानेन गच्छति ॥ तीर्थयात्रां यतिः किं नु । यः श-
श्वत्पादचारकः ॥ ३८ ॥ आपृच्छ्य तदिदानीं त्वां । स्तोकस्तोकप्रयाणकृत ॥ नत्वा शत्रुंजयं तेऽहं ।
संगम्ये देवपत्तने ॥ ३९ ॥ ततः पृष्ट्वा महीनाथं । हेमाचार्यस्तदैव सः ॥ प्रतस्थे तीर्थयात्रार्थं ।
मंत्रो ह्यविनयोक्तयः ॥ ४० ॥ स्वयं कुमारपालोऽपि । यात्रार्थं प्रस्थितस्तदा ॥ विस्मापयन् जनं सौ-
द्ध—संपदया चक्रवर्तिवत् ॥ ४१ ॥ दिनैः कतिपयैर्देव—पत्तनं समुपेत्य तत ॥ बर्हीव वारिवाहस्य ।
मृगेगममैक्षत ॥ ४२ ॥ युग्मं ॥ यावत्प्रतिष्ठते नृपः । सोमनाथनमश्चिकीः ॥ तावत् सूरिः समाग-
त्य । संजग्मे स्निग्धबंधुवत ॥ ४३ ॥ दर्शने हेमसूरींदो—श्चौलुक्यानंदवारिधिः ॥ उद्वेलतां यदाद-
र्द्ध । तत्किं नौचित्यमंचति ॥ ४४ ॥ स्मित्वोवाच नृपो वाचं । वाचंयमशिरोमणे ॥ परिणेत्रेव वे-
लेयं । भवता साधु साधिता ॥ ४५ ॥ अतिप्रीत्या समादाय । तमाचार्यं महीपतिः ॥ सोमनाथं न-
मस्कर्तुं । महेन महताचलत् ॥ ४६ ॥ पारेवाग्वर्तिचारुत्वं । तच्चैत्यं स्वेन कारितं ॥ दृष्ट्वा विमा-
नवद्भ्रमान् । हर्षेण न ममौ हृदि ॥ ४७ ॥ उन्मीलत्पुलकांकूर—पक्ष्मलीकृतविग्रहः ॥ महेश्वरं न-
मश्चक्रे । चौलुक्यो विनयांचितः ॥ ४८ ॥

जैना जिनं विना नान्यं । नमंतीति जिनोक्तिविद् ॥ नृपोऽवोचत्प्रभो युक्तं । यदि तद्वंद्यतां
शिवः ॥ ४९ ॥ राजन् वाच्यं किमत्रायं । श्रमः सर्वोऽपि तत्कृते ॥ हेमसूरिर्निगद्येति । तारस्वरम-
दोऽवदत् ॥ ५० ॥ भवबीजांकुरजनना । रागाद्याः क्षयमुपागता यस्य ॥ ब्रह्मा वा विष्णुर्वा । महे-
श्वरो वा नमस्तस्मै ॥ ५१ ॥ यत्र तत्र समये यथा तथा । योऽसि सोऽस्यभिधया यया तया ॥ वी-
तदोषकलुषः स चेद्भवा—नेक एव भगवन्नमोऽस्तु ते ॥ ५२ ॥ इत्यादिस्तुतिभिर्हेम—सूरिस्तं शं-
करं स्तुवन् ॥ श्रीवीतरागमेवात्म—देवमस्तुत वस्तुतः ॥ ५३ ॥ विज्ञाय स्तुतिकुल्यां तां । परमा-
त्माब्धिगामिनीं ॥ निर्विरोधतया सूरे—श्चमचक्रेऽवनीधवः ॥ ५४ ॥ ततो यात्रोचितं कृत्यं । सर्व-
मासूत्र्य भूपतिः ॥ देवगर्भगृहं प्राप्तः । समं श्रीहेमसूरिणा ॥ ५५ ॥ जगाद च प्रभो देवो । महा-
देवसमोऽस्ति न ॥ महर्षिर्न भवत्तुल्य—स्तत्वार्थी च न मादृशः ॥ ५६ ॥ तीर्थेऽस्मिन् रंगदुत्तुंग—
प्राच्यपुण्यवशादसौ ॥ त्रिवेणीसंगम इव । त्रिकयोगोऽद्य जातवान् ॥ ५७ ॥ मिथो विरुद्धसिद्धांत
—रत्नकर्करमिश्रिते ॥ दुर्लभान्यत्र सद्धर्म—देवतत्वानि रत्नवत् ॥ ५८ ॥ तद्विमृश्योच्यतामस्मिं—
स्तीर्थे निर्द्वेषभावतः ॥ को धर्मो दैवतं किंच । मोक्षलक्ष्मीप्रसाधकं ॥ ५९ ॥ यथैकताननद्ध्यान—

शम्नस्त्रस्नदिनीजलैः ॥ प्रक्षालयेऽहमात्मानं । मलिनीकृतवस्त्रवत ॥ ६० ॥ गुरौ त्वादृशि लब्धेऽपि । यदि तत्वस्य संशयः ॥ उदितेऽपि तदा सूर्ये । वस्तुनोऽनवलोकनं ॥ ६१ ॥ कथयित्वेति तूष्णीके । चौलुक्ये सूरिराट् ततः ॥ ध्यात्वा हृदंतरे किंचि-दवोचदुचितं वचः ॥ ६२ ॥ अलं शास्त्रीयगोष्टीभि—र्विरुद्धाभिः परस्परं ॥ अहं तु दर्शयाम्येन—मेव देवं पुरस्तव ॥ ६३ ॥ धर्मं वा दैवतं वापि । यदयं वक्ति शंकरः ॥ तदुपास्तिस्त्वया ध्येया । मृषा न खलु देवगी· ॥ ६४ ॥ अहं मंत्रं स्मरन्नस्मि । स्मरविव्यक्तिहेतवे ॥ उत्क्षेप्तव्यस्त्वया सारो । घनसारस्तदग्रतः ॥ ६५ ॥

चौलुक्यं शिक्षयित्वेत्थं । मंत्रस्नानं विधाय च ॥ सूरिर्मेरुरिव स्थेया—न्मंत्रं ध्यातुं प्रचक्रमे ॥ ॥ ६६ ॥ अहो शिवोऽपि किं साक्षा—त्स्यादिति स्मेरविस्मयः ॥ गुरूपदिष्टमातन्व—न्नृपस्तस्य पुरःस्थितः ॥ ६७ ॥ क्षणोर्ध्वं चंद्रमार्तंड-बिंबलक्ष्मीविडंबकः ॥ प्रादुरासीन्महांस्तेजो—राशिरीश्वरलिंगतः ॥ ६८ ॥ तन्मध्यादव्यक्तव्यक्तो । भास्वरश्रीर्महेश्वरः ॥ गंगाजटाशशिकला—हस्तयाद्युपलक्षितः ॥ ६९ ॥ ध्यानं मुक्त्वावदत्सूरि-र्नृप पश्य पुरः शिवं ॥ एनं प्रसाद्य पृष्ट्वा च । सम्यक् तत्वं विदांकुरु ॥ ७० ॥ सद्यस्तद्दर्शनोद्भूत—प्रभूतप्रमदो नृपः ॥ अष्टांगस्पृष्टभूपृष्ट—स्तं नत्वा प्रांजलि·

जगौ ॥ ७१ ॥ सर्वदापि दुरालोक—स्त्वमध्यात्मस्पृशामपि ॥ किं पुनर्मादृशां चर्म—लोचनानां जगत्पते ॥ ७२ ॥ परमस्य गुरोर्ध्याना—दध्वन्योऽसि दृशोर्मम ॥ सिद्धांजनस्य साहाय्या—दिव लोकोत्तरो निधिः ॥ ७३ ॥ दरिद्र इव कल्पद्रुं । तृषातुर इवामृतं ॥ दिष्ट्या दृष्ट्वाद्य दृष्ट्या त्वा—मात्मायं नृत्यतीव मे ॥ ७४ ॥ उक्त्वेति गूर्जरेशेन । पृष्टः पृष्टव्यमीश्वरः ॥ उवाच ध्वनिना चैत्य—मध्यं निध्वानयन्निव ॥ ७५ ॥ त्वं धन्यस्त्वं विवेकज्ञ—श्चौलुक्यनृप संप्रति ॥ यस्येदृग्धर्मजिज्ञासा । मुमुक्षोरिव वल्गति ॥ ७६ ॥ नो चेद्राज्यं समासाद्य । माद्यंति प्रायशो नृपाः ॥ स्ववैरिण इव प्राप्त—मपि धर्मं न कुर्वते ॥ ७७ ॥ नाचरंति सदाचारं । न शृण्वंति हितं वचः ॥ न पश्यंति पुरः पूज्यं । क्षीवा इव महीधवाः ॥ ७८ ॥ सुप्ता इव गरग्रस्ता । इवाचारच्युता इव ॥ शृण्वंत्यपि नृपा नैव । धर्मं कुर्वंति तत्कुतः ॥ ७९ ॥ अवश्यं यस्य भद्रौघ—मयो भावी महोदयः ॥ स एव सेवते धर्मं । धनार्थी श्रीपतिं यथा ॥ ८० ॥ भुक्तिमुक्तिप्रदं धर्मं । निर्मातुं चेत्त्वमिच्छसि ॥ सेवस्वैनं ततः सूरिं । परब्रह्मेव मूर्तिमत ॥ ८० ॥ सर्वदेवावतारोऽय—मजिह्मब्रह्ममंदिरं ॥ आबाल्यादपि चारित्र—पात्रं वाङ्मयपारदृक् ॥ ८१ ॥ करामलकवत्सम्यग् । ज्ञातदेहिमनःस्थितिः ॥

ऋषिर्मैव तत्वज्ञो । जयति ज्ञातलेऽधुना ॥ ८२ ॥ युग्मं ॥ नृप त्वमेतदादिष्टं । तन्वत्र स्वेष्टमवाप्स्यसि ॥ इत्यादिश्य तिरोऽधत्त । धूर्जटिः स्वप्नदृष्टवत् ॥ ८३ ॥

विस्मेरः सूरिसूचेऽथ । चौलुक्यो जगवन् ध्रुव ॥ त्वमेवासीश्वरो यस्य । वश्यः सोऽपि महेश्वरः ॥ ८४ ॥ पचेलिमानि पुण्यानि । मयैव प्राग्वितेनिरे ॥ त्वादृशस्तत्वदर्शी मे । यस्य जागर्त्ययं गुरुः ॥ ८६ ॥ अतः प्रभृति मे देवो । गुरुस्तात. सवित्र्यपि ॥ सहोदरो वयस्यश्च । त्वमेवैकोऽसि नापरः ॥ ८७ ॥ इहलोकः पुरादायि । मह्यं जीवितदानतः ॥ शुद्धधर्मोपदेशेन । परलोकोऽद्य दीयतां ॥ ८८ ॥ गुरुर्जगाद यद्येवं । तर्हि संप्रति पापवत् ॥ मुंच मांसाद्यजक्ष्यं त्वं । धर्मसंबोधये ततः ॥ ८९ ॥ ऊमेत्युदीर्य चौलुक्य—स्तदैव मुदिताशयः ॥ पुण्योऽहमिति पुण्यासे—रजक्ष्यनियमं व्यधात् ॥ ९० ॥ प्रस्थाय नृपतिस्तस्मा—द्धेमाचार्यसमन्वितः ॥ पताकाक्रांतगगनं । पत्तनं समुपेयिवान् ॥ ९१ ॥ ततः सोमेश्वरीं वाणीं । स्मरन् सूक्तिमिवानिशं ॥ सूरेस्तस्य पदांजोजं । जजतिस्म स हंसवत् ॥ ९२ ॥ कर्हिचिद्वसतिं गत्वा । सदस्याकार्य कर्हिचित् ॥ सूरिवक्त्रांबुजात्धर्म—रसं सोऽपाद् द्विरेफवत् ॥ ९३ ॥ सूरेः पीयूषदेशीय—देशनारसपानतः ॥ नश्यतिस्म शनैस्तस्य ।

मिथ्यात्वं विषवेगवत् ॥ ९४ ॥ श्रीमाचौलुक्यभूपालः । स्वधर्मं रचयन्नपि ॥ नवश्रावकवत्किंचि— जैने धर्मे दधौ मनः ॥ ९५ ॥

इतश्चाभूद् भृगुक्षेत्रे । पिनाकीव महाव्रती ॥ भगवान् संज्ञया देव—बोधिः शोधितमानसः ॥ ॥ ९६ ॥ स स्नातुं पर्वणि क्वापि । जगाम त्रिदशापगां ॥ कलावान् भगवांस्तत्र । दीपकोऽपि त- दागमत ॥ ९७ ॥ दीपकः कथयामास । तीर्थे तारतरस्वरः ॥ सारस्वतं सुवर्णं च । मत्तो गृह्णीत भो जनाः ॥ ९८ ॥ स्वर्णमाकर्ण्य तच्चूर्णं । जना जगृहिरे घनाः ॥ सारस्वतं तु नैकोऽपि । विश्वं हि कमलास्पृहं ॥ ९९ ॥ मन्ये वर्णमयी वाणी । श्रीः सुवर्णमयी ततः ॥ वर्णहीनां विहायैवा— दत्ते वर्णाधिकां जनः ॥ १०० ॥ अथायुरंतं विज्ञाय । मुमुक्षुर्मानुषीं तनुं ॥ दीपको ध्यातवान् क- स्मै । कलाढ्यमिदं ददे ॥ १ ॥ सार. सारस्वतो मंत्रः । स्वर्णसिद्धिश्च निश्चला ॥ पातालावान्मया सार्धं । नूनमेतौ प्रयास्यतः ॥ २ ॥ विज्ञाय देवबोधिस्त—द्दीपकं पर्युपास्य च ॥ सारस्वतविधिं सा- र—स्वतमंत्रं ततो ललौ ॥३॥ देवबोधिस्ततः प्राप्य । भृगुकच्छमतुच्छधीः ॥ प्रविश्य नर्मदानीरे । मं- त्रं ध्यातुं प्रचक्रमे ॥ ४ ॥ एकतानमनस्त्वेन । स ध्यायन् वागधीश्वरीं ॥ स्थिरस्थाणुरिवाज्ञासी—न्न

किंचित् श्रुतपादिकं ॥ ५ ॥ लक्षजापेऽपि वाग्देवी—मप्रसन्नां विलोक्य च ॥ असौ नृपोऽचियो-
गेन । पंचलक्षीं मुजस्तवान् ॥ ६ ॥ तथापि देव्यनोपेण । देवबोधिरनिक्रुधा ॥ पुष्पमालामिवाक्ले-
षी—दक्षमालां नभस्तले ॥ ७ ॥ स्तंभितामिव तां व्योम्नि । तारामालामिव स्थिरां ॥ दृष्ट्वाति-
विस्मयाविष्टो । भगवान् ध्यातवानदः ॥ ८ ॥ मंत्रः सारस्वतोऽयं चे—दसत्य स्यात्तदा कथं ॥ प-
रिणीताक्षमालेयं । निरालंबांबरे स्फुरेत् ॥ ९ ॥ परं ममैव दुर्दैवं । यदयं न फलेग्रहिः ॥ अमुष्मि-
न् प्रतिकूले हि । सकलं निष्फलं यतः ॥ १० ॥ वागुवाच ततो व्योम्नि । किं ध्यायसि महाशय ॥
पश्चात्तव्य यथा वेत्मि । मंत्रासिद्धिनिबंधनं ॥ ११ ॥ ततः स तामसश्याम—वक्रविग्रहचीवराः ॥ पि-
शाचीरिव रौद्रीः षट् । स्त्रीः स्वपृष्टे च दृष्टवान् ॥ १२ ॥ दध्यौ च किमिमाः प्राच्यो । मूर्ता मे पा-
पसंपदः ॥ अथ दुर्ध्यानधोरण्यो । राक्षस्यो वाचुमागता ॥ १३ ॥ दिव्यभाषीत्पुनर्वाणी । देवबोधे
त्वया पुरा ॥ चक्रिरे पडिमा जीव—हत्याः पापविपाकिमाः ॥ १४ ॥ स्थितासु तासु कार्त्स्न्येन । त्व-
दात्मनि तमास्विव ॥ कथं वागीश्वरीमंत्र—प्रसादार्कः प्रकाशतां ॥ १५ ॥ एकैकलक्षजापेन । पृथ-
ग्भूतास्त्वदात्मनः ॥ षट् षड्जीवहत्यास्ताः । । स्त्रीरूपेणावतस्थिरे ॥ १६ ॥

कुपितेन त्वया किंसा—ऽक्षमास्येव मयांबरे ॥ स्तंभिता स्वप्रभावेण । त्वत्प्रत्यायनकाम्यया ॥ ॥ १७ ॥ अतःपरमिमं मंत्रं । स्वल्पं ततो यथा तव ॥ वाणी प्रसीदतीत्युक्त्वा । देवी वाग्विरराम सा ॥ १८ ॥ करे कृत्वाक्षमालां तां । देवबोधिः पुनः पुनः ॥ तं मंत्रं ध्यातुमारेभे । निःसंदेहः समीहिते ॥ १९ ॥ ततः पर्वेंदुगर्वैक—दस्युदेहद्युतिच्छलात ॥ प्रत्यक्षं जनयंतीव । शब्दब्रह्ममयं महः ॥ २० ॥ वर्षतीव प्रसादार्द्र—दृग्भ्यां प्रीतिसुधारसं ॥ प्रादुरासीत्पुरस्तस्य । देवबोधेः सरस्वती ॥ २१ ॥ युग्मं ॥ कलानां विद्यानामपि सर्वसानामुपकृता—मपाराणां वारां जलनिधिरिव त्वं पदमसि ॥ श्रुताधीशे स्तोत्रं तव कियदिदं यत् त्रिभुवने । श्रवःप्रत्यक्षं यत्तदखिलमपि त्वत्परिणतिः ॥ ॥ २२ ॥ विरज्य त्वय्युच्चैरिह महिममात्रप्रणयिनीं । पशुप्रायो लोकः कलयतु रमां ब्रह्मतनये ॥ परं सर्वो विद्वांस्त्रिदिवशिवशर्मैकजननीं । विहाय त्वामेकां वहति न परं किंचन हृदि ॥ २३ ॥ उपश्लोक्येति वाग्देवीं । देवबोधिरयाचत ॥ मातर्मह्यं वितरस्व । भारतीभुक्तिमुक्तिकाः ॥ २४ ॥ कल्पद्रुममहिम्नेव । मद्वरेण त्वदीप्सितं ॥ सिध्यत्विति तमादिश्य । तिरोऽधाद्वागधीश्वरी ॥ २५ ॥ देवीप्रसादतः सोऽभू—त्सद्यस्त्रैविद्यशेखरः ॥ किं दोहदवशान्न स्या—दकालेऽपि द्रुमः फली ॥ २६ ॥

अन्या अपि कला धन्या—स्त्रिजगत्प्रमदप्रदाः ॥ देवबोधिरुरीचक्रे । मितपक्षशीनांशुवत् ॥ २७ ॥
स देवबोधिरन्योपी— त्तदा जनमुखांबुजात् ॥ हेमाचार्येण यच्चक्रे । चौलुक्यो जिनवर्त्मनि ॥ २८ ॥
ध्यानवांश्च कलोदन्त्रे । गुरौ जाग्रति माहशे ॥ भ्रांतवत्किमयं नृप । स्वकुलक्रममुझति ॥ २९ ॥
कलाकुलास्तदेवेनाः । मकला मत्कलालना ॥ नृपोऽपि वैष्णवे धर्मे । यदेव स्थापयाम्यमुं ॥ ३० ॥
ततोऽहंकारकीलेन । कीलितात्मेव तत्क्षणं ॥ देवबोधिः समायासी—च्चौलुक्यनृपपत्तनं ॥ ३१ ॥
स तस्मिन्निंद्रजालीव । नानाकौतुकदर्शनात ॥ संमोहयितुमारेभे । नागरान् गुणसागरान् ॥ ३२ ॥
विद्यां वश्यादिकां तां तां । देवबोधिः प्रकाशयन् ॥ सिद्धवद्विस्मयस्मेरैः । पौरैः शश्वदुपास्यत ॥
॥ ३३ ॥ निःकलोऽपि व्रती मान्यः । कलावांस्तु विशेषतः ॥ स्वभावतः प्रियं हेम । किं वाच्यं र-
त्नरोचितं ॥ ३४ ॥ कलावतां प्रसंगेन । देवबोधिं स्तुवन्नथ ॥ निस्सीमं तत्कलावत्त्वं । चौलुक्याय
जनो जगौ ॥ ३५ ॥ वर्हीव वारिदं देव—बोधिं द्रष्टुं समुत्सुकः ॥ गूर्जरेशो निजानाप्तां—स्त-
माह्वातुं प्रजिघ्यिवान् ॥ ३६ ॥ नलिनीनालदंडाढ्यं । रंभापत्रमयासनं ॥ आमतंतुनिरानद्धं । पर
माणुनिरिवावृतं ॥ ३७ ॥ शिशूनामष्टवर्षाणां । स्कंधन्यस्तं सुखासनं ॥ अध्यास्य प्रस्थितः प्रात—

देवबोधिर्नृपालयं ॥ ३८ ॥ युग्मं ॥ तत्तादृगद्भुतालोक—विकसन्नयनांबुजाः ॥ आकृष्टा इव मंत्रेण
। पौरास्तं परिवव्रिरे ॥ ३९ ॥ तथैव स वृतः पौरैः । स्वामीव निजसेवकैः ॥ विस्मापयन् सन्नालो-
कं । चौलुक्यास्पदमासदत् ॥ ४० ॥ निभाल्य तत्तथा नृपो—ऽध्यासीत्कोऽयं पिचंडिलः ॥ क्वेदं
सुखासनं राज्ञ—मस्य कापि कलाद्भुता ॥ ४१ ॥ सुखासनादथोत्तीर्ण । सुवर्णासनमाश्रितः ॥
देवबोधिर्नृपं नम्र—माशास्तेस्मेति धीनिधिः ॥ ४२ ॥ निःकामोऽपि महाव्रती प्रमथितानंगोऽपि दे-
हेंगनां । बिभ्रत्प्रेतवने वसन्नपि शुचिर्भीमोऽपि शांत्यात्मकः ॥ पार्श्वस्थैकवृषोऽपि वाजिगजताद्युद्दाम-
लक्ष्मीप्रदो । दुर्लंघ्योरुचरित्रभृद्भवतु ते श्रीशंकरः शंकरः ॥ ४३ ॥ शंके पंकेरुहमिति परित्यज्य प
द्मं स्वसद्म । श्रीस्त्वत्पाणौ सुरगुरुबुधाद्यर्चनोच्चैः पवित्रे ॥ शश्वद्वासं कलयति महीपालचौलुक्य नो
चे—द्दत्तेऽत्यर्थं कथमयमिति प्रार्थकेभ्योऽर्थमिष्टं ॥ ४४ ॥

ततस्तत्तत्कलाढ्याभि—र्गोष्ठीभिः सूक्तसूक्तिभिः ॥ स चिरं रंजयांचक्रे । नृदेवो देवबोधिना
॥ ४५ ॥ याममात्रे दिने याते । भगवान्नृपमूचिवान् ॥ ईक्ष्यतेऽद्य मया देव । देवतावसरस्तव ॥
॥ ४६ ॥ तदंगीकृत्य नृपालः । स्नात्वात्तशुचिचीवरः ॥ देवबोधिं सहादाय । देवतागारमागमत ॥

॥ ४७ ॥ निवेश्य कांचने पट्टे । शंकरप्रमुखान् सुरान ॥ विधिवत्पूजयामास । स रावण इव स्थिरः
॥ ४८ ॥ देवबोधिरथावादी—देव त्वं केन हेतुना ॥ एतान् क्रमागतान् देवान् । भूर्भुवःस्वस्त्रयी·
श्वरान् ॥ ४९ ॥ स्वर्गापवर्गदं श्रौतं । धर्मं चातिप्रियंकरं ॥ विहाय हा जिनोपज्ञ—मज्ञवद्भजसे व्र·
तं ॥ ५० ॥ युग्मं ॥ अवेदस्मृतिमूलत्वा—ज्जिनधर्मो न सत्तमः ॥ अत एव न तत्वज्ञैः । सूरि·
भिः सोऽयमीप्यते ॥ ५१ ॥ अयं मुक्तिपुरस्य स्या—ज्जैनोऽध्वा सरलो यदि ॥ संचरेरन् पथान्येन
। तदा त्वत्पूर्वजाः कथं ॥ ५२ ॥ तस्मात्त्वमात्मनीनं चे—द्यथाकामं समीहसे ॥ मास्महासीस्तदा पूर्व
—धर्ममेनं निरेनसं ॥ ५३ ॥ अथाचष्टेस्म चौलुक्यः । श्रौतो धर्मोऽस्त्ययं महान् ॥ परं हिंसामय·
त्वेन । न प्रत्येति मनो मम ॥ ५४ ॥ वाचः षड्दर्शनानां च । सुदुर्धरविरोधतः ॥ सपत्न्य इव न
क्वापि । संगच्छंते परस्परं ॥ ५५ ॥ देवबोधिः पुनः प्रोचे । यद्येवं तर्हि दर्शये ॥ तुभ्यं देवान् वि·
धात्रादीन् । पूर्वजानपि पृच्छ तान् ॥ ५६ ॥ उक्त्वेति मंत्रसामर्थ्यात् । स तदैव तदग्रतः ॥ आकृष्ट·
वान् समस्तांस्तान् । पूर्वसंकेतितानिव ॥ ५७ ॥ ब्रह्मविष्णुहरान् मूल—राजादीन् पूर्वजानपि ॥ दृष्ट्वा
पुरः स्फुरद्रूपान् । राजाश्चर्यमयोऽनमत ॥ ५८ ॥ किरन्निव सुधापूरं । वेदोच्चारेण कर्णयोः ॥ अ·

जिह्वब्रह्मवर्ब्रह्मा–विरञ्चचतुराननः ॥ ५९ ॥ अंतःस्थश्रीमुखोद्योति—श्रीवत्सं कौस्तुभं हृदि ॥ वह-
न् शंखादिसंरुद्ध–चतुष्पाणिर्जनार्दनः ॥ ६० ॥ त्रिविष्टपीं स्फुटं द्रष्टु—मिव त्रिनयनीं श्रयन् ॥ शू-
लपाणिर्जटाधारी । भालबालशशी शिवः ॥ ६१ ॥ एते त्रयोऽपि संभूय । देहोद्दामद्युतिच्छलात् ॥
दर्शयंत इव ज्योति—ष्परं चौलुक्यमूचिरे ॥ ६२ ॥ चतुर्भिः कलापकं ॥

विदांकुरु नरेंद्रास्मान् । ब्रह्मविष्णुमहेश्वरान् ॥ त्रयाणां जगतां सृष्टि—स्थितिसंहारकारकान् ॥
॥ ६३ ॥ वयमेव स्वभक्तेभ्यः । कृतकर्मानुमानतः ॥ भवं शिवं च संचिंत्य । दद्महे भ्रमवर्जिताः ॥
॥ ६४ ॥ उपास्यास्मदुपज्ञं च । श्रौतं धर्मं सुनिर्मलं ॥ स्वर्गापवर्गनिस्सीम—श्रियमाशिश्रियन्न के
॥ ६५ ॥ तन्निरस्य विरस्यत्वं । भ्रांतिमस्मान् सुरोत्तमान् ॥ धर्मं च वैदिकं शुध्ध्वा । समाराधय मु-
क्तये ॥ ६६ ॥ अस्मत्प्रतिकृतिश्चैष । देवबोधिर्यतीश्वरः ॥ एतदुक्तमुरीकृत्य । कृत्यं स्वं सर्वमाचर ॥
॥ ६७ ॥ अथैनं प्रोचिरे पूर्वे । वत्स त्वत्पितरो वयं ॥ सप्तापि मूलराजाद्याः । पश्य त्वां प्रत्युपागताः
॥ ६८ ॥ त्वयासौ पूर्वजक्षुण्णः । पंथा कस्माद्विमुच्यते ॥ रथानामिव तत्त्यागो । नृणां भंगाय नि-
श्चितं ॥ ६९ ॥ इमान् देवानिमं प्रोक्तं । मार्गं चाश्रित्य भावतः ॥ तां त्रैविष्टपीं लक्ष्मीं । निर्विशा-

मोऽनिशं वयं ॥ ६९ ॥ यथा वयं स्वपूर्वेषां । नातिचक्रमिमं क्रमं ॥ तथा त्वमपि वर्त्तेतं । माति-
क्रमस्व मत्यवत् ॥ ७० ॥ ततस्तेषु प्रयातेषु । नृपो मग्नोऽद्भुतांबुधौ ॥ सोमेशोक्तं तदुक्तं च ।
स्मरन् जन्म इवाजनि ॥ ७१ ॥ कुर्वे तदुक्तमित्युक्त्वा । देवबोधिं विसृज्य तं ॥ चौलुक्यश्चक्रवर्त्तीव ।
भुजंजव्यानमद्भुतं ॥ ७२ ॥ गत्वाथ वाग्भटामात्यो । हेमाचार्याय तत्क्षणं ॥ देवबोधिकृतं तत्त—
न्निवेद्येति व्यजिज्ञपत् ॥ ७३ ॥ भगवन् भगवानेष । कोऽपि लोकोत्तरः पुमान् ॥ येनाचकर्षिरे मं-
त्रैः । मंयम्येव शिवादयः ॥ ७४ ॥ अदसीयः प्रभावोऽय—मयस्कांत इवायसं ॥ आचकर्ष प्रकर्षेण
। नृपचित्तमसंशयं ॥ ७५ ॥ तस्मात्तथा विधातव्यं । प्रभुणा नृपतिर्यथा ॥ स्वधर्मे भवति स्थेयान् ।
नीलीराग इवांशुके ॥ ७६ ॥ आचार्यस्तं जगौ कार्या । त्वया चिंता न काचन ॥ परं कथंचिदाने-
यो । व्याख्यायां क्ष्मापतिः प्रगे ॥ ७७ ॥ प्रभोर्विभाव्य तां प्रौढिं । गाढं हृष्टमनास्ततः ॥ सायंतन-
क्षणे राज—समाजं भजतेस्म सः ॥ ७८ ॥ जगाद गूर्जरेंद्रस्तं । देवबोधेर्महात्मनः ॥ सामर्थ्यमी-
श्वरस्येव । मंत्रिन् दृष्टं त्वया वद ॥ ७९ ॥ मंत्री विज्ञपयामास । स्वामिन्नस्य वदामि किं ॥ शिष्या
इव वितन्वंति । यदादेशं सुरासुराः ॥ ८० ॥ विधोः कलामयस्यापि । षोडशैव कलाः किल ॥ नृ-

यस्यः संति तास्त्वस्मिन् । रंजितत्रिजगज्जना· ॥ ८१ ॥ वाग्भटं पृष्टवान् नृपः । कलाकौशलमीदृशं
॥ हेमाचार्ये निजगुरौ । किं जागर्ति न वा वद ॥ ८२ ॥ स्वामिस्वांते निजगुरा—वित्युक्त्यापि म·
हादरं ॥ हेमसूरौ परिज्ञाय । हृष्टोऽज्ञासिष्ट धीसखः ॥ ८३ ॥ प्रायः संभाव्यते सर्वं । सूरावस्मिन् क·
लादिकं ॥ रत्नाकरे हि रत्नस्य । न स्यादस्तित्वसंशयः ॥ ८४ ॥ प्रातः प्रक्ष्यामि तं गत्वे—त्यु·
क्त्वा राट् विससर्ज तं ॥ सोऽपि तत्सूरये सर्वं । निवेद्य स्वपदं ययौ ॥ ८५ ॥

प्रज्ञातेऽथ प्रभुः प्रोचे । शिष्यं व्याख्याक्षणे सति ॥ नृपाद्यध्यक्षमाकृष्यं । त्वया मामकमास·
नं ॥ ८६ ॥ अध्यास्य क्षितितो दूरे । सप्तगस्तिकमासनं ॥ अध्यात्मविद्यया रुध्वां—तरान् पंचापि
मारुतान् ॥ ८७ ॥ ऊर्ध्वस्य चासनात्किंचि—द्नृपादौ मिलिते जने ॥ प्रभुर्व्याख्यातुमारेभे ।
सुधानिःस्पंदसुंदरं ॥ ८८ ॥ युग्मं ॥ सूरेश्च देशनां शृण्वन् । परमार्थसमर्थिनीं ॥ सभाजनः परब्र·
ह्मा—स्वादमासेदिवानिव ॥ ८९ ॥ सूरिवाक्यसुधासेका—द्युक्तं क्षेत्रे सभासदां ॥ पुलकच्छद्मतः
प्रादु—र्भूताः पुण्यांकुरोत्कराः ॥ ९० ॥ दत्तशिक्षस्तदा शिष्यः । समुत्थाय सभास्थितैः ॥ दृश्यमा·
नो ग्रहिलव—त्प्रभोरासनमाकृषत ॥ ९१ ॥ आकृष्टेऽप्यासने तिष्ठ—न्निराधारः सुपर्ववत् ॥ अस्व·

तद्वचनत्वेन । तथैव व्याकृत प्रभुः ॥ ९२ ॥ तं तथालोक्य चौलुक्य—मुख्यो लोकोऽतिविस्मयात् ॥ चित्रन्यस्त इव स्थित्वा । क्षणं चेतस्यचिंतयत ॥ ९३ ॥ देवबोधिः पुरा दृष्टो । यः कलाकेलि· मंदिरं ॥ रांत्रं सुखासनं तस्या—प्यासीदाधारकारणं ॥ ९४ ॥ किंत्र मौनेन तस्य स्युः । सुजयाः कायवाग्यवः ॥ व्याख्यां वितन्वतस्त्वस्य । स्थितिरेषातिकौतुकं ॥ ९५ ॥ किं सिद्धः किमयं बुद्धः । किं विरंचिः किमीश्वरः ॥ अन्यथा कथमेतादृक् । शक्तिरस्य व्यवस्यति ॥ ९६ ॥ निरालंबस्थिति· कला । गुरवस्ते न वेत्ति नः ॥ संदेहं छेत्तुमेवैता—मसौ दर्शयति स्वयं ॥ ९७ ॥ चकासतीह सूरींद्रा । कला एव न केवलं ॥ सर्वज्ञत्वमपि व्यक्तं । परचित्तावधारणात् ॥ ९८ ॥ तदा तत्रैव सू· रींद्र—र्वर्षन्निव सुधाक्षरं ॥ सार्धं यामं विधत्तेस्म । व्याख्यां रसतरंगिणीं ॥ ९९ ॥ अथासनं तम· प्यास्य । गूर्जरेशोऽवदत्पुरः ॥ स्मितपूरबलात्पुष्प—प्रकरं विकिरन्निव ॥ १०० ॥ कलावानपरस्ताव· त् । कलाशालींडुवन प्रभो ॥ भवान् प्रद्योतनो याव—द्विद्योद्योतेन न स्फुरेत् ॥ १ ॥ ततः सूरि· र्महीपतिं । निन्येऽपवरकांतरे ॥ देवतावसरं देव । मम पश्येत्युदीरयन् ॥ २ ॥ स तत्र मंत्रशक्त्या तान् । नाभेयप्रमुखान् जिनान् ॥ पूर्वजांश्चापि चौलुक्यान् । कृष्ठा पश्येति तं जगौ ॥ ४ ॥ मणी·

मये महीभागे । परतीर्थकुरंगकान् ॥ त्रासं नेतुमिव स्वर्ण—मृगेंद्रासनमाश्रितान् ॥ ५ ॥ धर्मं च·
तुर्विधं लोकां—श्चतुर्दिक्समुपागतान् ॥ समकालं समाख्यातु—मिव क्लृप्तचतुर्मुखान् ॥ ६ ॥ भव·
स्थत्वेऽपि निःकर्म—तया मुक्तिं गतानिव ॥ चतुर्देवनिकायैश्च । सेव्यमानान् समंततः ॥ ७ ॥ व
र्यत्रिजगदैश्वर्य—याज्ञां कर्तुमिवाग्रतः ॥ सेव्यमानान् सुरीन्दैः—श्चौलुक्याद्यैश्च ज्ञुधवैः ॥ ८ ॥ ना·
भेयं प्रमुखीकृत्य । श्रीवीरचरमान् जिनान् ॥ यथाश्रुतस्फुरद्रूपान् । दृष्टवान् गूर्जरेश्वरः ॥ ९ ॥ ष·
ड्भिः कुलकं ॥ तद्दर्शनेंदुनोद्वेल—प्रमोदक्षीरनीरधौ ॥ निमज्जन्निव भूजानिः । क्षणं नाज्ञास्त किं·
चन ॥ ९ ॥ ततश्चौलुक्यमादाय । हेमसूरिः सगौरवं ॥ नमस्कृत्य जिनाधीशां—स्तेषामग्रे निषेदि·
वान् ॥ १० ॥ राजानं ते जिनाः प्रोचुः । कुर्वाणा इव कर्णयोः ॥ माधुर्यवर्यया वाण्या । सरसामृ·
तवर्षणं ॥ ११ ॥ बहवोऽपि विवेक्तारः । संति स्वर्णादिवस्तुषु ॥ धर्मतत्वे विवेक्ता तु । कोऽपि क्वा·
प्यतिनिष्णधीः ॥ १२ ॥ एकस्त्वेकस्त्वमेवासि । येन धर्मं वधात्मकं ॥ हित्वाश्मानमिवादद्रे । दया·
मूलः स रत्नवत ॥ १३ ॥ हृत्प्रियंकरणी संप—द्दीप्यते या नृपादिषु ॥ धर्मद्रुमस्य सा पुष्पं । फलं
मुक्तिरमास्पदं ॥ १४ ॥ नृपत्वचक्रवर्तित्व—शक्रत्वार्हत्ववैभवं ॥ न दूरे तस्य यस्य स्या—द्धर्मचिं·

तामणिः करे ॥ १५ ॥ अत्रांतरा तवैवेह—स्त्वाग्यत्वंगी विजृंभते ॥ हेमाचार्यो यया प्राप्त—स्त्व या तत्वनिधिर्गुरुः ॥ १६ ॥

अथ पूर्वे चुलुक्याद्या । हेमसूरिं प्रणम्य तं ॥ समालिंग्य च चौलुक्यं । प्रमोदादिदमूचिरे ॥ ॥ १७ ॥ वत्स विम वयं वत्स । त्वयैव ननु पुत्रिणः ॥ यः कापथं परित्यज्य । भेजे सत्पथपांथतां ॥ ॥ १८ ॥ जिनधर्मं विधायैनं । न कुलज्ञः प्रभुः परः ॥ यो दत्ते नतिमात्रेण । स्वभृत्येऽन्यः परं पदं ॥ १९ ॥ खेलत्संशयदोलायां । स्थिरीकृत्य मनस्ततः ॥ गुरोः पुरोऽस्य निर्माहि । निर्मायं कृतमात्मनः ॥ १९ ॥ गतेषु तेषु सर्वेषु । नृभृद्दध्यौ शिवादयः ॥ तथावदन् जिनास्त्विहं । तत्सत्यमिदमेव वा ॥ २० ॥ उत्फुल्लचित्तमंगीनि—वल्लिस्तत्तद्वचोंबुभिः ॥ कुमारपालः सूरींद्रं । किमेतदिति पृष्टवान् ॥ २१ ॥ तेन न्यगादि यद्देव—बोधिनादर्शि किं नु तत् ॥ प्रत्यूचे नृपतिर्वेद्मि । न तदप्येतदप्यहं ॥ २२ ॥ शशंस सूरिराट् राज—न्निंद्रजालमयी कला ॥ एकास्ति निस्तुषा तस्य । पार्श्वे मम तु सम ताः ॥ २३ ॥ तद्भक्त्या स्वप्नवत्सर्व—मावाभ्यां दर्शितं तव ॥ न प्रत्येपि तदाचक्ष्व । विश्वमप्यव दर्शये ॥ २४ ॥ परं न किंचिदेवैतत । कूटनाटकपाट्यात ॥ सत्यं तदेव यद्देवः । सोमे-

शस्त्वां तदादिशत् ॥ २५ ॥ एवं प्रभुवचोवीचि—सेचनेन हृदंतरात् ॥ निःशांतस्वांतसंतापः । क्ष्मापः प्राप स्वमालयं ॥ २६ ॥ अथोपदेशपीयूष—पानार्थं समुपागतं ॥ कुमारपालं प्रत्यूचे । सूरिर्धाराधरध्वनिः ॥ २७ ॥ क्षीराब्धेरमृतं घनाद्धिनरणं वाणीविलासाद्दतं । शालात्सत्फलमंगकादुपकृतिर्वंशाच्च मुक्तामणिः ॥ मृत्स्नायाः कनकं सुमात्परिमलः पंकात्पयोजं यथा । निःसारात्पुरुषायुषः सुचरितं सारं तथाकृष्यतां ॥ २८ ॥ तत्पुण्यमेव नैपुण्या—ज्जागदे जगदीश्वरैः ॥ प्रवर्धते श्रियः स्मेरा । यस्मात्कंदाल्लता इव ॥ २९ ॥ यत्र वा तत्र वा यातु । यद्वा तद्वा व्यवस्यतु ॥ अश्नुते पुण्यवान् लक्ष्मीं । वीरांगदकुमारवत् ॥ ३० ॥

द्वीपोऽत्र जंबूद्वीपोऽस्ति । पद्मायाः सद्म पद्मवत् ॥ लवणोदजलैर्लोलैः । परितोऽपि परिष्कृतः ॥ ३१ ॥ तदीये भरतक्षेत्रे । मध्यदेशैकभूषणं ॥ स्वर्गश्रीविजयेनेव । नाम्नासीद्विजयं पुरं ॥ ३२ ॥ निशांतमौलिविश्रांत—वातभ्रांतध्वजे व्रजे ॥ लीनेव लोलता यत्र । श्रीषु स्त्रीषु च नैक्ष्यत ॥३३॥ शूरः शूरांगदस्तत्र । बभूव क्षितिवल्लभः ॥ शिक्षिता यत्कृपाणेन । प्रणाशं वैरिणो रणे ॥ ३४ ॥ क्षीरांभोधिरधोंशुकं सुरसरित्संव्यानलीलास्पदं । खं वै कंचुलिकोरुतारकततिर्मुक्ताकलापः किल ॥

वक्त्रश्रीपरिवीक्षणे तुहिनरुग्बिंबं मणीदर्पणः । श्वेतांभोजवनं च केलिकमलं यत्कीर्तिधामनुव. ॥३५॥ तस्य वीरमतीत्यासीत् । प्राणेभ्योऽपि प्रिया प्रिया ॥ आसेदुस्त्रिदिवं देव्यो । यत्कांतिविजिता इव ॥ ३६ ॥ अमात्यो मतिसारोऽभू—त्तस्य राज्यधुरंधरः ॥ मिलित्वैवैकतो विश्व—बुद्धिर्यन्मनसि स्थिता ॥ ३७ ॥ तस्मिन् धुर्य इव न्यस्य । राज्यं शूरांगदप्रभुः ॥ वीरमत्या समं रेमे । रोहिण्येव निशाकरः ॥ ३८ ॥ वीरमत्यन्यदा वन्य—दावाग्निप्रतिमप्रभं ॥ तनयं जनयामास । रत्नं रत्नखनी य था ॥ ३९ ॥ शूरांगदः समाकृत्य । यथामहिमतन्महं ॥ तस्य नाम गुणोद्दामं । वीरांगद इति व्य धात् ॥ ४० ॥ अमात्यो मतिसारोऽपि । तदा प्राप्योत्तमं सुतं ॥ आहूतवान् प्रमोदेन । सुमित्रेत्य भिधानतः ॥ ४१ ॥ वीरांगदः सुमित्रश्च । तावुभावधिकौजसौ ॥ कुलोद्योतकरौ जातौ । सूर्यचंद्रम साविव ॥ ४२ ॥ स्वत्रत्वं सरलत्वं च । दधतोर्दीर्घदर्शिनोः ॥ आशैशवात्तयोरासी—त्प्रीतिर्लोचन योरिव ॥ ४३ ॥ न विधुकैरवयोर्घनकेकिनो—स्तपनपंकजयोः प्रतिजाति तत ॥ हृदयहृत्सुहृदामपि सौहृदं । यदभवन्नृपमंत्रितनूजयोः ॥ ४४ ॥ तावधीत्य कलाः सर्वा । बुद्ध्या सर्वप्रवीनया ॥ तद्विदां गर्वसर्वस्वं । लीलयैवापजह्रतुः ॥ ४५ ॥ लब्धा च यौवनं विश्व—युवतीचित्तहर्षदं ॥ स्वकीयान

ष्परूपश्री—हारिणौ तौ बभूवतुः ॥ ४७ ॥ वक्षोऽभूद्विपुलं धिया सह कृशं मध्यं सहारिश्रिया । पुष्टं वर्ष्म सहोदयेन च सह श्मश्रूद्गतं तेजसा ॥ पीनं बाहुयुगं सहैव यशसा स्कंधौ समभ्युन्नतौ । माहात्म्येन सहांगजस्य नृपतेस्तारुण्यमासेदुषः ॥ ४८ ॥

पाणिमात्रममुना विभूष्यते । स्वर्णकंकणमिति त्यजन् करे ॥ श्रीकरं स्वपरयोर्नृपांगजः । स द्विधाप्यधित दानकंकणं ॥ ४९ ॥ वीरांगदः समित्रोऽपि । सवसंत इव स्मरः ॥ ह्यमुद्यानमन्येद्युः । अयतिस्म रिरंसया ॥ ५० ॥ तस्मिन् स्मेरसुमस्तोमे । क्रीडित्वा स्वेच्छया चिरं ॥ स्नात्वा च सारसे नीरे । ववले स्वगृहंप्रति ॥ ५१ ॥ मृत्युक्रांत इव भ्रांत—स्वांतः कोऽपि पुमान् पथि ॥ ब्रुवन्मां रक्ष रक्षेति । कुमारं शरणं श्रितः ॥ ५२ ॥ मा भैषीरिति वाक्येना—श्वासयंस्तं नृपात्मजः ॥ दृष्टवान् करवालोग्रा—नग्रतो राजसेवकान् ॥ ५३ ॥ कोऽयं पुमान् किमागोऽस्य । पृष्टे यूयं किमागताः ॥ इति पृष्टाः कुमारेण । ते कृतांजलयो जगुः ॥ ५४ ॥ स्वामिन्नयं परास्कंदी । पुरास्कंदी तवाभितः ॥ जह्रे धनानि लोकानां । जीवितव्यानि मृत्युवत् ॥ ५५ ॥ प्रविशन्निर्यंश्चापि । स्वेच्छयायं पुरांतरे ॥ आत्मेव लोकैर्नालोकि । विलोकितपरैरपि ॥ ५६ ॥ हृत्वाद्य कोशं क्ष्मापस्य । न-

अत्र दस्युरयं स्यात ॥ दध्रे स्थित्वाग्नितोऽस्माभि—र्जन्मीव निजकर्मभिः ॥ ५७ ॥ शूरांगदनिदे-
शेन । हंतुं प्रस्थापितस्ततः ॥ नंष्ट्वा शशकवत्सोऽयं । चक्रे त्वां शरणं गुणिन् ॥ ५८ ॥ तदयं दी-
यतां स्वामि—न्नये दृष्टिर्विधीयतां ॥ एनं स्तेनं यथा हत्वा । सतां शांतिं वितन्महे ॥ ५९ ॥ श्रु-
त्वेति नानथावादी—द्याखुर्नृपनंदनः ॥ शीर्षच्छेद्यो यदप्येष । मया देयस्तथापि न ॥ ६० ॥ यथा
चंदननश्चंद्र—स्तपनात्तपनो यथा ॥ क्षतात् त्राणात्तथा क्षत्र—शब्दोऽन्वर्थो जने श्रुतः ॥ ६१ ॥
एतमत्रायमाणस्य । क्षत्रशब्दो भवेन्मम ॥ इंद्रगोपेति नामेव । कीटस्य व्यर्थतास्पदं ॥ ६२ ॥ को-
ऽभिमानो भवेत्तस्य । यदीयशरणागतः ॥ स्वैरं बंभ्रम्यते नैव । निर्भीको मत्तहस्तिवत ॥ ६३ ॥
अचेतनास्तं तरवोऽपि वर्ल्मा—स्तापादुपेतं प्रतिपालयंतः ॥ सचेतनास्ते न पुनः पुमांसो—ऽप्य-
वंति नीतेर्न जनं श्रितं ये ॥ ६४ ॥ शरणार्तपरित्राण—वृत्तं मे रक्षितुं ततः ॥ चौरोऽयं दयया
न्याय—हीनोऽपि त्यज्यतां नराः ॥ ६५ ॥ अवोचंस्ते पुनः स्वामिं—स्त्रातेऽस्मिन् स्वस्य किं फलं
॥ मुक्त एव पुनर्लोक—मयं क्लेशयितास्त्रिवत् ॥ ६६ ॥ स्तेनो व्याधिः खलोऽग्निश्च । चत्वारोऽमी
शुनेप्सुना ॥ जन्मुख्याः कंदवन्मूला—द्रक्षिताश्चेद्विकुर्वति ॥ ६७ ॥ दुर्जनोच्छेदतः साधु—लोकं पा-

लयति प्रभुः ॥ यथा विश्वं तमोध्वंसा—त्प्रकाशयति भास्करः ॥ ६८ ॥ यश्चौरपक्षपातेन । साधुक्लेशप्रवर्धनं ॥ तद् दृषल्लोष्ठुपत्वेन । चिंतामणिविचूर्णनं ॥ ६९ ॥ किंचान्याय्यमिदं ज्ञात्वा । न्यायीभूतः पितापि ते ॥ असूयिष्यति तत्कालं । घातयिष्यति चास्मकान् ॥ ७० ॥ अंतःस्फुरत्कृपाकुल्या—लहरीमिव दर्शयन् ॥ दंतांशुदंभतो वीरां—गदस्तानवदत्पुनः ॥ ७१ ॥ भवद्भिर्न्यायसर्वस्वं । यदुदाहारि हारितं ॥ परं क्षत्रियधर्मोऽपि । वीक्ष्यतां क्षत्रियाः स्थ चेत् ॥ ७२ ॥ क्षत्रियाणामयं धर्मः । शास्त्रे लोके च विश्रुतः ॥ यदार्त्तस्य परित्राणं । धनैः प्राणैरपि ध्रुवं ॥ ७३ ॥ शेषः स्वशेखरमणिं रमणीं विवोढा । स्तंबेरमो द्विदशनीं मृगराट् स्वशौर्यं ॥ साधुर्व्रतं भटजनः शरणागतं च । जीवन्न मुंचति परं म्रियते कदाचित ॥ ७४ ॥ विश्वे चात्ममयेऽस्मिन् कः । पाव्यते कश्च हिंस्यते ॥ कृपैव केवलं जन्या । सार्वजन्याश्रिते जने ॥ ७५ ॥ तद्यात यूयं राज्ञश्चे—द्बिभीथ ब्रूथ मद्गिरा ॥ बलाद्देवसुतोऽस्मत्तो । मलिम्लुचममूमुचत् ॥ ७७ ॥ इत्युक्त्वा प्रेष्य योधांस्तान् । स्तेनं वीरांगदोऽवदत् ॥ अतः प्रभृति चौर्यं च । न विधेयं त्वयानघ ॥ ७८ ॥ दुर्ध्यानोदकसिक्तस्य । कुकर्मद्रोर्वधादिकं ॥ पुष्पमत्र फलं प्रेत्य । नारकीयकदर्थना ॥ ७९ ॥ सत्सूपायेषु धर्म्येषु । चौर्यं कुर्वीत कः

सुधीः ॥ आम्रेष्वाम्रेषु पक्केषु । कोऽद्यान्निंबफलोत्करं ॥ ८० ॥ मया कृत्वा कियत्क्लेशं । यदिदानीम-
मोच्यथाः ॥ पुनर्मोचयिता कस्त्वां । चरंश्चौर्यं धृतो यदि ॥ ८१ ॥
प्राणापहारि तच्चौर्यं । वर्जयित्वा विषोपमं ॥ साधो सुधोपमं धर्मं । सेवस्व स्वप्रियंकरं ॥८२॥
ततः प्रबोधपीयूष—पानोन्मीलितचेतनः ॥ वीरांगदं प्रणम्योच्चैः । प्रोचिवान् स मलिम्लुचः ॥८४॥
स्वामिंस्त्वं मे पिता माता । त्राता प्राणप्रदोऽसि च ॥ येन वै व्यसनादस्मा—त्कीनाशादिव रक्षि-
तः ॥ ८५ ॥ भवेऽस्मिन्न भवेयुश्चे—त्साधवस्त्वादृशा घनाः ॥ विपत्तनूनपात्ताप—तप्ता पृथ्वी कथं
भवेत ॥ ८६ ॥ निःस्वोऽहं जीवजीवातो—स्तव स्यामनृणः कथं ॥ चौर्यवर्जनमेवास्तु । मद्भक्तिस्त्व-
यि तत्स्थिरा ॥ ८७ ॥ ब्रुवंतमिति चौरं तं । सर्वांगीणस्वभूषणैः ॥ सत्कृत्य स कृती प्रैषी—दहो व-
त्सलता सतां ॥ ८८ ॥ श्रुत्वैतन्मत्कृतं कृत्यं । तातः कुप्यति मे न वा ॥ इति जिज्ञासया तस्थौ ।
क्षणं तत्रैव भूपभूः ॥ ८९ ॥ शूरांगदोऽथ भृत्येभ्यः । श्रुत्वा तत्पुत्रचेष्टितं ॥ विकटभृकुटिव्यक्त—
क्रोधस्तानभ्यधादिदं ॥ ९० ॥ कुतः परोऽथ संजात—स्तनयोऽस्तनयो मम ॥ पाटच्चरपरित्राणात् ।
प्राणहृद्यो जनेऽजनि ॥ ९१ ॥ अन्यायी यदयं जातो । मत्तो न्यायैकजीवितात् ॥ किमंगारमयी

मया निग्राहितं स्तेनं । रक्षन्नेष विशेषतः ॥ अहो मावृष्टिः । सा न सोमात्सुधालयात ॥ ८२ ॥ पितुः परोऽपि मान्यः स्या—न्नयी पुत्रोऽपि नानयी मत्यवामंस्त । तदयं द्विट् सुतब्रलात् ॥ ८३ ॥ तद्गटा यात रे यूयं । प्रणिगद्य म॰ ॥ भानोः शनिरसन्न द्वेष्यः । कोकः सन्निति वल्लभः ॥ ८४ ॥ मोदितं ॥ ममादेशेन तं देशा—न्निर्वासयत चौरवत ॥ ८५ ॥

एत्य जूपन्नटास्तेऽथ । कुमाराय भयाकुलाः ॥ कथंचित्कथयामासुः । सर्वमुर्वीपजल्पितं ॥८६॥ निशम्य तद्भृशं तुष्टो । भूपन्नलब्धराज्यवत् ॥ यथेच्छमधुना धात्रीं । द्रक्ष्यामीति महोत्सवात् ॥८७॥ तदावादीत्सुमित्रस्त—महो दैवस्य दौष्टवं ॥ गुणोऽपि दूषणीचक्रे । दुर्जनेनेव येन हि ॥ ८८ ॥ गुण एव भवेत्प्रायः । प्राणिनां क्लेशहेतवे ॥ वक्तृत्वमेव बंधाय । शुकानां यत्प्रगल्भते ॥ ८९ ॥ ततो वीक्ष्य निजं मित्रं । म्लानवक्रं दिनेंदुवत् ॥ पक्ष्मवोन्निद्रितस्मेर—मुखो वीरांगदोऽवदत ॥१००॥ सखे मा खिद्यथाः संतः । परस्योपचिकीर्षया ॥ सहंते दुस्सहं क्लेशं । पथिस्थः पलितद्रुवत् ॥१॥ संतः परोपकारोत्था । विपत्तिरपि सुंदरा ॥ गीर्वाणप्रीणनोत्पन्ना । क्षीणतेवामृतद्युतेः ॥ २ ॥ उत्कंठुलं पुराप्यासी—न्मच्चित्तं देशदर्शने ॥ तातादेशस्तु योऽत्रायं । सदुग्धे शर्करोपमः ॥ ३ ॥ प्रौढा

श्रीश्चतुंगः समं परिचितिर्विद्यानवद्या तथा । नानाज्ञापितवेपलिप्यधिगतिः कुंदावदातं यशः ॥ धीरत्वं मनसः प्रतीतिरपि च स्वीये गुणौघे सतां । मानोत्को न गुणोदयः प्रसरति ह्यामंमल्लालोकनात् ॥ ४ ॥ अचेतनोऽपि वातश्चे—द्वने भ्राम्यन् ससौरभः ॥ सचेतनः पुमांस्तर्हि । भुवि क्रीडन्न किं गुणी ॥ ५ ॥ तन्मित्र गच्छ गेहे त्वं । मार्गस्ते मास्तु दुःखदः ॥ अहं देशांतरं यामि । पित्रादेशवशंवदः ॥ ६ ॥ सुमित्रः प्राह किं स्वामिन् । गच्छेत्युक्तमसद्वचः ॥ विहाय देहिनं देहः । किं निःस्नेहः प्रयाति हि ॥ ७ ॥ नाप्यापि दुःखकृद्भावा—त्त्वत्सेवारसिकस्य मे ॥ दारिद्र्योपद्रवः किं स्यात् । कल्पद्रुमजुषोंगिनः ॥ ८ ॥ स प्रतिष्ठः प्रतिष्ठस्व । यद्येवं तर्हि सत्वरं ॥ इत्युक्त्वा स समित्रोऽपि । कुमारः प्रस्थितस्ततः ॥ ९ ॥ मुखश्रीः सदने यासी—द्दासीकृतसितद्युतिः ॥ तयोः सैव प्रवासेऽपि । श्रीरिमाह्वो महात्मनां ॥ १० ॥ उत्सवे व्यसनेऽपि स्यात् । समं रूपं महीयसां ॥ पूर्वं मंथस्य पश्चात्र । सैव मुद्रा महोदधेः ॥ ११ ॥ ज्ञात्वा तौ प्रस्थितौ संत—स्तद्गुणग्राममोहिताः ॥ उपेत्य बंधुवत्पृष्ठे । लोकाः शोकाश्रुजिह्रपन् ॥ १२ ॥ परोपकारिणां धुर्यः । शरण्यः शरणैषिणां ॥ नयनानंदन· कासि । प्रस्थितो नृपनंदन ॥ १३ ॥

प्रज्ञाढ्यस्यापि राज्ञोऽस्य । कुतोऽद्य जडिमाजनि ॥ यत्त्वां देहादिवात्मानं । निर्वासयति मंदि-
रात ॥ १४ ॥ सच्चक्रोल्लासके स्वामिन् । प्रस्थिते त्वयि भास्वति ॥ पुरे शोकमयं भावि । लोकांध-
करणं तमः ॥ १५ ॥ अद्यास्मद्भाग्यभंगीभि—रंगीचक्रे किमु व्ययः ॥ यदस्मत्पुरतो यासि । त्वं
तात इव वत्सलः ॥ १६ ॥ इति विज्ञप्तिवत्पौरान् । गुणश्रेणिवशंवदान् ॥ कथंचिदपि संस्थाप्य ।
नगरात्तौ निरीयतुः ॥ १७ ॥ षड्भिः कुलकं ॥ गोष्ठ्या सुधासधर्मिण्या—न्योन्यं संतन्यमानया ॥
स्थानस्थाविव तौ मार्गे । नाज्ञासातां मनागपि ॥ १८ ॥ आक्रम्य कियतीं भूमिं । तौ नृपामात्यनं-
दनौ ॥ राजधानीमिव भिया—मरण्यानीमवापतुः ॥ १९ ॥ तरूणां यत्र बह्वी श्रीः । श्वापदानां स्व-
तंत्रता ॥ अंधकारस्य साम्राज्यं । विपदां परमं महः ॥ २० ॥ अल्पीयस्यामतीतायां । तस्यां ताभ्यां
शनैः शनैः ॥ ब्रुवन्निव भवास्थैर्यं । दिनांतस्तावदापतत् ॥ २१ ॥ उदयव्ययमहं यदि । सूरोऽपि
लभेऽन्वहं ततः कतरः ॥ स्थिर इत्युदीरयन्निव । तौ कंपन् रविस्तदास्तवांस्तूर्णं ॥ २२ ॥ पत्यावस्त-
मिते शूरे । तद्वियोगमसासहिः ॥ दिनश्रीः प्राविशन्नूनं । सांध्यरागहुताशने ॥ २३ ॥ पित्रोरपि
हृदि प्रीतिः । स्वभावान्मद्वदस्थिरा ॥ वदंतीवेति तौ पत्रि—ध्वानैः संध्याप्यगात्क्वचित् ॥ २४ ॥ मि-

त्रऽस्तमितवत्याशु । तिमिरोत्करकैतवात् ॥ लोकः प्रसृत्वरास्तोक—शोकः स्थानेऽस्तितोऽभवत् ॥२५॥ दृष्ट्वा पश्चिमपाथोधौ । नूनं तरणिमज्जनं ॥ तदुद्दिधीर्षयेवात्र । तारकाः प्रदधाविरे ॥ २६ ॥ एवं प्रदोषे मोन्मेषे । न्यग्रोधस्य तले क्वचित् ॥ सुप्तो वीरांगदो वस्त्र—स्रस्तरे स्मृतदैवतः ॥ २७ ॥ नाम्नि जागरतो नीति—रिति सन्नीतिरीतिभृत ॥ सुमित्रो यामिकत्वेन । तस्थौ तत्परिपार्श्विकः ॥ ॥ २८ ॥ अहं राजास्म्ययं राज—सूनुः श्रांतः करामृतैः ॥ श्रमं निर्वापयामीति । मन्ये सोमस्तदोदगात् ॥ २९ ॥ निष्कलंकः कुमारस्य । मुखेंदुर्मां कलंकिनं ॥ हसिष्यतीति ध्यात्वेव । मंदामिंदुः समुद्ययौ ॥ ३० ॥ नीष्मे तमोभृतेऽरण्ये । मास्मत्रस्यमेतयोः ॥ नूनं व्यधाद्विधिस्तस्यो—परि चंद्रोदयं तदा ॥ ३१ ॥ सांद्रैः प्रक्षालितं चांद्रै—र्ज्योत्स्नाजालैर्जलैरिव ॥ घटितं स्फटिकेनेव । तदा रोदोंतरं बभौ ॥ ३२ ॥ चंद्रातपेऽप्यतंद्रात्त्रु—द्युतिद्योतितदिङ्मुखः ॥ अत्रागत्य सुरः कोऽपि । सुमित्रमिदमूचिवान् ॥ ३३ ॥ अत्रास्म्यहं वटे यक्षो । मदीयं स्थानमागतः ॥ कुमारः सत्वसारोऽयमातिथेयीमनोऽर्हति ॥ ३४ ॥ सुखं सोपुष्यमाणोऽस्ति । सखे वीरांगदोऽधुना ॥ मया नथ्यं किमातिथ्यं । पथ्यं कथ्यं त्वया मम ॥ ३५ ॥ अहो मूर्तिरहो स्फूर्ति—रिति चित्रीयमाणहृत ॥ नत्वा

तं च सुहृद्भक्तः । सुमित्रः प्रोचिवान् वचः ॥ ३६ ॥ तप्यंते कतिचित्तपांसि कतिचिन्मंत्रान्मुदोपासते । विद्यां केऽपि जपंति केऽपि दहने मांसं निजं जुह्वति ॥ स्थित्वा प्रेतवने नयंति कतिचिद्ध्यानेन सर्वां निशां । मर्त्यानां न तथापि दर्शनपथं प्रायः श्रयंते सुराः ॥ ३७ ॥ ततो निधिमिव प्राप्य । दुरापं तव दर्शनं ॥ देव संपन्नवानस्मि । कृतार्थः प्रार्थये किमु ॥ ३८ ॥ देहीति दानक्षण एव रम्यं । वचो न याञ्चावसरे कदाचित् ॥ अह्न्येव शङ्करमिंद्रचापं । रात्रौ पुनर्दृष्टमरिष्टहेतुः ॥ ॥ ४१ ॥ तथापि किंचिद्याचस्वे—त्युक्तः स तुसदा पुनः ॥ नायाचीत्सर्वथा स्वेष्ट—महो सत्पुरुषव्रतं ॥ ४२ ॥ स्वयं यक्षस्ततो दत्वा । नीलशोणं मणिद्वयं ॥ तमन्वाषिष्ट विस्पष्टं । श्रूयतामनयोर्महः ॥ ४३ ॥ अयं नीलमणिर्देय—स्त्वयास्मै राजसूनवे ॥ उपवासत्रयाराद्धो । वैभवं वितनिष्यति ॥ ४४ ॥ मायां सप्रणवां जप्त्वा । पूज्यः शोणमणिस्त्वया ॥ अमितां कामितां चिंता—मणिवद्दास्यति श्रियं ॥ ४५ ॥

उदित्वेति गते देवे । सुमित्रस्तन्मणिद्वयं ॥ रविबिंबवदुद्दाम—धाम दृष्ट्वा परामृशत् ॥४६॥ अहो पुण्यस्य महिमा । विचित्रोऽस्ति जगत्त्रये ॥ चिंतामण्यादयोऽपि स्यु—र्यत्प्रभावेण सेवकाः

॥ ४७ ॥ लक्ष्मीमानयति श्रियं प्रथयति प्रत्यूहमुन्मूलति । युद्धे विद्विट्बलं दिनष्टि हरति व्याघ्रादिजं
भयं ॥ कांतारे सह् चंक्रमीति दिविषद्वर्गं विधत्ते वशं । पुण्यं पुण्यवतां न किं वितनुते प्राचीनमू-
र्जस्वलं ॥ ४८ ॥ सुमित्रे चिंतयत्येवं । जजागार नृपांगजः ॥ क्षणं त्वमपि शेष्वेति । जल्पित्वा न-
मस्वपुपत ॥ ४९ ॥ दोषोच्छेदकरं निम्न—रुचिं मांत्रिकवत्ततः ॥ मत्वेवागामिनं नंष्टा । पिशाचीव
निशा यथौ ॥ ५० ॥ निषेव्य वारुणीं रागा—त्कलंकं प्रकटं वहन् ॥ विधुर्द्विजाधिराजोऽपि । युक्तमेव निपतितवान् ॥ ५१ ॥ नभोवनांतरे यानि । निशायां व्यकसन्नलं ॥ तानि तारप्रसूनानि ।
प्रातर्माली किलाग्रहीत ॥ ५२ ॥ वर्तते मम सज्जाति—र्महसायं महीपसूः ॥ पश्याम्येनमितीवागा
—दुदयाद्रिं दिवाकरः ॥ ५३ ॥ उड्डीयमाना वृक्षेभ्यः । पक्षिणः स्वस्वरैस्तदा ॥ प्रातर्वैतालिकीभूय
। कुमारप्रति नेजिरे ॥ ५४ ॥ प्रभाते च नृपामात्य—पुत्रौ ध्यात्वा स्वदैवतं ॥ प्रतस्थाते पुरो मा-
र्गे । भक्त नंदाम्बुनां हि कः ॥ ५५ ॥ मणीव्यतिकरं नैशं । वक्तुं योग्यमपि द्रुतं ॥ सुमित्रो नो-
चिवान् मित्रं । समये वदितेतिधीः ॥ ५६ ॥ दुरध्वेऽपि व्रजंतौ तौ । प्राग्विपक्तिमपुण्यतः ॥ मात्रा-
द्रिगपि सिद्धार्थे—र्वेवाधीतेन सिद्धवत् ॥ ५७ ॥ सललाटंतपे शूरे । कुमारो मित्रमब्रवीत् ॥ जाता

ह्यशनवेलेयं । किं भोज्यं भुज्यते भण ॥ ५८ ॥ मणिप्रसादनाहेतो—रुपवासत्वयं स्वयं ॥ कुमारः सुकुमारत्वा—न्न करिष्यति कर्हिचित् ॥ ५९ ॥ तस्मात्केनाप्युपायेन । तदहं कारयेऽमुना ॥ विमृश्येति सुमित्रस्त—मूचे मतिमतां वर. ॥ ६० ॥ युग्मं ॥ स्वामिन्नानायि पाथेयं । शून्येऽत्रास्ति न किंचन ॥ पचेलिमापि ह्यज्ञाता । फलश्रेणिरिहत्यका ॥ ६१ ॥ अविज्ञातफलास्वादा—दनर्थः कोऽपि मास्तु नौ ॥ उपवास्येति बुध्वा तं । सुहृत्स्वेनाप्युपावसत् ॥ ६२ ॥ युग्मं ॥ एवमन्यद्यहं पुण्य—पोषितौ तावुपोषितौ ॥ तुरीयेऽहनि कांतार—प्रांतं कांतमवापतुः ॥ ६३ ॥ श्रीविशालं महाशाल—पुरोद्यानं प्रपद्य च ॥ हंसवत्सरसि स्नात्वा । श्रमं नोदयत.स्म तौ ॥ ६४ ॥

वीरांगदो जगादाथ । कृतोन्माथः क्षुधा सखे ॥ प्राणा मम प्रयांतीव । कुतोऽप्यानय भोजनं ॥ ६५ ॥ सुमित्रः प्राह निस्तीर्णो । विस्तीर्णो विपदर्णवः ॥ प्रतीक्षस्व क्षणं येन । भोजये दिव्यभोजनं ॥ ६६ ॥ राजसूनुः पुनः प्रोचे । त्र्यहं प्रागुपवासितः ॥ प्रतीक्षयसि चाद्यापि । तद्दातासि न मेऽशनं ॥ ६७ ॥ दत्वा नीलमणिं तस्मै । प्रसूनान्युपढौक्य च ॥ ऊचे सचिवपुत्रोऽयं । मणिर्हि विधिनार्च्यतां ॥ ६८ ॥ एतदर्थं मया मार्गे । त्वमुपावास्यथास्त्र्यहं ॥ यतस्तपो विना सिद्धि—

कुमार· चरित्रं ११३

नं स्यात्पुण्यस्पृशामपि ॥ ६९ ॥ तापयत्यपि तनूं गुरुतापैः । शोषयत्यपि रसांस्तव एव ॥ तापने क·
मलिनीव समस्ता । मित्त्रिगेति रतिमद्भुतमेतत् ॥ ७० ॥ असहित्वा च कः क्लेशं । जनः श्रीनाज·
नं त्यजेत् ॥ कर्णौ स्वर्णेन संपूर्णौ । यस्य वेधादिकष्टतः ॥ ७१ ॥ अयं मणिः प्रसन्नश्च । राज्यं वि·
श्राणयिष्यति ॥ अचिंत्यो मणिमंत्रादे—र्यत्प्रभावो विजृंभते ॥ ७२ ॥ सोऽपृच्छत्सद्धीर्मित्रं । वि·
स्मेरो मणिवीक्षणात् ॥ व्यश्राणि तुभ्यं केनायं । राज्यदश्च कथं वद ॥ ७३ ॥ वक्ष्याम्यवसरे सर्वं ।
संप्रत्यभ्यर्चयाम्ययं ॥ इत्युक्तः स वयस्येन । प्रारेभे मणिमर्चितुं ॥ ७४ ॥ तावद्दृढः सुमित्रोऽपि ।
पुष्पैरभ्यर्च्य स्थिरधीः ॥ आराध्य मणिं शोणं । यथाख्यातमनुजपन् ॥ ७५ ॥ रत्नाधिष्ठायकः प्रादु
—र्भूय तं प्रोचिवानिति ॥ संतुष्टोऽस्मि स्मृतोऽभ्येत्य । सर्वं कुर्वे त्वदीप्सितं ॥ ७६ ॥ तेन देवप्र·
सादेन । निद्रावेनेव तत्क्षणं ॥ सुमित्रो मित्रवद्दीप्रो । नृपसूनुमुपागमत् ॥ ७७ ॥ तावद्वीरांगदोऽ·
प्युच्चै—र्ध्याननिश्चलमानसः ॥ अर्चयित्वा मणिं सम्यग् । विररामाभिरामरुक् ॥ ७८ ॥ अथाधि·
ष्ठायकं शोण—मणेः स्मृत्वा सुरोत्तमं ॥ सुमित्रोऽर्थितवान् स्थान—भोज्यप्रमुखमद्भुतं ॥ ७९ ॥
प्रेरितास्तेन देवेन । दिव्यालंकारभासुराः ॥ सहसा नभसाभ्येत्य । प्रणेमुस्तौ सुरस्त्रियः ॥ ८० ॥

अंतर्वणं स्फुरद्वात—कुंभस्तंभं तयोः कृते ॥ रत्नकुट्टिमरोचिष्णु । मंदिरं ता विचक्रिरे ॥ ८१ ॥
यत्रासनानि हैमानि । रात्नी चामत्रमंडली ॥ शृंगारवेदी माणिक्य–मयी चित्तं हरत्यलं ॥ ८२ ॥
मन्ये तस्य श्रियं वीक्ष्य । स्वर्विमानोपमानिनीं ॥ देव्योऽपि ताः स्वयं स्थातुं । कामयांचक्रिरे चिरं
॥ ८३ ॥ देवीभिस्तत्र तौ नीतौ । पश्यंतौ तां च दिव्यतां ॥ अनिमेषेक्षणत्वेन । क्षणं जातौ सु-
राविव ॥ ८४ ॥ देव्यस्तौ तैलपिष्टान्या—भ्यज्योद्वर्त्य च स्वयं ॥ देववत्स्नपयामासु—र्नीरैर्हैमघ-
टोक्षितैः ॥ ८५ ॥ निवास्य वाससी दिव्ये । गंगोर्मी इव निर्मले ॥ लिप्त्वा च चंदनाद्यैस्ता । भूष-
णैस्तावभूषयन् ॥ ८६ ॥ एवं तौ स्नानलिप्तालं—कृतांगौ त्रिदशोपमौ ॥ इहापि समजायेतां । कु-
मारौ मणिवैभवात् ॥ ८७ ॥ स्फारवर्णोपलमुखी । पक्काम्रशकलाधरा ॥ मोदकोच्चकुचा मुद्ग—दा-
लीनीलाभकंचुका ॥ ८८ ॥ मंडकाछादना भक्त—क्षौमानायि तयोः पुरः ॥ दिव्या रसवती देव–
स्त्रीभिर्वारवधूरिव ॥ ८९ ॥ प्रागभुक्तां रसाढ्यां तां । स्वैरं रसयतोस्तयोः ॥ रसज्ञाप्यरसज्ञासी—द-
हो माधुर्यमूर्जितं ॥ ९० ॥ वीरांगदं हसित्वोचे । सुहृत् स्वामिन् दिनत्रयं ॥ क्षुधानासीः क्षणोहत्य ।
ततोऽश्नीया यथारुचि ॥ ९१ ॥

सम्यगाचम्य तांबूले । ताभ्यामास्वादिते सति ॥ सुमित्रस्मरणादेव । दिव्यं सर्वं तिरोदधे ॥ ॥ ७२ ॥ दृश्येऽप्यदृश्यतां याते । तस्मिन् जीमूतजालवत् ॥ वयस्यं तद्रहस्यं स । प्रश्नयामास नृपजः ॥ ७३ ॥ विश्रम्यतां क्वचिद्वच्मि । यथेति सुहृदोदितः ॥ स विशश्राम चूततरु—तले निद्रां जगाम च ॥ ७४ ॥ सुमित्रोऽपि निविश्यास्य—सन्निधौ धीनिधिर्हृदि ॥ राज्यं भावि कथंकार—मिति ध्यायन्नवास्थित ॥ ७५ ॥ इतस्तस्मिन् महाशाल—पुरे राजा धनंजयः ॥ पूर्वेद्युर्गाढरोगार्तो । दैवादानंच पंचतां ॥ ७६ ॥ सुतस्तस्य न कोऽप्यासी—दिति संमंत्र्य मंत्रिभिः ॥ संध्यायामभ्यवास्यंत । पंचदिव्यानि भक्तितः ॥ ७७ ॥ प्रातः स्फुर्जत्सु तूर्येषु । राजकीयैर्जनैः सह ॥ स्वयं प्रतस्थिरे तानि । राज्याधिष्ठायकैर्वशात् ॥ ७८ ॥ तेषु भ्रमत्सु सर्वत्र । पुरे पौराः परःशताः ॥ पुरःपुरः स्फुरद्रूपा । राज्यार्थमवतस्थिरे ॥ ७९ ॥ आहूतानीव केनापि । गत्वा तानि द्रुतं ततः ॥ वने तस्मिन्नृपामात्य—पुत्रोपांतं प्रपेदिरे ॥ १०० ॥ स्वयंवरेव राज्यश्री—रापन्नेति मुदं वहन् ॥ सुप्तं जागरयामास । सुमित्रो राजनंदनं ॥ १ ॥ तावत्कराग्रभृंगार—पयोभिरभिषिच्य तं ॥ गर्जन् गजेश्वरो धीरं—गदं पृष्टे न्यवीविशत् ॥ २ ॥ हेषतेस्म हयो हर्षा—द्राज्यश्रीदैवतेन च ॥ तस्य मूर्ध्नि

धृतं छत्र—मवीज्येतां च चामरे ॥ ३ ॥ वीरांगदावलोकेन । लोकानां प्रीतयोंतरे ॥ अमांत्य इव रोमांच—व्याजतो निर्ययुर्बहिः ॥ ४ ॥ तदाध्यासीत्सुमित्रोंत—र्भेजे राज्यं सुहृन्मम ॥ इतोऽयं मां पुरं नीत्वा । नियोगे क्वापि योक्ष्यते ॥ ५ ॥ स्वार्थप्रजार्थराजार्थ—सार्थसाधनचिंतया ॥ नियोगः पारवश्याय । सदा स्याद्दुःखदायकः ॥ ६ ॥ योगादपि नियोगोऽयं । दुःसाध्यः सुधियामपि ॥ योगे साध्यो यदात्मैव । नियोगे त्वखिलं जगत् ॥ ७ ॥ मणिश्चिंतामणिरिव । स्वार्थसंपादकोऽस्ति मे ॥ तत्प्रसादात्कियत्कालं । रमे स्वैरममर्त्यवत् ॥ ८ ॥ उत्तार्य विपदंभोधिं । राज्यं प्रापय्य चोर्जितं ॥ इदानीं मुंचतोऽप्येनं । स्वामिनं मे न दूषणं ॥ ९ ॥ इत्यामृशन्न सुमित्रोऽगा—त्ततः कुंजांतरे क्वचित ॥ पुरलोकमुखालोक—व्यग्रे वीरांगदे सति ॥ १० ॥ षड्भिः कुलकं ॥

अथापश्यन्न सुमित्रं तं । शब्दयित्वा मुहुर्नृपः ॥ आसन्नानादिशन्मित्र—मत्र कुत्रापि दृश्यतां ॥ ११ ॥ सुमित्रेहि सुमित्रेही—त्युच्चरंतः पदे पदे ॥ बभ्रमुस्तत्कृते तेंत—र्वणं वनचरा इव ॥ १२ ॥ अदृष्ट्वा नष्टवत्त तं । नास्तीति प्रोचिरे नृपं ॥ गतसर्वस्ववत्सोऽपि । मानसे दुःखमानशे ॥ १३ ॥ विललाप च तत्कालं । सुमित्र त्वांविनाधुना ॥ वैकल्यं कलयन्नस्मि । देहि वाक्यमुपेहि मां ॥१४॥

कुमार-चरित्रं ३८७

आजन्म प्रतिपाद्य मैत्र्यममं नस्मिन् प्रवासदाणे । पित्रोः स्नेहभरं धनं तनुसुखं मुक्त्वाखिलं मत्कृ-
ते ॥ गर्वित्वा व्यसनं मया सह महाकांतारसंचारजं । राज्ये जानवनीह मे विमुखतां प्राप्तोऽसि क
स्मात् सखे ॥ १५ ॥ राज्यदायिमणीदाना-दुपकृत्य ममाधुना ॥ जीत्या प्रत्युपकारस्य । त्वमवश्यं
पलायित ॥ १६ ॥ क्षितिः सतां काप्युपकृत्य यत्ते । प्रयांति तत्प्रत्युपकारभीता. ॥ निर्वाप्य पृथ्वीं
तपनोपतप्तां । न वारिदा नेत्रपथे स्फुरंति ॥ १७ ॥ वीरांगदस्ततोऽवोच—हृयं व्रजत मंत्रिणः ॥
न मित्रेण विना कार्य—मैश्वर्येणामुना मम ॥ १८ ॥ ते तं विज्ञपयामासुः । स्वामिन्मास्मेदृशं व-
द ॥ दुर्लभा खलु राज्यश्री. । पुण्यैः पृथुतरैरपि ॥ १९ ॥ मित्रं तव सुमित्रोऽयं । नामतो नार्थतः
प्रभो ॥ सम्भवेऽस्मिंस्तवागत्य—तुच्छबुद्धिः पलाय्य यः ॥ २० ॥ भागधेये तवामेये । जाग्रत्यन्येऽपि
मानविनः ॥ वयस्याः सरहस्यास्त—त्यमद्य पुरमाश्रय ॥ २१ ॥ सचिवैरिति संबोध्य । कथंचित्स म-
हीपतिः ॥ सतोरणपताकांकं । स्वपुरं प्रत्यनीयत ॥ २२ ॥ देहेन रूपगेहेन । लोकंप्रीणेस्तथा गुणैः
पुंस्य पौरस्त्रीणां च । हृदयं प्रविवेश सः ॥ २३ ॥ असौ नृपगृहे सिंहा-सनस्थः सुरविंबवत् ॥ म-
हेन महनामात्यैः । सतौरैरभ्यषिच्यत ॥ २४ ॥

घनाघनोदके तस्मि—न्नृपे स्फुरति सर्वतः ॥ तापव्यापविपन्मुक्तं । युक्तं जज्ञे महीतलं ॥२५॥ भूमेरप्सरसो देव—स्त्रियो वानिमिषदृशः ॥ कुमार्यः पर्यणीयंत । वीरांगदमहीभुजा ॥ २६ ॥ कमलाभोगभाजोऽपि । तस्य हन्नीरधेरिव ॥ ऊवैर्वोह्ववसयामास । समित्रविरहोऽन्वहं ॥ २७ ॥ अथास्ताचलचूलाग्र—चुंबिन्यंबुजबांधवे ॥ पुरं कुंजरवत्कुंजा—न्निर्गत्यागात्स मंत्रिसूः ॥ २८ ॥ निशम्य तत्र कस्माच्चि—द्रतिसेनेति नामतः ॥ पुरुषद्वेषिणीं पण्य—स्त्रियं स्त्रैणैकभूषणं ॥ २९ ॥ तल्लावण्यरसास्वाद—सादरे लोचने वहन् ॥ मारवत्स्फारशृंगार—सारस्तद्द्वारमाप सः ॥ ३० ॥ युग्मं ॥ भूमिष्ठमिव देवं तं । कांतं दृष्ट्वापि हृष्टहृत् ॥ मध्ये सौधं समाकार्य । रतिसेना परामृशत् ॥ ३१ ॥ आस्यं पर्वशशी विलोचनयुगं विस्मेरमिंदीवरं । कंठः कंबुरुरश्च कांचनशिला स्कंधौ च पूर्णौ घटौ ॥ बाहू शौर्यगजेंद्रयंत्रणमहालाने करौ चारुणां—भोजे वर्ष्म सुधाशनं नयनयोः केनैष सृष्टो युवा ॥ ३२ ॥ हेपयंतीं रतिमपि । श्रिया तां प्रेक्ष्य सुंदरीं ॥ सुमित्रोऽप्युद्यदानंद—संदोहो ध्यातवान् हृदि ॥ ३३ ॥ सेनैव रतिसेनेयं । स्मरस्य त्रिजगज्जये ॥ यस्याः कटाक्षनाराचा । दुस्सहास्त्रिदशैरपि ॥ ३४ ॥ नेयं स्त्री यदिवा किंतु । शृंगाररसवाहिनी ॥ यस्या लावण्यपूरेऽस्मिन् । मज्जंति युव-

हृद्गजाः ॥ ३५ ॥ तयोश्चिंतयतोरेवं । मिथो दर्शनमात्रतः ॥ निस्सीमं समभूत्प्रेम । पूर्वसंगतयोरि-
व ॥ ३६ ॥ स तथाप्यर्थमभ्यर्च्य । निजावासे न्यवासयत ॥ चिंतामणिं स्वयं प्राप्तं । मंदिरे कोऽव-
मन्यते ॥ ३७ ॥ स्नानपानादिभिः कृत्यैः । स्वयं स रतिसेनया ॥ तथासेवि यथा मेने । तां तदैव
वशंवदां ॥ ३८ ॥ मणिमाराध्य स स्वैरं । ददौ श्रीपतिवद्धनं ॥ भोगाभोगं तयोस्तेन । तद्दृष्ट्वा
पर्यपूपुरत् ॥ ३९ ॥ सवित्री रतिसेनाया । यावद्धनमयाचत ॥ तावल्लक्षं च कोटिं च । सुमित्रो हे-
लया ददौ ॥ ४० ॥ तस्य कल्पद्रुमस्येव । दानाद्दृष्ट्वातिविस्मिता ॥ दध्यौ न दृश्यते पार्श्वे । ध-
नमस्य न चार्जना ॥ ४१ ॥ स्वेच्छं यच्छत्ययं द्रव्यं । यत्तदस्य विमृश्यते ॥ चिंताश्माथ निधिः सि-
द्धो । रसस्तुष्टः सुरादि वा ॥ ४२ ॥ मया सम्यगिदं ज्ञेयं । जरतीति विमृश्य सा ॥ दासीं प्रेष्य धनं
किंचि—द्ययाचे सचिवात्मजं ॥ ४२ ॥ स द्रव्याप्त्यै रहः स्थित्वा । मणिं यष्टुं प्रचक्रमे ॥ विवरे
वीक्ष्य तं वृद्धा । लास्यामीति हृदास्पृशत् ॥ ४३ ॥ सुमित्रोऽपि तदर्चांते । तदधिष्ठायकार्पितं ॥ द्र-
व्यं कर्मकरीहस्ते । यथाकामं समर्पयत ॥ ४४ ॥ अन्येद्युः स्नातुमासीने । तस्मिंस्तद्वसनांचलात् ॥
तद्रत्नमग्रहीदक्का । कर्करं न्यस्य तत्पदे ॥ ४५ ॥ स्नात्वा सुमित्रो वस्त्रांते । ग्रंथिं निर्वर्ण्य तादृशं ॥

मणिस्तथैव मेऽस्तीति । मुग्धधीर्न व्यलोकयत् ॥ ४६ ॥ तया निर्वासनकृते । याचितः स पुनर्धनं ॥ अर्चांकणे मणिं पश्य—न्नपश्यत्कर्करं किल ॥ ४७ ॥ दध्यौ च शून्यवज्ज्ञज्ञे । मणिर्मे किमु कर्करः ॥ किं वादाय मणिं कोऽपि । दुष्टधीर्बिद्धवानिमं ॥ ४८ ॥ ततः सुमित्रः प्रत्येकं । प्रोचे वृद्धापरिछदं ॥ आप्तं स्याद्यदि केनापि । रत्नं मे तर्हि दीयतां ॥ ४९ ॥ न्नवदाज्ञा न विभ्रस्त—द्वदतीति परिछदे ॥ तन्निशम्य सुमित्रं सा । दुष्टा वृद्धाभ्यधादिति ॥ ५० ॥ धनस्याप्राप्तितश्चौर्या—न्मा स्मल्लोकं कलंकय ॥ अस्मद्गृहेऽपि चेच्चौर्यं । तमोऽरौ न हि किं तमः ॥ ५१ ॥ निःस्वेनानेन किं कार्य—मिति ध्यात्वाथ कुट्टिनी ॥ स्वदासीः प्रेरयामास । तदवज्ञाकृतेऽन्वहं ॥ ५२ ॥ अवामंस्यत दास्यस्तं । स्नानपानादिकर्मसु ॥ आदिष्टाश्चावदन् किं न । त्वं करोषीति रोषतः ॥ ५३ ॥ रतिसेनामपास्यैकां । सर्वेषामप्यनादरं ॥ पश्यन्नश्यत्तमानंदो । दध्यौ धीसखनंदनः ॥ ५४ ॥ अनयावज्ञया नूनं । वृद्धैव मणिमग्रहीत ॥ सिद्धेछा चापमानान्मां । निर्विवासयिषत्यतः ॥ ५५ ॥ अहो जातिरहो न्नाति—रहो स्थितिरहो मतिः ॥ अहो वंचनचंचुत्वं । पण्यस्त्रीषु प्रसर्पति ॥ ५६ ॥ पश्यत्यर्थकृते सुरानिव गलत्कुष्टानपि प्राणिनो । निःस्वान् दासवदेव तांश्च मनुते प्राग्दत्तवित्तानपि ॥

न स्वेदेन न विद्यया न रमया न प्रज्ञयाप्यातमसा—द्विश्वांधंकरणीह पण्यरमणी धात्रा कुतो निर्ममे ॥ ५७ ॥ मद्यमांसमदमत्सरमाया—मोहमंमन्मनोजवमुख्यान् ॥ आश्रितापि बहुशोऽपि मकारान् । किं ममत्वमयते न पणस्त्री ॥ ५८ ॥

अनया मणिमादाय । वंचितोऽहं न केवलं ॥ स्वात्मापि यद्विनाम्नायं । नायं दास्यति किंचन ॥ ५९ ॥ यद्वा निंदामि किं वेश्यां । स्वं निंदामि न किं हहा ॥ कंदर्पलोलुपोऽहं यः । कामये पण्यकामिनीं ॥ ६० ॥ असद्वेश्याश्रिता वेश्या । येन धर्मजुषापि हि ॥ गृहीतो नियतं तेन । नरकश्रमिलम्भकः ॥ ६१ ॥ तथापि पापिनीमेनां । विगोप्य निखिले पुरे ॥ गृह्णामि चेन्न रत्नं स्वं । मन्निर्मे तर्हि गर्हिता ॥ ६२ ॥ उपकृत्युपकर्तुं द्रा—गपकर्तुं च वैरिणि ॥ प्रज्ञविष्णुर्न यः प्राणी । जीवन्नपि मृतो हि सः ॥ ६३ ॥ नसाप्यंह्रिहतं हंतृ—शिरो यद्यधिरोहति ॥ निराकृतः कृती तर्हि । न तत्प्रतिचिकीः किमु ॥ ६४ ॥ विमृश्यैवमनुक्त्वैव । निरीय च तदालयात् ॥ स्वमणिग्रहणोपायं । सुमित्रो ध्यातवान् पुनः ॥ ६५ ॥ वीरांगदोऽस्ति मन्मित्र—मत्र धात्रीधवोऽधुना ॥ तस्मै निवेद्य सद्योऽपि । कर्षये किमितो मणिं ॥ ६६ ॥ यद्वा तस्य वयस्यस्य । संगंस्ये तत्कृते कथं ॥ मित्राश्र-

योऽपि यल्लज्जा—वहः स्याव्द्यसने सतां ॥ ६७ ॥ वयस्यं न श्रयेद्दुःस्थो । महानिति मतिर्मम ॥ कृशः शशी श्रयन्मित्रं । स्वं नामापि विलुंपति ॥ ६८ ॥ तस्माज्ज्ञात्वा ध्रुवं कांचि—त्कलयित्वा कलां कलां ॥ वेश्यातो मणिमादास्ये । संगस्ये सुहृदस्ततः ॥ ६९ ॥ ध्यात्वेति पुरतस्तस्मा—त्प्रस्थाय सचिवात्मजः ॥ क्रमात्क्रामन् महीचक्रं । स्फुरत्तापपुरः पुरः ॥ ७० ॥ अत्युच्चस्वर्णशालाढ्यं । रत्नोरुकपिशीर्षकं ॥ स्वर्गगंगायितैश्चैत्य—ध्वजचेलांचलैर्लसत ॥ ७१ ॥ प्रेक्षमाणः पुरं दूरा—द्धंगतो गोपुरं गतः ॥ सुमित्रोऽमंस्त तच्छून्यं । नृतिरश्चामसंचरात् ॥ ७२ ॥ त्रिभिर्विशेषकं ॥

इदमीदृक्कुतः शून्य—मिति विस्मितमानसः ॥ सोंतर्विवेश पूर्लक्ष्म्या । कृष्यमाण इवोच्चकैः ॥ ७३ ॥ श्रीपथे श्रीपथे स्फारान् । मुक्तौघान् जलनालवत ॥ रत्नौघान् क्षुद्रगिरिव—न्मणीनुपलखंडवत् ॥ ७४ ॥ कर्पूरादीन् लवणवत् । क्षौमराशींश्च धान्यवत ॥ पश्यन् मर्त्यानपश्यंश्च । नृपवेश्मनि सोऽविशत् ॥ ७५ ॥ युग्मं ॥ तस्मिन्नाद्ये कणस्फार—कोष्ठागारपरंपरां ॥ द्वितीये कांस्यताम्रादि—विचित्रासत्रमंडलीं ॥ ७६ ॥ तृतीये रूप्यस्वर्णादि—पात्राढ्यं च महानसं ॥ तुर्ये क्षौमादिवस्त्राणि । पंचमे श्रीसदः सदः ॥ ७७ ॥ षष्टे रत्नादिसद्वस्तु । कोशं निधिपतेरिव ॥ पश्यन् प्रविष्ट-

वान्मंत्रि—नंदनः सप्तमे क्षणे ॥ ७७ ॥ त्रिभिर्विशेषकं ॥ स तत्र स्वर्णपल्यंक—विश्रांतं करस्त्री-
युगं ॥ हेमशृंखलनद्धांह्रि—द्वंद्वं दृष्ट्वा विमृष्टवान् ॥ ७९ ॥ किं मोहः किमु वैकृतं किमु मनःसंक-
ल्पना किं भ्रमः । किं स्वप्नः किमु शांबरी किमु कला कापींद्रजालं किमु ॥ दृग्बंधः किमु किं म
तिभ्रमनिदं किं चेष्कूटकैतवं । किं चित्रं किमु दैवताकृतमिदं किं वा परं किंचन ॥ ८० ॥ सर्वशून्ये
पुरेऽत्रैतु । प्रत्यविप्णुर्नरोऽपि न ॥ किं पुनः करस्त्रीयुग्म—मुपर्यारोढमक्षमं ॥ ८० ॥ आनीयतेह
केनेदं । पल्यंके केन चास्यत ॥ समवध्यत केनेत्थं । शृंखलेनेदृशं किमु ॥ ८१ ॥ शय्यासेदुपि दा-
सेरी—द्वंद्वं किं मृजतीति सः ॥ ध्यात्वा प्राप्तांतिकेऽद्राक्षी—त्तन्नेत्रे समितांजने ॥ ८२ ॥ तयोः पा-
र्श्वे च धवल—कृष्णांजनसमुद्गके ॥ स्वर्णांजनशलाकाढ्ये । दृष्ट्वा मंत्रिसुतोऽमृशत् ॥ ८३ ॥ इमे
केचित् स्त्रियौ नूनं । श्वेतांजननियोजनात् ॥ कोऽपि सिद्धः सुरो वापि । करस्त्रीचक्रवानस्त्रीः ॥८४॥
कृष्णांजनेन चानेन । जाने स्वमनिवेनवात ॥ इमे रूपं प्रपेद्येते । मन्त्रः स्वाभाविकं पुनः ॥८५॥
किमंजनं निवेश्यैन—न्नेत्रयोः करवे स्त्रियौ ॥ स्वदाढ्यस्यांजनस्यापि । पश्याम्यतिशयं स्वयं ॥८६॥
पिशाच्यावुत राक्षस्या—वेते कृत्वांजनात्किल ॥ मामेव चेद्ग्रसेयातां । कः स्यान्मे शरणं तदा ॥

॥ ७७ ॥ एवमेव विमोह्ये चे–त्तर्हीतर्मनसं मम ॥ एतच्छल्यमिवातुल्यं । यावज्जीवं व्यथीष्यते ॥
॥ ७८ ॥ प्रियं वाप्यप्रियं वास्तु । करिष्याम्येव साहसं ॥ न हि क्लातर्यतः किंचित् । श्रेष्टं सिध्यति कर्हिचित् ॥ ७९ ॥

ततस्तन्नेत्रयोर्न्यास्थ—त्सुमित्रः कृष्णमंजनं ॥ करण्यावप्यजूतां ते । देवकांते इव स्त्रियौ ॥
॥ ८० ॥ वेगादुत्तीर्य पर्यंका—दाश्चर्यमधिरुह्य च ॥ उपाविविशतां तत्र । तं नत्वा विनयेन ते ॥
॥ ८१ ॥ पृच्छतिस्म सुमित्रस्ते । प्रशस्ते तथ्यमुच्यतां ॥ कुतः शून्यं पुरं के वा । युवां करण्डिके च
किं ॥ ८२ ॥ तमाचष्ट तयोर्ज्येष्टा । गिरा माधुर्यधुर्यया ॥ ह्रेपयंतीव वीणाया । वेणोरपि च निःक्वणं ॥ ८३ ॥ उत्तरस्यां प्रशस्यश्री—सद्म पद्मवदन्वहं ॥ सुभद्रपुरमित्यस्ति । पुरं शङ्कंरं सतां ॥
॥ ८४ ॥ स्वतातहिमवज्जांतिं । बिभ्राणेव सुरापगा ॥ उन्नतं सेवते यस्य । शालमालंब्य सन्निधिं
॥ ८५ ॥ गंगादित्य इति श्रेष्टी । तत्रास्त्यादित्यसद्युतिः ॥ सच्चक्राणां मुदं दत्ते । यः पद्मोल्लासलालसः ॥ ८६ ॥ सौदामिनीव लोलापि । कमला यस्य वेश्मनि ॥ तत्पूर्वसुकृतेनैवा—जजत्स्थैर्यं
चिरंतनं ॥ ८७ ॥ वसुधारेव विश्वस्य । परमानंददायिनी ॥ तत्प्रिया वसुधारास्ते । रूपाद्रतिरिवापरा

॥ ९८ ॥ तयोर्निरुपमप्रेम्णोः । पुण्यनैपुण्ययोगतः ॥ गार्हस्थ्यद्रोः फलानीव । बभूवुर्नंदना घनाः
॥ ९९ ॥ तौ दंपती कदाप्येवं । दध्यतुर्नौ सुता घनाः ॥ दुहितैकापि नास्त्येषां । या स्यान्मंगल-
कारिणी ॥ १०० ॥ लोकस्याहो स्थितिः कापि । पुत्री पुत्रीं समीहते ॥ पुत्रीवानपि पुत्रं च । य-
ष्ठा जगदसंशयं ॥ १ ॥ उपास्यत ततस्ताभ्यां । तदर्थं गोत्रदेवता ॥ तद्वरं मुदितादत्त । तुष्टा का-
मदुघेव सा ॥ २ ॥ तत्प्रभावात्तयोः पुत्र्यौ । बभूवतुरुभे शुभे ॥ आद्या जया द्वितीया च । विजया
चिनयास्पदं ॥ ३ ॥ बहुपुत्रानुजातत्वा—द्भाग्यसौभाग्यतोऽपि च ॥ मातापित्रोः स्वगर्वाणा—मप-
त्यानामिमे प्रिये ॥ ४ ॥

क्रमात्कलासु सर्वासु । शारदावद्विशारदे ॥ श्रियाप्यप्सरसौ जाते । चारुतारुण्यतः शुभे ॥५॥
येष्वंगेषु न लावण्य—ममंप्रया विधिर्यथात् ॥ हेलयैवाश्रितं तेष्व—प्यहो तद्यौवनश्रिया ॥ ६ ॥
इतश्च गंगादित्यस्य । गंगातीरवनांतरे ॥ सुशर्माख्यः सुधर्मास्ति । परिव्राड् गुरुसत्तमः ॥ ७ ॥ तत्र
गत्वा स्वयं श्रेष्ठी । तं नमस्कृत्य भक्तितः ॥ अभ्यर्थमर्थयामास । भुक्त्यर्थं स्वीयवेश्मनि ॥ ८ ॥
ऊचे सुशर्मा धर्मज्ञो । भक्तस्यैतत्तवोचितं ॥ परं गृहिगृहं गंतु । यतीनां नास्ति योग्यता ॥ ९ ॥

यतित्वं नाशयत्याशु । स्तोकोऽपि गृहिसंगमः ॥ तृणौघं निर्दहत्येव । हुताशनलवोऽपि हि ॥ १० ॥
द्वाविमौ पुरुषौ नैव । स्वार्थसार्थसमर्थकौ ॥ यतिः संगपरः शश्वद् । गृहस्थः संगवर्जितः ॥ ११ ॥
वदंतमेवं निर्व्याजं । परिव्राजं बलादपि ॥ बुभोजयिषया श्रेष्टी । निन्ये स्वगृहमादरात ॥ १२ ॥
तं महेशमिवाभ्यर्च्यं । कल्याणमिव मूर्तिमत ॥ दृष्ट्वाजनिष्ट तुष्ट्योच्चैः । पुष्टं श्रेष्ठिकुटुंबकं ॥ १३ ॥
मूर्तभक्तिरसेनेव । पयसा तत्पदौ स्वयं ॥ प्रक्षाल्य परमे स्थाने । श्रेष्टी भोक्तुं न्यवीविशत् ॥ १४ ॥
सत्कवेः काव्यवद्वर्ण—नीयवर्णं सुसंस्कृतं ॥ रसाढ्यमशनं भोक्तुं । सुशर्मा स प्रचक्रमे ॥ १५ ॥
अन्नादिस्वादपूर्वं त—दश्नन्नानारसं व्रती ॥ माधुर्यैकरसां मेने । सुधां तस्य पुरस्तृणं ॥ १६ ॥ स
पुत्रः सकलत्रोऽपि । श्रेष्टी तद्भक्तिमाचरन् ॥ व्यजनानिलमाधत्तं । युवामित्यूचिवान् सुते ॥ १७ ॥
शृंगारयंत्यौ शृंगार—मप्यात्मीयांगसंगतः ॥ उद्वेलयंत्यौ वक्त्रेंदु—कांत्या स्नेहमहोदधिं ॥ १८ ॥
मंदाक्षैरिव क्षिप्तै—श्चंचलैर्लोचनांचलैः ॥ मोहयंत्यौ मुहुः श्रेष्ट—मुनीनामपि मानसं ॥ १९ ॥
परिव्राजः पुरः स्थित्वा । ते जयाविजये सुते ॥ सकंकणझणत्कारं । चक्रतुर्व्यजनानिलं ॥ २० ॥
त्रिभिर्विशेषकं ॥

तस्य तद्दर्शनादेव । शीतरश्म्युदयादिव ॥ समुद्रस्येव हृदयं । तत्क्षणं चुक्षुभेतमां ॥ २१ ॥
पीयमानो मनोहृत्य । तल्लावण्यसुधारसं ॥ सोऽयं विपान्नवन्नैव । सस्वदे तापसेश्वरः ॥ २२ ॥ तद्-
दृष्टिघनवर्षिण्यो । रागपूरे निमज्जतः ॥ स्थानेऽभूत्तस्य नाधारो । दूरितः शीलपादपः ॥ २३ ॥
अहो जितेंद्रियस्यापि । कायारण्ये मनोमृगं ॥ प्रकाश्य महिलापाशं । कामव्याधो हिनस्त्यलं ॥
॥ २४ ॥ अथास्यद्देहे स्वे पशुपतिरुमां कंसमथनो । विमुग्धो गोपीभिर्द्रुहिनरमयासीत्कमलभूः ॥
यदादेशादेतज्जगदपि मृगीदृक्परवशं । स वश्यः कस्य स्यादहह विषमो मन्मथज्वरः ॥ २५ ॥ त-
त्साप्युपायं स ध्यात्वा । किंचिच्चेतसि शोभ्यधीः ॥ हित्वा कदन्नवद्भोज्य—माचम्य च समुत्थितः ॥
॥ २६ ॥ विमनस्कमिवालोक्य । गंगादित्योऽन्वयुंक्त तं ॥ किं व्याधिर्बाधते वाधिः । सम्यग्नाभोजि
यत्त्वया ॥ २७ ॥ स मायी तं रहः स्माह । विघ्नं वीक्ष्य भवद्गृहे ॥ कथं भुंजे यतो याज्य—स्नेहो
मामपि बाधते ॥ २८ ॥ को विघ्नः कथ्यतां तथ्य—मिति श्रेष्ठिनि पृच्छति ॥ आगच्छेर्मठमाख्यामी—
त्युक्त्वागात्कुलाश्रमं ॥ २९ ॥ गंगादित्योऽथ तत्पार्श्वे । श्रित्वा प्रश्रयतिस्म तं ॥ गुरो निगद्यतां स-
द्यः । कः प्रत्यूहोऽस्ति मद्गृहे ॥ ३० ॥ सुशर्माचष्ट दुष्टस्तं । किमहं करवै वद ॥ एकतो मे व्रतभ्रं-

शो—ऽन्यतस्तव कुलक्षयः ॥ ३१ ॥ गृहस्थचिंताकरणा—द्याति जीवितवद् व्रतं ॥ तां न मे तन्व- तस्त्वेत-त्क्षीयते निखिलं कुलं॥३२॥ तुष्टस्तथापि भक्त्या त्वां । वच्मि श्रेष्ठिन् सुते तव ॥ सदूषण- तयात्यंतं । त्वत्कुलं क्षययिष्यतः ॥ ३३ ॥ यथानयोस्तनावस्ति । निःसीमं कामनीयकं ॥ तथा दो- षोदयोऽप्युच्चै । रत्नदूषी यतो विधिः ॥ ३४ ॥

परिणाय्याथ दत्से त्वं । यदि कस्यापि नंदने ॥ तर्हि तत्कुलनाशोऽथ । पातकैरुपलिप्स्यसे ॥ ३५ ॥ गंगादित्यस्तदाकर्ण्य । प्रमीत इव पृष्टवान् ॥ त्वं कृपालुः कलावांश्च । वद किं करवाण्यहं ॥ ३६ ॥ पंफुल्यामास मे नूनं । सद्योऽपि कल्पपादपः ॥ इति तुष्टोऽतिहृष्टात्मा । सुशर्माचष्ट तं पुनः ॥ ३७ ॥ परेद्यवि चतुर्दश्यां । श्यामायां दिनयौवने ॥ दारव्यां नव्यपेटाया—मछिद्रायां समंततः ॥ ३८ ॥ दुकूलोन्मीलितश्रीके । भव्याभरणभारिते ॥ तव पुत्र्यौ निजे न्यस्य । विनिवेश्य च ता- लकं ॥ ३९ ॥ तां पेटां समुपादाय । बलिपुष्पादिसंयुतां ॥ एकाकी त्वं समागछे । रहः स्वस्तटि- नीतटे ॥ ४० ॥ त्रिभिर्विशेषकं ॥ तत्राहं स्वयमागत्य । बलिनिक्षेपपूर्वकं ॥ पेटां चाप्लाव्य गंगायां । करिष्ये शांतिकं ततः ॥ ४१ ॥ एवं कृते कृतिन् भावि । कुशलं त्वत्कुलेऽखिले ॥ यदि क्षेमम-

निश्रेणी—स्तर्हि निर्माहि मा मुह ॥ ४२ ॥ इत्थं मिथ्यापि स स्वार्थी । तथाह्यो तदचीकथत् ॥ गं
गादित्यो यथा मेने । सत्यमेवातिमुग्धधीः ॥ ४३ ॥ कृत्वा स्वार्थसमर्थनाय विविधां मायामयीं चा·
तुरीं । विद्याज्ञानकलौषधादिविधिभिर्ये वंचयंते जगत ॥ अंतर्दुष्टहृदो बहिर्व्रतभृतः पाखंमिनस्तेऽपि
चे—ज्ञायंते गुरवस्तदा कथमहो नामी बकोटादयः ॥ ४४ ॥ श्रेष्ठ्यथागारमागत्य । न कस्यापि
प्रकाश्य तत् ॥ चतुर्दशीदिने प्राप्ते । तत्सामग्रीमतीतनत ॥ ४५ ॥ अन्यापि कन्या धन्यापि । स्या·
दन्याग्राममंडनं ॥ अनयोर्दुष्टयोस्त्यागे । हानिः का नाम मे ननु ॥ ४६ ॥ ध्यात्वेत्यस्मत्कुले क·
न्या । नमंत्येवं द्युनिम्नगां ॥ इति मिथ्योत्तरेण स्वं । प्रत्याय्य च परिच्छदं ॥ ४७ ॥ सर्वं गुरूक्तमा·
दाय । पेटां मतनयाद्वयां ॥ उत्पाट्य च जनैः श्रेष्ठी । स्वःसरित्तटमासदान् ॥ ४८ ॥ त्रिभिर्विशेषकं
॥ व्रतिब्रुवोऽपि तत्रैत्य । श्रेष्ठिभृत्यान् प्रहित्य च ॥ आप्लावयत्स्वपुण्यालि—मिव पेटां नदीजले ॥
॥ ४९ ॥ कृत्वा च शांतिकं सम्य—ग्गंगादित्यं गुरुर्जगौ ॥ गच्छ त्वं त्वत्कुलेऽभ्यासी—त्क्षेमं विघ्नवि·
घातनात ॥ ५० ॥ गत्वा गृहं जगौ श्रेष्ठी । गंगायां प्लाविता सती ॥ सा पेटागात्पयोयोगा—त्कर्तुं
नाशाकि केनचित ॥ ५१ ॥ हा वत्से दर्पणस्वच्छे । युवयोः किमजायत ॥ यन्नीते वंदितुं गंगां ।

तथैवापहृते स्यात ॥ ५२ ॥ एवमादि विलप्योच्चै—र्गंगादित्यः कुटुंबयुक् ॥ तदौर्ध्वदेहिकं चक्रे । धिगहो कूटनाटकं ॥ ५३ ॥ युग्मं ॥

शठोऽथ मठमभ्येत्य । परिव्राट् कूटकोटिभृत ॥ विप्रलंभयितुं शिष्या—न्मूर्खमुख्यानिदं जगौ ॥ ५४ ॥ अद्याहस्म समाधिस्थं । शंकरो मां पुरः स्फुरन् ॥ तुष्टस्तेऽस्मि यते ध्याना—देकतानमनःकृतात् ॥ ५५ ॥ हिमाद्रेः स्वयमानीत—स्फीतदिव्यौषधान्वितां ॥ पेटां तुभ्यं प्रहेष्यामि । प्रवाहे जाह्नवीयके ॥ ५६ ॥ त्वया विनेयैरानाय्या । सा तदौषधयोगतः ॥ विद्याः सेत्स्यंति हृद्यास्ते—ऽवश्यं विश्वैकवश्यदा ॥ ५७ ॥ तद्युष्माभिर्जवाद्यात्वा । स्वर्वापींप्रति संप्रति ॥ पेटा झटित्युपानेया । नोद्घाट्या च कथंचन ॥ ५८ ॥ अहो अस्मद्गुरोर्भाग्य—भंगीसंगीतकं महत ॥ प्रहिणोति हरो यस्मै । मंजूषां मंजुलौषधां ॥ ५९ ॥ इत्यमंदतमानंदा—स्ते शिष्यास्त्वरयातुराः ॥ तुंगं गंगातटं श्रित्वा । तामायांतीं व्यलोकयन् ॥ ६० ॥ युग्मं ॥ अथ सा सहसायांती । मंजूषा क्रीडितांभसि ॥ एतन्महापुरेशेन । सुभीमेन न्यभाल्यत ॥ ६१ ॥ आनाय्य तां समुद्घाट्य । पेटां कुंचिकया स्यात ॥ स्वःकन्ये इव ते कन्ये । सुभीमस्तत्र दृष्टवान् ॥ ६२ ॥ किमेते मूलजातत्वा—द्विषकन्यात्व

नोऽथवा ॥ त्यक्ते गंगार्चनार्थं वा । मुक्ते निर्दूषणे अपि ॥ ६३ ॥ इत्याद्यनल्पसंदेहो । रूपस्तद्दू·
षमोहितः ॥ ते स्त्रियौ जगृहे को हि । स्त्रीरत्नं हस्तगं त्यजेत् ॥ ६४ ॥ युग्मं ॥ तत्रान्यस्त्रीऽप्यन्या·
स—मंत्रमेकस्य मंत्रिणः ॥ मुक्त्वान्यामात्यमंत्रेण । वनादानाय्य तत्क्षणं ॥ ६५ ॥ क्षिप्त्वा च म·
र्कटीयुग्मं । तालयित्वा च पूर्ववत् ॥ सुनीमः प्लावयामास । पुनः पेटां सरिज्जले ॥ ६६ ॥ युग्मं ॥
शिष्यास्ते तां समायांतीं । दृष्ट्वा कृष्ट्वा च वेगतः ॥ मठापवरकेऽमुंच—न्ननर्थमिव देहिनं ॥ ६७ ॥
सुश्रमांथ कृतोन्माद्यः । पृथुमन्मथहेतिभिः ॥ दिनांतं तूर्णमिच्छंस्र । दिनांतमिव स्वं ननु ॥ ६८ ॥
कर्ममाद्यपि सर्वेषां । तदा तत्कर्म वीक्षितुं ॥ अनीश इव तत्पुण्य—मिवास्तं तरणिर्ययौ ॥ ६९ ॥
श्रेष्ठिकन्येप्रति प्रौढ—स्तडाग इव मूर्तिमान् ॥ रंजयन्निखिलं व्योम । संध्यारागोऽस्फुरत्ततः ॥७०॥
परिव्राजोऽतिदुर्ध्यान—संजातैर्दुरितैरिव ॥ तमोभिर्व्यानशे लोकः । समुद्र इव कज्जलैः ॥ ७१ ॥
स स्वशिष्यान् जगौ विद्यां । साधयिष्याम्यहं निशि ॥ युष्माभिस्तालयित्वोच्चै—र्द्वारं स्थेयं मठा·
द्बहिः ॥ ७२ ॥ कोकूयमाना सा दुष्टा । द्वारमुद्घाटयेद्यदि ॥ तथापि न तदुद्घाट्यं । न ज्ञेतव्यं
च चेतसि ॥ ७३ ॥ शिष्यैस्तथा कृते रात्रौ । परिव्राड् दुरितव्रतः ॥ मंजूषासन्नमध्यास्य । वक्तुमेवं

प्रचक्रमे ॥ ७४ ॥ आजन्माप्यप्रपंचेन । प्रपंचोऽयं मयाखिलः ॥ त्वन्निमित्तं विदधे । विधेयेन म-
नोभुवः ॥ ७५ ॥ पूज्यतादेवतावासा—विहामुत्र च यद्धितं ॥ युष्मत्कृते मयामोचि । तृणवत्तदपि
व्रतं ॥ ७६ ॥ तत्प्रसद्यानवद्यांग्यौ । युवाभ्यां स्मरतापितं ॥ निजांगसंगमरसै—र्निर्वाप्यं मामकांगकं
॥ ७७ ॥ इत्याद्यालप्य पेटायाः । स द्वारमुदजीघटत् ॥ रुषो.‥टे मर्कटिके । विकटे निर्गते ततः ॥
॥ ७८ ॥ चतुर्भिः कलापकं ॥ क्षुधिते ते तृषार्ते च । संकोचात्प्रच्युते चिरात् ॥ तमसा द्वारमप्रा-
प्य । तमेवात्तु विलेगतुः ॥ ७९ ॥ आभ्यां निभाल्य स्त्रीरूपं । कर्मैतन्निर्ममेऽमुना ॥ इतीव तस्य
वानर्यौ । प्राग्व्यदारयतां दृशौ ॥ ८० ॥

इदं दुःकर्मलग्नस्य । परिव्राजोऽस्य नोचितं ॥ ते तन्नक्रमतो नूनं । त्रोटयांचक्रतुः क्रुधा ॥
॥ ८१ ॥ अनेनैव सुशर्मायं । दध्यौ दुष्टमिति ध्रुवं ॥ मर्कट्यौ खंम्शस्तस्य । हृदयं परितेनतुः ॥
॥ ८२ ॥ परांगनापरिष्वंग—रंगोऽनेन यदैह्यत ॥ तस्येतीवाखिलं गात्रं । मुहुर्भक्षयतः स्म ते ॥८३॥
इत्थं शाखामृगीभ्यां स । भक्ष्यमाणाखिलांगकः ॥ व्याकुलात्मा सपूत्कारं । स्वशिष्यानिदमूचिवान्
॥ ८४ ॥ रेरे केनापि पापेन । मद्विषा मर्कटीजुषा ॥ मंजूषा प्रेषिता ताभ्यां । दार्यमाणोऽस्मि मे-

पचत् ॥ ७५ ॥ द्वारमुद्घाट्यतां तूर्णं । गुरुणा कार्यमस्ति चेत् ॥ नो चेदहं प्रमीतोऽस्मि । युष्माकं
निघ्नतामपि ॥ ७६ ॥ गुणे वुंचापरेऽप्येवं । शिष्यास्तद्वारिताः पुरा ॥ तद्विद्याविकृतं मत्वा । द्वारं नै-
वोदजीघटन् ॥ ७७ ॥ ततः स प्लवगीखंडी—कृतांगस्तिलचूर्णवत् ॥ पापीयानिति मत्वेव । प्राणैः
सद्योऽपि तत्यजे ॥ ७८ ॥ दुष्टकर्मा सुशर्मासौ । रौद्रध्यानतया मृतः ॥ अत्रैव राक्षसद्वीपे । राक्षसो-
ऽपि नृशंसगहन् ॥ ७९ ॥ मृषावादः प्रौढीं हठयति शुभं नश्यति जने । प्रतीतिर्न क्वापि स्फुरति मन-
सि ध्यानमशुभं ॥ अकीर्तिस्त्रैलोक्ये लसति चिरमंते च कुगतिः । फलान्येतानि स्युर्ननु तनुभृतां
वंचनतरोः ॥८०॥ विज्ञायावधिना स्वस्य । मुनीमं मृत्युकारणं ॥ स कौणपोऽतिकोपेन । पुरमेत-
दुपागमत् ॥ ८१ ॥ निर्भर्त्स्यास्फाल्य च ग्राविण । निर्णजक इवांबरं ॥ स तं जघान कः शक्तः ।
मत्कृतेऽन्यपरावर्तं ॥ ८२ ॥ मुक्त्वा ते द्वे स्त्रियौ सर्वान् । पौरांश्च निरवासयत ॥ द्विपद्गृह्यो हि नि-
ग्राह्यो । द्विपक्षेपे नयो ह्ययं ॥ ८३ ॥ अहो भृशं दुरंतोऽसौ । परदारग्रहाग्रहः ॥ न स्वस्यैव यतो
नाशः । परेषामपि किंतु सः ॥ ८४ ॥ सा जया विजया सा च । ते आवां श्रेष्ठिनः सुते ॥ रा-
क्षसोद्वासितमिदं । पुरं स्फुरति ते पुरः ॥ ८५ ॥

एतद्वृत्तं निजं सर्वं । समाख्याय स राक्षसः ॥ बभाषे प्राग्भवप्रेम्णा । परिणेष्ये युवामिति॥
॥ ९६ ॥ एकाकिन्यौ पुरे शून्ये । बिभेष्यत इमे इति ॥ सृष्ट्वैतदंजनद्वंद्वं । सद्य उष्ट्रीत्वकारकं ॥
॥ ९७ ॥ कृत्वा श्वेतांजनेनावां । करभीभावभासुरे ॥ स याति राक्षसद्वीपं । द्वित्रैर्घस्रैरुपैति च ॥
॥ ९८ ॥ युग्मं ॥ त्वराहूतश्चिरादेति । चिराहूतश्च सत्वरं ॥ विपर्यस्ता स्थितिस्तस्य । वेधसापि न
बुध्यते ॥ ९९ ॥ एवं व्यसनपाथोधा—वावां दैवेन पातिते ॥ न कोऽप्युद्धर्तुमेतस्मा—दस्ति नि·
स्तुषविक्रमः ॥ १०० ॥ परमद्यापि नौ व्यापि । किंचिद्भाग्यं विजृंभते ॥ दीनानाथैकजीवातु—र्यै·
नाकृष्टो भवानिह ॥ १ ॥ चिंतयौपयिकं किंचि—द्येनास्मात्कौणपाधमात ॥ पंचाननात्कुरंगीव—
दावां मोचयसे स्यात् ॥ २ ॥ परोपकाराहितरागसिक्त्या—न्न स्वस्य कष्टं विमृशंति संतः ॥ किमा·
त्मघर्षेण जगज्जनानां । न चंदनास्तापभरं हरंति ॥ ३ ॥ इत्युच्चैश्चाटुकोटिभि—स्ताभ्यां स्त्रीभ्यां
स भाषितः ॥ सुमित्रश्चिंतयामास । दाक्षिण्यैकमहोदधिः ॥ ४ ॥ एकतः क्रूरकोटीरः । स कीनाशो
हरत्यसून् ॥ अन्यतः शरणं प्राप्ते । त्राणार्हे स्त्रीतमे इमे ॥ ५ ॥ एतदर्थं वरं प्राणान् । मुंचे सत्व·
रगत्वरान् ॥ न पुनः प्रार्थनाभंगं । कृत्वा गच्छामि रंकवत् ॥ ६ ॥ अध्यास्य धैर्यमूर्जस्वि । नयाम्येते

पुरं निजं ॥ रक्षिता नविता कोऽपि । त्रयाणां पुण्ययोगतः ॥ ७ ॥ राक्षसेनासि मुक्तश्चे—त्तदेते दयिते मम ॥ अथ तेन हृतस्तर्हि । परार्थाः साधवोऽसवः ॥ ८ ॥ सुमित्रः पृष्टवान् कन्ये । स क-दैष्यति राक्षसः ॥ अथेति ताभ्यामुक्तेऽसौ । स्माहाकार्यस्तदा द्रुतं ॥ ९ ॥ स्त्रीभ्यां मोचे स गंधेन । ज्ञात्वा त्वां हनिष्यति ॥ अतोऽधः कोशसदने । स्थित्वैतां क्षपय क्षपां ॥ १० ॥ एतां तन्मति-मादृत्य । करनीकृत्य च स्त्रियौ ॥ सुमित्रः कोशमध्यास्य । निश्चेष्ट इव तस्थिवान् ॥ ११ ॥ विना-वर्था विनानाथां । सुमित्रो निर्गतस्ततः ॥ ते नारीकृत्य पप्रछ । नैशं कीनाशचेष्टितं ॥ १२ ॥ क-नतुस्ते निशि प्राप्तः । क्रव्याद्रंधं नरोद्भवं ॥ लब्ध्वा कोऽपि नरोऽत्रेति । जल्पन् दिक्षु द्विपद् दृशौ ॥ १३ ॥ गंधोऽयमावयोरेव । नार्योरस्ति न कश्चन ॥ मुमूर्षुः कः समस्येति । गुहागर्भे द्विपद्विपः ॥ १४ ॥ इत्यसद्वचसा सोऽनि—प्रतीतो यामिनीं स्थितः ॥ पुनः शीघ्रं समागच्छे—रित्युक्तोऽगा-न्निजं गृहं ॥ १५ ॥ युग्मं ॥

अथांजनद्वयं लात्वा । दासेरीकृत्य ते स्त्रियौ ॥ कोशात्तसद्रत्नभृते । गोण्यौ तत्र निवेश्य च ॥ १६ ॥ अध्यास्य करनीमेकां । द्वितीयां च करे श्रयन् ॥ सुमित्रः प्रस्थितो धीरो । महाशालपुरं-

स्थिरः ॥ ४१ ॥ सोऽथ व्यथातुरोऽवोचत् । सिद्ध स्त्वंजालाद्विमुंच मां ॥ जातं सत्यमिदं संति । रक्ष-
सामपि भीषकाः ॥ ४२ ॥ सिद्धोऽप्यधाद्विमुंचास्मिन् । वैरं त्वं चेन्मुमुक्षसे ॥ आचचक्षे च रक्षस्तं
। मत्प्रिये तर्हि दापय ॥ ४३ ॥ सिद्धः प्रोचे क्व ते कांते । त्वयापि प्राच्यजन्मनि ॥ श्रेष्ठिनं वंच-
यित्वैव । गृहीते तस्य नंदने ॥ ४४ ॥ अद्यापि त्वं ततोऽनार्य—त्पारदार्यान्न तुष्यसि ॥ व्रतभ्रंशः
कुमृत्युश्च । रक्षस्त्वामयतस्ततः ॥ ४५ ॥ वरं बह्वयः पत्न्यो वरमभिसृताः पण्यललना । वरं षंढीभा
वो वरमतिशुचि ब्रह्मचरणं ॥ वरं क्ष्वेमग्रासो वरमनशनं शुद्धमनसां । भवद्वैतस्तेनं न वरमपरस्त्रैण-
हरणं ॥ ४६ ॥ क्व व्रतं निर्वृतिप्रापि । क्व भोगा नरकप्रदाः ॥ तथापि भोगाभोगार्थी । लोकश्रेष्ठि-
तमस्य धिक् ॥ ४७ ॥ को विदग्धो व्रतं भंक्त्वा । विषयानभिलष्यति ॥ कश्चिंतामणिमाचूर्ण्य ।
गृहीते कर्करानहो ॥ ४८ ॥ किंचैते कुत्सनीयांग्यौ । स्त्रियौ मानुषभावतः ॥ त्वं सुरत्वेन रम्यांगः
। संबंधः कथमस्तु वः ॥ ४९ ॥ सिद्धवाक्यैः प्रबुद्धः सन् । स्वं जालात्तेन विमोचितः ॥ स्वीकृत्य कर-
भीयुग्मं । सुमित्रं कौणपोऽवदत ॥ ५० ॥ एते प्रिये गृहाण त्वं । तत्पुरं च महापुरं ॥ निवास्य
भुंक्ष्व तद्राज्यं । वैरं मुक्तं मया त्वयि ॥ ५१ ॥ सिद्धं सुमित्रं नार्यौ च । क्षमयित्वातिशांतधीः ॥

ऊर्ध्ववर्धि-
त्कार—नडिंडंडेन मंत्रितः ॥ ब्रह्मांडभांडनिर्भेदि—ध्वानो घन इवासितः ॥ २८ ॥ ऊर्ध्ववर्धि-
णामूर्ध्वांत्र—मुच्चमप्युन्नयन्निव ॥ बृरिभारामपि क्षोणीं । पद्भारैर्भारयन्निव ॥ २९ ॥ अतिरौद्रतया मृ-
त्यु—मपि संतापयन्निव ॥ रोपाद् द्विगुणवेगाढ्यः । पृष्टे प्राप स कौणपः ॥ ३० ॥ चतुर्भिः कला-
पकं ॥ कुर्वन्निव जगद्वृन्द—मयं किलकिलारवैः ॥ अमात्यपुत्रमाचष्ट । सोऽथ दुष्टशिरोमणिः ॥
॥ ३१ ॥ रे पाटच्चरकोटीर । सामान्यं साहसं न ते ॥ मृत्योरिव मम स्थानं । यः क्रांत्वाहरत स्त्रि-
यौ ॥ ३२ ॥ सुभीमो हतवान् यः प्रा—ग्मम पत्न्यौ यमातिथिः ॥ सकुटुंबो मया चक्रे—ऽधुना
त्वं च करिष्यसे ॥ ३३ ॥ मां विराध्य कियत्कालं । जिजीविषसि रे जड ॥ मृगारातिं पराभूय ।
किं जीवति मृगश्चिरं ॥ ३४ ॥ दृष्टवान् यदि मां न त्वं । तर्हि किं नापि शुश्रुवान् ॥ राक्षसोऽहं
जगज्जग्धुं । कृतांतस्याग्रजोऽस्मि रे ॥ ३५ ॥ एकग्रासं करोमि त्वां । शरण्येन सहामुना ॥ विब्रुव-
न्निति कीनाश—स्तौ द्वौ जग्धुमधावत ॥ ३६ ॥ पंचभिः कुलकं ॥
धीरयित्वा कुमारं द्रा—ग्नयार्त्तं हुंकृतैस्त्रिभिः ॥ मंत्रादैरिवामोघैः । सिद्धः स्तंभयतिस्म तं ॥
॥ ४० ॥ नाराचैरिव नीरणाग्रै— कौरस्तैः स कौणपः ॥ कीलिताखिलकायोऽभू—त्काष्टस्तंभ इव

प्रति ॥ १७ ॥ युग्मं ॥ कौणपापातभीत्या च । क्रामन्मार्गं समीरवत् ॥ मध्ये कांतारमद्राक्षी—न्नर-
मेकं तरोस्तले ॥ १८ ॥ अयं रविरिवौजस्वी । सोमवत्सौम्यदर्शनः ॥ योगीव ध्यानबद्धात्मा । चि-
त्रन्यस्त इव स्थिरः ॥ १९ ॥ नूनं लोकोत्तरस्फूर्तिः । सिद्धः कश्चन दीप्यते ॥ रक्षिष्यति च मां भी-
त—मस्माद्राक्षसवैशसात् ॥ २० ॥ ध्यात्वेति करजीद्वंद्वं । बध्वासन्नतरौ ततः ॥ नमस्यामास सो-
ल्लासः । सुमित्रस्तं नरोत्तमं ॥ २१ ॥ त्रिभिर्विशेषकं ॥ ध्यानं जित्वाशिषं दत्वा । सिद्धस्तं पृष्टवान्
वद ॥ कस्माद्वत्स सचिंतोऽसि । सोऽथ प्रीतस्तमूचिवान् ॥ २२ ॥ दवज्वालेव मेऽस्त्युच्चै—श्चिंता
संतापकारिणी ॥ यदि तत्रांबुदायेथाः । संपृछेथास्तदा प्रभो ॥ २३ ॥ स्मित्वाभ्यधत्त सिद्धस्तं । सं-
दिग्धः केयमस्ति ते ॥ शक्तिं चमत्कारकरीं । शृणु कांचन मामिकां ॥ २४ ॥ भूतव्यंतरयक्षराक्ष-
सकुलं स्तंभामि हुंकारतः । सूर्यं चंद्रमसं करोमि च करे श्रोतष्पतिं शोषये ॥ आकर्षामि समं सुरैः
सुरपतिं नागेश्वरं सोरगं । विश्वं चान्यथयामि नास्ति मम भोः किंचित् कचिद् दुष्करं ॥ २५ ॥
तदवष्टंभसंतुष्टो । रक्षोवृत्तांतमादितः ॥ विज्ञप्य तस्मादभयं । सुमित्रस्तमयाचत ॥ २६ ॥ तावदुद्-
घाटितद्वार—पुरवद्विवृताननः ॥ ऊर्ध्वीकृतभुजः शैल । इव शृंगाग्रपादपः ॥ २७ ॥ ज्वलदृद्दष्टिफ-

ल्लत्कार—तडिद्दंडेन मंडितः ॥ अत्यंभत्यांमनिर्ह्रादि—ध्वानो घन इवासितः ॥ २८ ॥ ऊर्ध्ववर्धि-
ष्णुमूर्धाग्र—मुच्चमप्युच्चयन्निव ॥ दरिद्रारामपि क्षोणीं । पदभारैर्भारयन्निव ॥ २९ ॥ अतिरौद्रतया मृ-
त्यु—मपि संतापयन्निव ॥ रोषाद् द्विगुणवेगाढ्यः । पृष्टे प्राप स कौणपः ॥ ३० ॥ चतुर्भिः कला
पकं ॥ कुर्वन्निव जगच्छब्द—मयं किलकिलारवैः ॥ अमात्यपुत्रमाचष्ट । सोऽथ दुष्टशिरोमणिः ॥
॥ ३१ ॥ रे पाटच्चरकोटीर । सामान्यं साहसं न ते ॥ मृत्योरिव मम स्थानं । यः क्रांत्वाहरत स्त्रि-
यौ ॥ ३५ ॥ सुभीमो हतवान् यः प्रा—ग्मम पत्न्यौ यमातिथिः ॥ सकुटुंबो मया चक्रे—ऽधुना
त्वं न करिष्यसे ॥ ३६ ॥ मां विराध्य कियत्कालं । जिजीविषसि रे जड ॥ मृगारातिं पराभूय ।
किं जीवति मृगश्चिरं ॥ ३७ ॥ दृष्टवान् यदि मां न त्वं । तर्हि किं नापि शुश्रुवान् ॥ राक्षसोऽहं
जगद्भक्षी । कृतांतस्याग्रजोऽस्मि रे ॥ ३८ ॥ एकग्रासं करोमि त्वां । शरण्येन सहामुना ॥ विब्रुव-
न्निति कीनाश—रतौ द्वौ जग्धुमधावत ॥ ३९ ॥ पंचभिः कुलकं ॥

धीरयित्वा कुमारं द्रा—ग्नयार्त्तं हुंकृतैस्त्रिभिः ॥ मंत्राक्षरैरिवामोघैः । सिंहः स्तंभयतिस्म तं ॥
॥ ४० ॥ नागचैरिव तीक्ष्णाग्रै—र्भौरस्तैः स कौणपः ॥ कीलिताखिलकायोऽत्र—काष्टस्तंभ इव

स्थिरः ॥ ४१ ॥ सोऽथ व्यथातुरोऽवोचत् । सिद्ध स्तंभाद्विमुंच मां ॥ जातं सत्यमिदं संति । रक्षसामपि भीषकाः ॥ ४२ ॥ सिद्धोऽप्यधाद्विमुंचास्मिन् । वैरं त्वं चेन्मुमुक्षसे ॥ आचचक्षे च रक्षस्तं । मत्प्रिये तर्हि दापय ॥ ४३ ॥ सिद्धः प्रोचे क्व ते कांते । त्वयापि प्राच्यजन्मनि ॥ श्रेष्ठिनं वंचयित्वैव । गृहीते तस्य नंदने ॥ ४४ ॥ अद्यापि त्वं ततोऽनार्या—त्पारदार्यान्न तुष्यसि ॥ व्रतभ्रंशः कुमृत्युश्च । रक्षस्त्वामयतस्ततः ॥ ४५ ॥ वरं बह्व्यः पत्न्यो वरमभिसृताः पण्यललना । वरं षंढीभावो वरमतिशुचि ब्रह्मचरणं ॥ वरं क्ष्वेडग्रासो वरमनशनं शुद्धमनसां । भवद्वैतस्तेनं न वरमपरस्त्रैणहरणं ॥ ४६ ॥ क्व व्रतं निर्वृतिप्रापि । क्व भोगा नरकप्रदाः ॥ तथापि भोगाभोगार्थी । लोकश्रेष्ठितमस्य धिक् ॥ ४७ ॥ को विदग्धो व्रतं भंक्त्वा । विषयानभिलष्यति ॥ कश्चिंतामणिमाचूर्ण्य । गृहीते कर्करानहो ॥ ४८ ॥ किंचैते कुत्सनीयांग्यौ । स्त्रियौ मानुषभावतः ॥ त्वं सुरत्वेन रम्यांगः । संबंधः कथमस्तु वः ॥ ४९ ॥ सिद्धवाक्यैः प्रबुद्धः सन् । स्तंभात्तेन विमोचितः ॥ स्वीकृत्य करभीयुग्मं । सुमित्रं कौणपोऽवदत ॥ ५० ॥ एते प्रिये गृहाण त्वं । तत्पुरं च महापुरं ॥ निवास्य भुंक्ष्व तद्राज्यं । वैरं मुक्तं मया त्वयि ॥ ५१ ॥ सिद्धं सुमित्रं नार्यौ च । क्षमयित्वातिशांतधीः ॥

स्वस्वरूपं समुत्सृज्य । तिरोधत्त निशाचर. ॥ ५२ ॥ सुमित्रोऽथान्यधात्सिद्धं । त्वत्प्रसादरसायनैः ॥
उज्जीवितोऽस्म्यहं रक्तः—सन्निपातज्वरादितः ॥ ५३ ॥ सिद्धिर्विद्या. कलाश्चान्याः । सर्वाः संमील्य
वेधसा ॥ मन्ये कृता तनुस्तेऽसौ । नो चेच्छक्तिरियं कुतः ॥ ५४ ॥ अमूर्तिमानियत्काल—मुपका·
रः श्रुतो मया ॥ त्वद्दर्शनादिदानीं स । मूर्तिमानिति मे मतिः ॥ ५५ ॥ ततोऽनुज्ञाप्य सिद्धं त—
मुष्ट्रीकृत्य पुनः स्त्रियौ ॥ तत्रारूढः सुमित्रोऽगा—न्महाशालपुरं सुखं ॥ ५६ ॥ मणीन् कत्यपि वि·
क्रीय । गृहीत्वा चाग्रिमं गृहं ॥ परिणीय च ते कन्ये । बुभुजे स कृती सुखं ॥ ५७ ॥ चिंतामणी
यते यस्य । पुण्यं पूर्वभवार्जितं ॥ तस्य स्यात्सुलभं सर्वं । देवस्येव समीहितं ॥ ५८ ॥

इतः सा रतिसेनापि । वीक्ष्याप्राप्तं निजं प्रियं ॥ पुरे बाह्ये च सर्वत्र । दासीभिरगवेषयत् ॥
॥ ५९ ॥ अपश्यंती प्रियं क्वापि । त्रिदिनीं त्यक्तभोजना ॥ रथांगीव कृशांगी सा । तस्थौ दुःस्था
वियोगतः ॥ ६० ॥ सुमित्रश्चेद्गतः किं नु । न्यूनमन्यः प्रियो न किं ॥ न ह्येकस्मिन् गते हंसे ।
स्याद्धंसा सरस्यहो ॥ ६१ ॥ इत्यादिजननीवाक्याद् । ज्ञात्वा तल्लोभचेष्टितं ॥ दंदह्यमानहृदया ।
सोपालंभवतीति तां ॥ ६२ ॥ मन्ये त्वयैव मत्प्रेयान् । याचित्वा किंचनाधिकं ॥ वंचयित्वा गृहीत्वा

योगिनी ॥ ७३ ॥ वत्स स्वह्व तदागह्व । स्वदर्शनरसायनैः ॥ समुज्जीवय त्वयोऽपि । निर्जीवामिव तां प्रियां ॥ ७४ ॥ अहो आवर्जनायुक्ति—रहो कपटपाटवं ॥ अहो वंचनवैचित्र्य—मस्यां वैयात्यमप्यहो ॥ ७५ ॥ मायाविन्यां मयाप्यस्यां । मायाश्रेयेति चिंतयन् ॥ कृतावहित्थो जामाता । वाचं प्रोवाच तांप्रति ॥ ७६ ॥ युग्मं ॥ तावकीं प्रीतिं वेद्म्येव । परं सार्थवशंवदः ॥ प्रस्थितस्त्वरया मात—स्तेनाहं त्वां न पृष्टवान् ॥ ७७ ॥ विस्मेरयत्यपरं जातु । त्वदुपज्ञं तु गौरवं ॥ वज्रलेपवदालीनं । मन्मनो विस्मरेत्कथं ॥ ७८ ॥ इति मर्मविधा तस्य । वाचा चित्ते चमत्कृता ॥ हसंती तं करे कृत्वा । सा स्वमंदिरमानयत ॥ ७९ ॥ गलद्विलासकल्लोलां । स लावण्यरसैः कृशां ॥ कश्मलांबरसेवालां । विगतोज्ज्वलहंसकां ॥ ८० ॥ वीक्ष्य ग्रीष्मनदीदेश्यां । वेश्यामपि सतीं प्रियां ॥ सुमितश्चिंतितस्वांतः । प्रीतिवाक्यैरतूतुषत् ॥ ८१ ॥ युग्मं ॥ कांते प्राप्ते प्रियाप्यैह्व—त्तस्य रूपं वचोऽपि च ॥ द्रष्टुं श्रोतुं च बाहुल्यं । नेत्रयोः श्रवसोरपि ॥ ८१ ॥ वियोगे द्विगुणीभूत—प्रेमस्थेमभृतोस्तयोः ॥ निस्सीमशर्मकिर्मीरो—ऽगलत्कालः कियानपि ॥ ८२ ॥ रतिसेनां कदाप्यूचे । स जिघृक्षुर्मणिं निजं ॥ किंचित्कौतुकमातन्वे । प्रिये त्वं चेन्न कुप्यसि ॥ ८३ ॥ सा स्माह केयं म·

स्पृहा । प्रियाप्राणेश्वरस्त्वतः ॥ मम प्राणास्तवैवामी । नियुज्यंतां यथारुचि ॥ ७४ ॥ ततस्तां करभी·
कृत्य । सितांजननिवेशनात ॥ अदृष्टो वृध्धया प्राप्तः । सुमित्रः स्वगृहं ययौ ॥ ७५ ॥ तयोर्मुखं
क्षालयितुं । गृहीत्वा जलपात्रकं ॥ कुट्टिन्युपरि संप्राप्ता । करभीमैक्षताग्रतः ॥ ७६ ॥ संभ्रांता हृदि
दध्यौ च । संजातं किमिदं हहा ॥ पुत्रीपुत्रीपतिस्थाने । करभी यन्निभाल्यते ॥ ७७ ॥ मत्यास्ति
करभी नेयं । पिशाची राक्षसीव वा ॥ स्त्रीपुंसयोर्द्वयं जग्ध्वा । रूपमेतदशिश्रियत् ॥ ७८ ॥ हा
जामातस्तनूजे हा । गेहांतर्गतयोरपि ॥ किं जातं युवयोर्दैवा—द्यदियं वां पदे स्थिता ॥ ७९ ॥
सोरस्ताडं सबाष्पं च । विलपंती जरत्यथ ॥ आत्मीयपरिवारस्य । तदद्भुतमदीदृशत् ॥ ८०० ॥ त·
द्दर्शनाद्विमृश्योच्चै—स्तामाचष्ट परिच्छदः ॥ अधुनैव सुमित्रोऽय—मितः प्राप्तः स्वमंदिरं ॥ १ ॥ नूनं
पूर्वापमानेन । वैरशुद्धिचिकीर्षिव ॥ इदं विडंबनं कृत्वा । स धूर्तो गतवान् गृहात् ॥ २ ॥ दृश्यतां
यद्ययं गेहे । स्यात्तदास्यैव चेष्टितं ॥ मूर्खोऽपि क्षमते नाप—मानं किं नु कलानिधिः ॥ ३ ॥ त·
तः सुमित्रं वेश्मस्थं । ज्ञात्वा तद्द्वारि वारिता ॥ वृद्धा ध्यात्वाबलद्रत्न—ग्रहणात्तत्कृतचेष्टितं ॥ ४ ॥
गत्वा च तत्क्षणं कोपा—द्वीरांगदनृपाग्रतः ॥ वसत्यपि पुरे मुष्टा—स्मीति पूत्कृतवत्यलं ॥ ५ ॥

केन मुष्टेति राज्ञपृष्टा । बाष्पांबुप्लावितेक्षणा ॥ करजीकृतिपर्यंतं । सा सुमित्रकथां जगौ ॥ ५ ॥ सु-
मित्रनामश्रवणा—न्मित्रं स्मृत्वा निजं नृपः ॥ तां तदासिदिनं रूप—वयसी अपि पृष्टवान् ॥ ६ ॥
मित्रसंवादि तत्सर्वं । श्रुत्वा वेश्याननात्प्रभुः ॥ आजूहवन्निजैर्भृत्यैः । सुमित्रं मंदिरस्थितं ॥ ७ ॥
बहुभिर्दिवसैरद्य । नृपो दर्शिष्यते मया ॥ इत्यादायोपदां दिव्यां । स वीरांगदमभ्यगात् ॥ ८ ॥ दू-
रादपि तमालोक्य । नृपतिः प्रीतमानसः ॥ भुजोपपीडमालिंग्य । स्वासनार्धे न्यवीविशत ॥ ९ ॥
तयोः प्रजायते गोष्टी । यावत्पीयूषवर्षिणी ॥ तावदाचष्ट सा दुष्टा । स्पष्टयंती स्वधृष्टतां ॥ ९ ॥ देव
दृष्टं त्वयैतस्य । धौर्त्यं दर्शनमात्रतः ॥ त्वामप्ययं वशीचक्रे । ददेऽस्यार्धासनं यतः ॥ १० ॥ कार-
यित्वा सुतां सज्जां । स्वामिन्निष्कास्यतामयं ॥ करिष्यत्यन्यथा नूनं । पुरेऽनर्थं पुनस्तव ॥ ११ ॥
स्मित्वापृछन्नृपो मित्र । त्वयमंब्येतत्सुता कथं ॥ स प्रोचे स्याद्यथा व्यक्ता । कला नास्या व्ययोऽपि
च ॥ १२ ॥ खिन्ना वेश्यावदद्भद्र—फल्लरीवादनैरलं ॥ कला सर्वापि ते ज्ञाता । सज्जयाशु सुतां
मम ॥ १३ ॥ मंत्रिपुत्रोऽप्यधाद् दुष्टे । कलेयं किलाति मम ॥ यावत्त्वां रासभीकृत्य । पुरविष्टां न
चारये ॥ १४ ॥ नो चेदर्पय तद्रत्नं । मम रे पश्यतोहरे ॥ तत श्रुत्वाप्रश्नयद्भूपः । किं रत्नं मित्र

कथ्यतां ॥ १४ ॥
सोऽवदन्मार्गमध्येऽह—न्मज्जनादिविधिर्यतः ॥ तद्रत्नमनया जह्रे । पापिन्या मम जीवनं ॥
॥ १५ ॥ वीरांगदोऽप्यधात्क्रोधा—द्धे त्वयाकारि गीरियं ॥ ग्रामोऽपि ज्वाल्यते स्वेन । व्यारोहोऽ-
पि विधीयते ॥ १६ ॥ आनीयतां मणिस्तूर्णं । संप्रत्येव न चेदितः ॥ निर्लांछनकश्चरणं । पुरा-
न्निर्वासयिष्यसे ॥ १७ ॥ साथ दीना समानीय । कोशाद्रत्नं समर्प्य च ॥ सुमित्रं क्षमयामास । क-
लाढ्ये हि बलं किमु ॥ १८ ॥ गोष्टी करिष्यते पश्चा—देतत्पुत्र्यनुकंप्यतां ॥ इत्युक्त्वा महितो रा-
ज्ञा । सुमित्रस्तद्गृहं गतः ॥ १९ ॥ कृष्णांजनं निवेश्याक्ष्णोः । प्राग्रूपां स प्रियां व्यधात् ॥ सा-
पि विज्ञाय तद्वार्तं । स्वसवित्रीमतर्जयत् ॥ २० ॥ रतिसेनां समानीय । स मानी निजवेश्मनि ॥
स्त्रीषु मुख्यत्वमातेने । सतीत्वस्य फलं ह्यदः ॥ २१ ॥ महामात्यपदं दत्वा । सुमित्राय नवान्नृपः ॥
अदीदृशत्फलं प्रेम्णः । सन्मैत्र्या हि किमुच्यते ॥ २२ ॥ वीरांगदेन पृष्टोऽथ । यदादत्तमणिकथां
॥ स्त्रीप्राप्तिवृत्तं स्वकीयं । चमत्कारि सुहृज्जगौ ॥ २३ ॥ व्यजिज्ञपच्च शून्यं चे—न्नगरं तन्महापुरं
॥ वास्यते तर्हि तद्राज्यं । लक्ष्मीभाज्यं स्वसाद्भवेत् ॥ २४ ॥

एतत्साध्विति जल्पित्वा—नुज्ञातो जगतीभुजा ॥ अनेकानीकसश्रीकः । सुमित्रः प्राप तत्पुरं ॥ २४ ॥ निष्कासितं निशाटेन । तज्जनं पार्श्ववासिनं ॥ आनाय्य न्यायवर्तिष्णुः । स तत्पुरमवासयत् ॥ २५ ॥ देशे तत्र च सर्वत्र । श्रीवीरांगदशासनं ॥ यशःस्तोमैः समं स्वीयैः । स सुखं समतिष्ठिपत् ॥ २६ ॥ तत्राधिकारिणं न्यस्य । कोशं चादाय धीसखः ॥ उपेत्योपायनैर्दिव्यै—र्वीरांगदमतूतुषत ॥ २७ ॥ सुमित्रमंत्रिमंत्रेण । दुःसाध्यानप्यरीन्नृपः ॥ असाधयत्सुखेनैव । मुद्गलानिव मांत्रिकः ॥ २८ ॥ कराला अपि सीमाला । नृपालास्तस्य शासनं ॥ सर्वेऽपि मेनिरे नित्यं । शक्रस्येवामरास्तदा ॥ २९ ॥ ईतिदुर्भिक्षदुष्कर्म—परचक्रसमागमाः ॥ कथायामेव तद्राज्ये । श्रुता लोकैर्न वीक्षिताः ॥ ३० ॥ भूपस्य सचिवस्यापि । प्रतिबिंबाविवात्मनः ॥ हेमांगदः सुबुद्धिश्च । क्रमाज्जातौ सुतावुभौ ॥ ३१ ॥ राजपाट्यां व्रजन् मंत्रि-युतो वीरांगदोऽन्यदा ॥ श्रीविशालरसालस्य । छायायां स्वेछया स्थितं ॥ ३२ ॥ श्रीपार्श्वार्हद्गुणग्राम—कामनीयकगर्भितं ॥ गीतं गायदलोकिष्ट । मिथुनं किन्नराह्वयं ॥ ३३ ॥ युग्मं ॥ तत्कंठमधुरत्वेन । जिनगीतेन च क्षणं ॥ विंदन्नमंदमानंदं । निष्पंद इव सोऽभवत् ॥ ३४ ॥

दध्यौ च गीते वादित्रे—ऽनंतं पुण्यमिति श्रुतिः ॥ सत्यैव तेन चित्तं स्या—त्स्वस्यान्येषाम
पि स्थिरं ॥ ३५ ॥ मिथुनं तदलंकृत्य । निजांगाभरणार्पणात् ॥ श्रीपार्श्वः संप्रति क्वास्ती—त्यपृच्छ·
त्पृथिवीपतिः ॥ ३६ ॥ अवोचत् किन्नरो देव । भवदीयात्पुरादितः ॥ आस्ते षोडशयोजन्यां । श्री·
पार्श्वो विहरन् महीं ॥ ३७ ॥ पुनर्वीरांगदोऽध्यासी—द्धन्यंमन्यः स मंगलः ॥ तीर्थोऽस्ति जंगमो य·
स्मि—न्नाश्वसे निःस्वयं जिनः ॥ ३८ ॥ जनाः सुमनसस्तेऽपि । पार्षदत्वमवाप्य ये ॥ आसौद्दिव्यं
पिबंत्येव । तद्व्याख्यानसुधारसं ॥ ३९ ॥ राज्यश्रीमदिरास्वादा—दहं क्षीववदन्वहं ॥ आत्मानमपि
नो वेद्मि । तन्निनंसाकथैव का ॥ ४० ॥ ततो गत्वा स्वयं तत्र । तदुपास्तिरसायनं ॥ कृपीयः पु·
ण्यदेहं स्वं । मेदुरं विदधेऽधुना ॥ ४१ ॥ अथ मंत्रिषु विन्यस्य । राज्यं सैन्यान्वितो नृप ॥ सु·
मित्रेण सहाचाली—दाश्वसेन्यं जिनंप्रति ॥ ४२ ॥ जानुदघ्नीर्नदीः कुर्व—न्नव्या द्विपमदांबुभिः ॥
ष्टुस्तराः सुतराश्चोरु—सैन्योत्खातरजश्चयैः ॥ ४३ ॥ श्रीपार्श्वोपासनौत्सुक्या—द्रुतन्नधिक्रमतरं ॥ सै·
न्यं निवेश्य कांतारे । क्वापि वीरांगदोऽवसत ॥ ४४ ॥ तत्राकस्माद्दवो लग्नो । ज्वालाजालजटालि·
तः ॥ भोक्तुं घस्मरवत्कृत्स्नं । कक्षं दग्धुं प्रचक्रमे ॥ ४५ ॥ दंदह्यमानवृक्षोत्थै—र्धूमैरूर्ध्वं प्रसृत्वरैः

॥ विहिता श्यामता व्योम्नो । मन्येऽद्यापि न गछति ॥ ४६ ॥ स्फुटद्वेणुस्वनव्याजा—त्फूत्कारानिव निर्ममे ॥ समंताद्दह्यमानं त—द्वनं दावहविर्भुजा ॥ ४७ ॥ रुरोध नृपतेः सैन्यं । प्रसर्पन्न दावपावकः ॥ वार्धिपूर इवोद्दामो । द्वीपमध्यगतं जनं ॥ ४८ ॥ अभ्रंलिहासु ज्वालासु । प्रसृतीषु चतुर्दिशं ॥ तत्सैन्यं शुशुभे बाण—दैत्येंद्रपुरलोकवत ॥ ४९ ॥ अभितो ज्वलने लग्ने । जनो निर्यातुमक्षमः ॥ संभ्रमी बंभ्रमीतिस्म । तत्रैवावर्तनीरवत् ॥ ५० ॥ अग्निना व्याप्यमानानां । सैनिकानां प्रसृत्वरान ॥ श्रुत्वाक्रंदान् भृशं दूनो । दध्यौ वीरांगदो हृदि ॥ ५१ ॥ वंदारुरतिभावेन । श्रीपार्श्वं प्रस्थितोऽस्म्यहं ॥ तदंतरायकारीव । दावस्त्वेष दिधक्षति ॥ ५२ ॥

तद्भक्ता नास्ति किं कापि । शक्ता शासनदेवता ॥ वात्या रेणुमिव क्लेशं । श्राद्धानां यावरेत्क्षणात् ॥ ५३ ॥ आविर्भूय तदा व्यक्त—बह्मा पद्मावती स्वयं ॥ उपसर्गहरं स्तोत्रं । कृत्वा दत्वा च तं जगौ ॥ ५४ ॥ चिंतामण्याख्यमंत्राढ्यं । पार्श्वस्तवमिमं स्मर ॥ स्मृत्यास्य मेघं वीक्ष्येव । विध्यास्यति दवो द्रुतं ॥ ५५ ॥ राज्ञा तथा कृते सद्यः । प्रशशाम दवानलः ॥ श्रीपार्श्वनाथनामापि । विघ्नं हंति तमोऽर्कवत् ॥ ५६ ॥ आस्तिक्यवासितस्वांतः । क्ष्माकांतः प्रस्थितस्ततः ॥ प्राप्तुं नागपुरे

ज्ञात्वा । जग्मिवांस्तत्र वेगतः ॥ ५७ ॥ तत्र स्वर्गविमानश्री—निःस्पंदैरिव निर्मिते ॥ दिव्ये समवसरणे । रूप्यस्वर्णमणीमये ॥ ५८ ॥ प्राकाररेखात्रितयं । सुमनःप्रचयांचितं ॥ त्रैलोक्ये रेखायं त्राभं । श्रीपार्श्वं दृष्टवान्नृपः ॥ ५९ ॥ युग्मं ॥ चकोर इव शीतांशुं । मयूर इव वारिदं ॥ दरिद्र इव दातारं । स प्रभुं प्रेक्ष्य पिप्रिये ॥ ६० ॥ भक्त्या प्रदक्षिणीकृत्य । भगवंतं भुवः प्रभुः ॥ शक्रवत् स्तोतुमारेभे । प्रमोदैरुदरंभरिः ॥ ६१ ॥ त्रिभुवनविभो तानि व्यर्थान्यहानि ममागमं—स्तव पदयुगोपास्तिः स्वस्तिप्रदाजनि यत्र न ॥ अहमिदमहर्मन्ये धन्यं यदत्र मयाचिरात् । सुरतरुरिव श्रेष्ठो दृष्टस्त्वमेव फलप्रदः ॥ ६२ ॥ स्मृतिरपि तव स्वामिन् जाता ममाशु निरासुषी । पथि पृथुदवज्वालाजालं दिधक्षुतया यतः ॥ त्वमसि भगवन् भाग्यैर्लब्धोऽधुना स्तनयित्नुव—द्भवदवभवं तापव्यापं समापय सर्वतः ॥ ६३ ॥ इति स्तुत्वा पुनर्नत्वा । स्थिते वीरांगदेऽग्रतः ॥ आश्वसेनिर्जिनाधीशो । विदधे धर्मदेशनां ॥ ६४ ॥ देहः सैकतगेहवत्तरुणता शैलापगापूरव—ल्लक्ष्मीः स्वप्नकलादवत्प्रणयिनीसंगस्तमिद्दंभवत् ॥ ऐश्वर्यं खलमैत्र्यवत्परिजनस्नेहः पताकाग्रव—त्सौख्यं वारितरंगवन्नृवसितमप्यंभोदवच्चंचलं ॥ ६५ ॥

विमृश्य बौद्धमतवत् । क्षणिकं सकलं जगत् ॥ विधेयं पुण्यमेवैकं । तदक्षयनिधानवत् ॥६६॥
निस्सीमसुखनिर्भासी । द्विविधोऽपि महोदयः ॥ पुण्येनैवोल्लसत्युच्चैः । सलिलेनेव पादपः ॥ ६७ ॥
इहास्तां विभवो भूयान् । कुटुंबं च महत्तमं ॥ परं भवांतरेऽवश्यं । पुण्यमेव सहायकं ॥ ६८ ॥
देवपूजादयादान—शुभध्यानादिनिर्मलं ॥ सुकृतं यत्कृतं पूर्वं । तत्फलं युवयोरदः ॥ ६९ ॥ संप्र-
त्यपि तथा पुण्य-योगः कोऽपि स कल्प्यतां ॥ येन व्यामोहिते वेति । द्रुतं मुक्तिरमांतिकं ॥७०॥
निगद्यैवं स्थिते नाथे । ससुमित्रोऽपि भूपतिः ॥ द्वादशव्रतविस्तीर्णं । प्रपेदे धर्ममार्हतं ॥ ७१ ॥
चिंतामणिमिव प्राप्य । धर्मं हृष्टो जिनेश्वरं ॥ नत्वा वीरांगदः प्राप । महाशालपुरं निजं ॥ ७२ ॥
विहारान् मेदिनीहारान् । बिंबान् भिंबापहारिणः ॥ पवित्रास्तीर्थयात्राश्च । स्वदेशे मारिवारणं ॥७३॥
वर्याः सपर्याश्चैत्येषु । साधर्मिकजनार्चनं ॥ कुर्वंतौ तौ नृपामात्यौ । सुकृतं तेनतुस्ततः ॥ ७४ ॥
युग्मं ॥ अथ राज्यं चिरं भुक्त्वा । स्वतनूजौ निजे पदे ॥ विन्यस्य जिनगेहेषु । कृत्वा चाष्टाह्निका-
महं ॥ ७५ ॥ वीरांगदः सुमित्रोऽपि । श्रीमद्देवेंद्रसूरितः ॥ मोक्षलक्ष्म्या इवात्त्वीक्षां । दीक्षां स्वीच-
क्रतुर्मुदा ॥ ७६ ॥ अकपटतप-प्रोद्यद्दावानलेन कुकर्मणां । विपिनमचिराद्भस्मीकृत्याधिगम्य च केव-

लं ॥ हृपितहृदयैर्देवैः स्वर्गादुपेत्य कृतोत्सवः । शिवसुखपदं प्राप्तो वीरांगदः सुहृदन्वितः ॥ ७७ ॥
वीरांगदोदाहरणात्तदेवं । राज्यादि सत्कर्मफलं निशम्य ॥ कुमारपालक्षितिपाल शश्व—न्निर्मोहि नि·
र्मायतया तदेव ॥ ७८ ॥ इति श्रीकृष्णर्षीयश्रीजयसिंहसूरि विरचिते परमार्हतश्रीकुमारपालचरिते
महाकाव्ये पुण्यफलोपदेशो नाम पंचमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ षष्टः सर्गः प्रारभ्यते ॥

पुण्यद्रोः फलमावेद्य । तन्मूलमथ जल्पितुं ॥ हेमाचार्योऽभ्यधादूर्ध—श्चौलुक्यनृपतिं प्रति ॥
॥ १ ॥ पुण्यस्य मूलं कारुण्य—मंकुरस्य सुबीजवत् ॥ अन्ये मन्यादयस्तस्य । क्ष्मादिवत्सहचारिणः
॥ २ ॥ दीनानां मार्ग्यमाणानां । भीतानां च तनूभृतां ॥ स्वप्राणानामिव त्राणं । कारुण्यं भण्यि
द्यते ॥ ३ ॥ कंदः कल्याणवल्लीनां । प्राणाः सर्वव्रतश्रियां ॥ संसारापारपाथोधे—स्तरणिः करुणा
स्मृता ॥ ४ ॥ रचयति नृणामायुर्दीर्घं शरीरमनामयं । मतिमनुपमां स्फीतं नार्यं गुणान् जगदुत्त्व
णान् ॥ बलमविकलं प्राज्यं राज्यं सितांशुसहग्यश—स्त्रिदिवशिवयोर्लक्ष्मीं चांते कृपादृततंवनवा ॥

॥ ५ ॥ सार्वजन्या मता सैषा । जिनैरेव न केवलं ॥ निगद्यते दयापार—तीर्थिकैरपि तद्यथा ॥
॥ ६ ॥ एकतः क्रतवः सर्वे । क्षोणीसर्वस्वदक्षिणाः ॥ अन्यतो भयभीतस्य । प्राणिनः प्राणरक्षणं
॥ ७ ॥ सर्वे वेदा न तत्कुर्युः । सर्वे यज्ञाश्च भारत ॥ सर्वे तीर्थाभिषेकाश्च । यत्कुर्यात्प्राणिनां दया
॥ ८ ॥ कृपेयं कल्पवल्लीव । सेव्यमाना दिवानिशं ॥ दत्ते लोकोत्तरं पुण्य—सारस्येव समीहितं ॥
॥ ९ ॥ तथाहि जंबूद्वीपेऽत्र । भरतश्रीविभूषणं ॥ श्रीगोपगिरिरित्यासी—त्पुरं सुरपुरोपमं ॥ १० ॥
अंतर्निवेश्य रत्नानि । पुनर्मथभयादिव ॥ यत्र जातं तनुभूतेन । वार्धिना परिखामिषात् ॥ ११ ॥
बभूव तत्र भूपालः । कालः प्रत्यर्थिहस्तिनां ॥ श्रीमान् समरसिंहाख्यः । साक्षात सिंह इवौजसा ॥
॥ १२ ॥ कर्पूरो मृगनाभिवत्सितगरुत्कादंबवन्मौक्तिक—श्रेणिर्मेचकरत्नवच्चुहिनरुक्कांतोऽप्ययस्कांतवत
॥ इंदुः कज्जलबिंदुवत्सुरसरिद्वैवस्वतीसिंधुव—द्बंधुः कैटभवैरिवत्प्रतिबभौ यत्कीर्तिकांतेः पुरः ॥१३॥
अमरश्रीभृतस्तस्या—मरश्रीरित्यभूत्प्रिया ॥ यस्यां सीमानमापन्ना । मूर्तिस्फूर्तिः श्रियामिव ॥ १४ ॥
बुद्धिसाराह्वयस्तस्य । बभूव सचिवः शुचिः ॥ यद्बुद्धिविजितो जाने । गुरुस्तस्थौ नभःस्थले ॥१५॥
तत्रैव नगरे श्रेष्ठी । श्रेष्ठस्तत्तद्गुणोल्बणः ॥ धनसाराभिधानोऽभू—त्प्रधानो व्यवहारिणां ॥

॥ १६ ॥ धृतविस्फूर्तयो यस्य । कीर्तयोऽपि श्रियोऽपि च ॥ अन्योन्यं स्पर्धयेवोच्चै—र्व्याप्नुवन क-
कुब्गणं ॥ १७ ॥ धनश्रीरिति तस्यासी—द्रमणी रमणीयरुक् ॥ अधिष्टात्रीव या रेजे । रूपला-
वण्यसंपदां ॥ १८ ॥ तयोर्निर्विशतोः सौख्यं । रतिकंदर्पयोरिव ॥ व्रयानपि व्यतीयाय । कालः क-
लितसंमदः ॥ १९ ॥ अन्यदापत्यचिंताग्नि—संतप्तौ तावुभावपि ॥ अगण्यपुण्यतः सर्व—मिष्टं
स्यादिति निर्णयात ॥ २० ॥ अमारिबिंदिनिर्मोक्ष—चैत्यदेवार्चनादिकं ॥ वितेनतुर्महापुण्यं । नि
र्मलं निजचित्तवत ॥ २१ ॥ युग्मं ॥ तत्प्रभावादभूत्पुत्रो । धनश्रीधनसारयोः ॥ देहसौंदर्यसंपत्त्या ।
पुष्पचाप इवापरः ॥ २२ ॥ अपुत्रयोस्तयोः पुत्र—जन्यो यः संमदोऽजनि ॥ तदग्रतः समुद्रोऽपि ।
मन्ये गोष्पदसन्निभः ॥ २३ ॥ विरचय्योत्सवं तस्य । पितरौ नाम तेनतुः ॥ पुण्यसारेण लब्धत्वात
। पुण्यसार इति स्फुटं ॥ २४ ॥ यदा स श्रेष्टिनः सौधे । पुण्यसारः सुतोऽजनि ॥ तदा समरसिंह
स्य । नृपतेरपि कन्यका ॥ २५ ॥ आहूता निजतातेन । नाम्ना मदनवल्लभा ॥ चांद्री कलेव धत्त-
स्म । कांचित्कांतिं दिने दिने ॥ २६ ॥ बाल्येऽपि रूपसंपत्तिं । तस्याः प्रेक्ष्य चमत्कृताः ॥ मूर्धानं
दुधुवुः के न । हर्षावेशवशादिव ॥ २७ ॥

अथ राज्ञा निजा कन्या । श्रेष्टिना च निजोंगजः ॥ अधीत्यर्थं विमुक्तौ ता—वेकोपाध्याय-
सन्निधौ ॥ २७ ॥ स्त्रीत्वेन भारतीकृत—सान्निध्यस्य वशादिव ॥ वेगान्मदनवत्यासी—च्छास्त्राब्धेः
पारदृश्वरी ॥ २ए ॥ कुमारः पुण्यसारस्तु । बाल्यचापल्यकेलिभिः ॥ पर्यध्ययनबुद्धित्वा—न्न तथा-
ज्ञास्त किंचन ॥ ३० ॥ अन्यदा किंचिदुद्भिन्न—यौवनः श्रेष्टिनंदनः ॥ दृष्ट्वा तारुण्यपुण्यां तां ।
प्रोचेऽनंगतरंगितः ॥ ३१ ॥ राजकन्ये त्वमेवासि । मध्ये धन्या मृगीदृशां ॥ कलेव शशिनो नित्यं
। यस्या रूपर्द्धिरेधते ॥ ३२ ॥ हरेः सहस्रदृग्योऽपि । वेद्मि हृद्यं स्वदृग्द्वयं ॥ तद्दृष्टं मुहुर्यत्त्वां ।
प्रमोदभरमीक्षते ॥ ३३ ॥ क्वचिद्रूपं कला क्वापि । त्वय्येवैतद् द्वयं पुनः ॥ सौरभ्यं सौकुमार्यं च ।
मालत्यामेव हि स्थितं ॥ ३४ ॥ तत्प्रसीद ममोद्दाम—कामार्त्यब्धौ निमज्जतः ॥ पाणिग्रहणमाधा
य । त्वं समुद्धर मां श्यात् ॥ ३५ ॥ अवियोगप्रयोगेण । यथा शश्वदनश्वरी ॥ आवयोरेधते प्री-
ति—र्निशाचंद्रमसोरिव ॥ ३६ ॥ स्वनक्रवक्रणैनैवा—वज्ञां प्रज्ञाप्य तंप्रति ॥ तृणयंतीव दार्ढ्येण
। विश्वं मदनवत्यवक् ॥ ३७ ॥ जानेऽधुना भवत्येव । जाड्यसीम विवल्गति ॥ स्वं परं चाविमृश्यै-
व । यो वक्ति सहसाप्यदः ॥ ३७ ॥ क्वाहं क्ष्मापसुता दक्षा । क त्वं मूर्खो वणिक्सुतः ॥ तदावयोः

कथं योगो । हंसीवायसयोरिव ॥ ३९ ॥ स्त्री कन्यैव वरं नैव । मूर्खकांतविडंबिता ॥ शून्या शाखा
प्रशस्या हि । न पुनः स्तेनसेविता ॥ ४० ॥ ग्रावणः शकलवद्बध्ध्वा । स्वगले दयितं जडं ॥ नि·
मज्जयति कात्मानं । दुःखांभोधौ विदग्धधीः ॥ ४१ ॥ पुण्यसारो भृशं मम्लौ । तयेत्थमपमानितः ॥
पद्माकर इवोद्दाम—वारिवृष्ट्या कदर्थितः ॥ ४२ ॥ मत्वा मदनवत्यासौ । जन्मिमात्मानमुन्मिनं ॥
प्रसादयितुमैहिष्ट । विद्याप्राप्त्यै सरस्वतीं ॥ ४३ ॥ उपोषितस्त्र्यहं पुष्प—कर्पूराद्यैः प्रपूज्य च ॥ पु·
राद्बहिः स्थितां विद्या—धिष्ठात्रीमारराध स· ॥ ४४ ॥ देहिनी सर्वविद्येव । प्रत्यक्षीभूय शारदा ॥
ऊचे तं वत्स तुष्टास्मि । वद तुभ्यं ददामि किं ॥ ४५ ॥ तां नत्वा नृपकन्याया—स्तं वृत्तांतं नि·
वेद्य च ॥ तत्प्राप्तिकारिणीं विद्या—मनवद्यां ययाच च ॥ ४६ ॥ तमभ्यधत्त वाग्देवी । पुण्यं ते
विद्यते महत् ॥ भविष्यति ततोऽभीष्ट—मभ्यासादिव कौशलं ॥ ४७ ॥ यदाशाया न विषयं । दु·
र्घटं च जनेन यत् ॥ तदप्यारोपयत्याशु । प्राक्पुण्यं प्राणिनां करे ॥ ४८ ॥ एनं श्लोकं हृदि ध्या·
ये—स्त्वं मंत्रमिव संततं ॥ उक्त्वेत्यंतर्दधे देवी । पुण्यसारोऽप्यगाद् गृहं ॥ ४९ ॥ युग्मं ॥ सम्य·
ग्विमृश्य श्लोकार्थं । समर्थं स्वार्थसाधने ॥ पुण्य एवानिशं रेमे । सोंबुजे राजहंसवत् ॥ ५० ॥

कालेन कियताप्येष । विटपेटकयोगतः ॥ पर्यटन्नगरे नाना—कौतुकानि व्यलोकयत् ॥ ५१ ॥ पुण्यसारो विटैः साकं । वसन् क्रीडन् भ्रमन् हसन् ॥ अश्नन् पिबन्मिलन् जल्पन् । प्रायो वेश्मनि नागमत् ॥ ५२ ॥ विटैः सत्क्रियमाणोऽसौ । चिकीर्षुः प्रतिसत्क्रियां ॥ जहार हारमन्येद्यु—र्जनन्या द्रविणोज्झितः ॥ ५३ ॥ गवेषितोऽपि न क्वापि । हारः प्रापि धनश्रिया ॥ भ्रमाज्ञावान्न चाज्ञायि । तद्गृहीता निजांगजः ॥ ५४ ॥ ततश्च स्वर्णदीनार—सहस्रं सोऽहरत्पुनः ॥ ज्ञातास्वादो हि चौर्यादौ । कोऽवस्थातुं प्रगल्भते ॥ ५५ ॥

हृते हारधने ज्ञात्वा । धनसारोऽतिदुःखितः ॥ भृत्यान्निर्भर्त्स्य युष्मासु । कः स्तेन इति पृष्टवान् ॥ ५६ ॥ पुण्यसारस्य तत्कृत्यं । विदन् कश्चन सेवकः ॥ अचीकथदिमे श्रेष्ठिन् । गृहीते त्वत्तनूरुहा ॥ ५७ ॥ तत श्रुत्वा धनसारस्तं । पुत्रमाहूय तत्क्षणं ॥ ज्वलन्निवातिरोषेण । रूक्षाक्षरमिदं जगौ ॥ ५८ ॥ बुधाभ्यासे कलाभ्यासं । विवर्ज्यानार्य सर्वथा ॥ त्वं पर्यटन् विटैः साकं । किं रे जातोऽसि तस्करः ॥ ५९ ॥ वटा इव विटा नूनं । कुलीना अपि नोचिताः ॥ सतामासेवितुं यत्ते । स्मृताः किं पुरुषालयाः ॥ ६० ॥ याञ्चा चेत्किमु लाघवेन जडता चेच्छून्यभावेन किं । लोभश्चे-

द्दुरितेन किं धनमदश्चेत्सीधुपानेन किं ॥ मोहश्चेन्निगडेन किं व्यसनिता चेत्पारवश्येन किं । नैः
स्व्यं चेन्मरणेन किं विटरतिश्चेद्दस्युमार्गेण किं ॥ ६२ ॥ उत्तमोऽपि कुसंगेन । दधात्यधमतां ध्रुवं ॥
अपवित्रं न किं वारि । वारुणीकुंभसंभृतं ॥ ६३ ॥ इयच्चिरं न मन्ये हे । यद्दासा अपि नेनिरे ॥
तत्त्वं तन्वंस्तनूजोऽपि । स्तेयं किं नैव लज्जसे ॥ ६४ ॥ स्वर्णपुष्पैः परे पुत्राः । पूजयंति स्वमातरं
॥ हरसे त्वं तु तद्धार—महो ते मत्तनूजता ॥ ६५ ॥ स्वर्णदीनाररोचिष्णु—र्हारो दत्तो नवेद्यदि
॥ तदा त्वया समागम्यं । मंदिरे मम नान्यथा ॥ ६६ ॥
इत्थं निर्भर्त्सितः पित्रा । मषीव श्यामलाननः ॥ गेहात्तदैव निर्गत्य । पुण्यसारः परामृशत् ॥
॥ ६७ ॥ धिग् धिग् मे जीवितं योऽहं । द्रोहं तन्वन् स्ववेश्मनि ॥ इक्कितोऽस्मि तथा पित्रा । य
था कर्मकरोऽपि न ॥ ६८ ॥ कलानिधिस्तातमनःप्रमोदी । स्यात्कोऽपि वार्धेर्विधुवत् सुपुत्रः ॥ अहं
तु संतापकरः स्वपित्रो—र्जातोऽस्मि भानोः शनिवत्कुपुत्रः ॥ ६८ ॥ इति ध्यायन् हृदि दुःस्थः । प
श्चात्तापपरो भृशं ॥ पुण्यसारो द्रुतं तस्मात् । कुमारो निरगात्पुरात् ॥ ६९ ॥ वर्त्म किंचिदजानानः
। पुण्येनेव प्रणोदितः ॥ प्राचेतसीं दिशं श्रित्वा । स चचाल विशालधीः ॥ ७० ॥ सुकुमारे कुमा

रेऽस्मिन् । कथंचित्पादचारतः ॥ गव्यूतिद्वितीये याते । भानुमानस्तमासदत् ॥ ७१ ॥ चिराय न
स्थितिं क्वापि । करोमीति रमांबुजात् ॥ बोधयंतीव पद्मेभ्य—श्चक्रे कौमुदमास्पदं ॥ ७२ ॥ पुण्य-
सारस्य चक्राणां । स्त्रीणां च विरहस्पृशां ॥ हृदो विनिर्गतैर्दुःखै—रिव ध्वांतैर्भृतं जगत् ॥ ७३ ॥
कर्ताऽधुना कुमारः कि—मिति द्रष्टुमिवाभवत् ॥ तारकैतवतः शंके । द्यौरुत्तानविलोचना ॥७४॥
ध्वांतेऽभिसृत्वरे विश्वक् । पुरः प्रस्थातुमक्षमः ॥ कुमारः स्थितवांस्तत्र । पथिस्थवटकोटरे ॥ ७५ ॥
इतश्च तत्रैव वटे । कामाख्या कापि यक्षिणी ॥ विद्यते तां तदा द्रष्टुं । कमलाख्यागता सु-
री ॥ ७६ ॥ तामभ्युत्थाय कामाख्या—भाक्षीत्कुतोऽधुना सखि ॥ त्वमायासीः किमद्राक्षीः । कौतुकं
तन्निवेदय ॥ ७७ ॥ सा बभाण सुवर्णाख्य—द्वीपात्स्थानान्निजादहं ॥ भवद्दिदृक्षया नुन्ना । प्रस्थि
ता गगनाध्वना ॥ ७८ ॥ धात्रीं विचित्रां पश्यंती । सुराष्ट्रादेशमंडनं ॥ वलभीपुरमभ्येत्य । यदप-
श्यं ब्रवीमि तत ॥ ७९ ॥ तत्रास्ति वलभीपुर्यां । श्रेष्ठी श्रेष्ठतमद्युतिः ॥ कामदेवाभिधो रूपा—त्का
मदेव इवापरः ॥ ८० ॥ येन स्वमंदिरेष्वेव । न्यस्तशस्तोरुवस्तुषु ॥ पूर्यतेस्म श्रियो नाना—स्था
नभ्रमणचापलं ॥ ८१ ॥ तस्य नाम्ना गुणेनापि । लक्ष्म्या पत्न्या समं सुखं ॥ भुंजानस्याभवन्नष्ट—

जीष्टाः पुत्र्यः क्रमादिमाः ॥ ८२ ॥ वनश्रीः समरश्रीश्च । नागश्रीविमलश्रियौ ॥ सोमश्री. कमल-
श्रीश्च । सुंदरश्रीगुणश्रियौ ॥ ८३ ॥ युग्मं ॥ कलाकलापसंपन्ना—स्तारुण्येन विशेषिताः ॥ ना दे-
व्य इव रूपेण । गीर्वाणानप्यमूमुहन् ॥ ८४ ॥ कुमारीणां तासां तरुणिमवने विभ्रमघने । लस-
ल्लावण्यांभःकिशलयिनि तत्तद्गुणतरौ ॥ चलत्तद्भ्रूचापप्रसृमरकटाक्षोरुविशिखै—र्भ्रमन् कामव्याधो
न कति हतवान् कामुकमृगान् ॥ ८५ ॥ कामदेवः कनीतुल्यान् । क्वाप्यपश्यन् वरान् वरान् ॥ तद-
र्थमारराधोच्चै—र्यथाविधि गणाधिपं ॥ ८६ ॥ स प्रत्यक्षस्तमाचष्ट । तुष्टस्ते करवै किमु ॥ ऊचे
श्रेष्ठी सुतानां मे । देहि लोकोत्तरान् वरान् ॥ ८७ ॥ ध्यात्वा विनायकोऽवादी—देक एव वरः परं
॥ भविता त्वत्तनूजाना—मष्टानामपि तुष्टिकृत् ॥ ८८ ॥ पाणिग्रहणसामग्रीं । त्वं गृहे कुरु तत्कृते
॥ लग्नक्षणेऽहमानेष्ये । वरं स्मरमिवापरं ॥ ८९ ॥ देवादेशात्ततः काम—देवो भृत्यैर्व्यदीधपत ॥
नानालंकारनेपथ्य—मंडपाद्यं मनोरमं ॥ ९० ॥ खाद्यादीनि च भक्ष्याणि । स तथा सज्जचीकरत
॥ यथा वितेनिरे तानि । दर्ष्टॄणां पर्वतभ्रमं ॥ ९१ ॥ शुभे दिने यवानुप्त्वा । वर्धमानेषु सत्सु ॥
गायंतीषु पुरंध्रीषु । धवलध्वनिबंधुरं ॥ ९२ ॥ निवेश्यौर्णामयं पाणौ । कंकणं कुलयोषितः ॥ व

र्णके स्वर्णवर्णास्ताः । कनीरष्टापि चिक्षिपुः ॥ ९३ ॥ युग्मं ॥ श्रेष्टिनस्तस्य पुत्रीणा—मष्टानामपि
संप्रति ॥ विनापि वरमाश्चर्यं । वर्तते पाणिपीडनं ॥ ९४ ॥ तत्कथामेतदाकर्ण्य । सर्वं दृष्ट्वा नि-
भाल्य च ॥ अहं विस्मयमानांत—स्त्वदंतिकमुपागमं ॥ ९५ ॥ कामाख्या स्माह सख्येत—द्वीक्षे-
हमपि संप्रति ॥ प्रत्यूचे सापि यद्येवं । तर्ह्यागछ मया समं ॥ ९६ ॥ वटस्थितस्तदाकर्ण्य । पुण्य-
सारोऽपि विस्मितः ॥ स्ववृत्तज्ञापनापूर्वं । तदेव प्रत्यवोचत ॥ १०० ॥

नीत्वा मां तत्र चित्रं त—द्दर्शयित्वा च चेत्पुनः ॥ आनयेथे युवां तर्हि । जवत्सार्थे समेम्य-
हं ॥ १ ॥ तदुक्त्या मुदिते देव्यौ । तद्देवप्रेरिते इव ॥ तद्वाक्यं प्रतिपेदाते । कः सतां न हि मा-
नदः ॥ २ ॥ गृहीत्वा पुण्यसारं तं । पुण्यसारमिवात्मनः ॥ ते देव्यौ जग्मतुस्तिग्म—वेगेन वल
भीं पुरीं ॥ ३ ॥ कामदेवगृहस्याग्रे । तं मुक्त्वावोचतां च ते ॥ आयास्त्वं प्रातरत्रैव । नयामस्त्वां
यथा वयं ॥ ४ ॥ ततस्ते जग्मतुर्देव्यौ । तत्कौतुकमवेक्षितुं ॥ मया दृश्यं कथमिति । ध्यायंस्तत्र
च स स्थितः ॥ ५ ॥ तदैव लग्ने नेदिष्टे । गृह्यतां स्वसुतावरः ॥ उक्त्वेति पुण्यसारं तं । गणेशः
श्रेष्टिने ददौ ॥ ६ ॥ निरीक्ष्य कामदेवस्तं । दीव्यंतं वरदेववत ॥ निमग्नवानिवामंद—तमानंदप-

योनिधौ ॥ ७ ॥ तदास्यचंद्रं निस्तंद्रं । दृष्ट्वा मंडपवासिनः ॥ प्रमोदमेदुरे कस्य । नाभ्तां नयन
कैरवे ॥ ८ ॥ काहं केऽमी किमेतन्मे । तन्वंतीति विमर्शिनं ॥ पुण्यसारं समानीय । कामदेवः
स्ववेश्मनि ॥ ९ ॥ संस्नाप्य दिव्यशृंगारं । कारयित्वा च देववत् ॥ स्वकन्याधिष्ठितं मातृ—मंदिरं
समुपानयत् ॥ १० ॥ युग्मं ॥ कन्या निरूप्य तद्रूपं । सुधांजननिभं दृशोः ॥ कृतार्थं मन्यमानाः
स्वं । प्रत्येकं हृद्यचिंतयन् ॥ ११ ॥ कामोऽयं किमु निस्सीम—कामनीयकसंपदा ॥ यद्वा संनाम्य
ते तस्य । केयं कायवियोगतः ॥ १२ ॥ अस्त्यस्माकं महद्भाग्यं । यद्ययं जायते पतिः ॥ न हि
चिंतामणिं प्राणी । विना पुण्यं प्रपद्यते ॥ १३ ॥ इति ध्यानभृतां तासां । कटाक्षाः स्वागतक्रियां ॥
रोमांचेन सहोल्लाय । पुण्यसारस्य तेनिरे ॥ १४ ॥ त्रिभिर्विशेषकं ॥ ततोऽर्चितानां मातॄणां । पुर
तो द्विजपुंगवः ॥ कुमारस्य कनीनां च । पाणिपद्मान्ययोजयत ॥ १५ ॥ कुमारेण वधूभिश्च । म
न्येतरकरार्पणात् ॥ परस्परापरित्यागे । वितीर्णः प्रतिभूरिव ॥ १६ ॥ कटाक्षेण वीक्षमाणास्ता । स्था
यं स्थायं पुनः पुनः ॥ अपत्रपाशिखाभंग—मिव किंचित्तदाचरन् ॥ १७ ॥ तत्राचारेण नो नाग-
रिया वध्वांचलान्मिथः ॥ आनीय च वधूयुक्तं । वरं वेद्यंतरं शुचि ॥ १८ ॥ हुत्वानलं चतुःकृत्वो ।

भ्रामयामासिवान्न द्विजः ॥ चतुर्गतिभवभ्रांतिं । पुरस्ताद् ज्ञापयन्निव ॥ १९ ॥ युग्मं ॥ विश्वेऽपि निःसपत्नं य—द्रत्नाश्वांबरादिकं ॥ कामदेवः स ददिवान् । जामात्रे पौतकं मुदा ॥ २० ॥ हर्षयामास च प्रीति—र्गौरान्न पौरान्न स्वबंधुवत् ॥ दिव्यभोजनतांबूल—दुकूलाभरणादिभिः ॥ २१ ॥ ततः प्रियाभिरष्टाभि—रिंद्राणीभिरिवाद्रिभित् ॥ कुमारः श्वशुरादेशा—दध्यास्त सदनं नवं ॥ २२ ॥ अंगसंवाहनालाप—तांबूलाद्यर्पणादिभिः ॥ प्रियाभिर्लोभ्यमानोऽपि । प्रियोऽभिद्यन नाश्मवत ॥ ॥ २३ ॥ किंतु मोहितवद्दध्या—वहो पुण्यस्य वल्गितं ॥ दुर्घटं घटयत्येव । यन्नटित्येव देहिनां ॥ ॥ २४ ॥ क्व स गोपगिरिडंगः । क्वैषा च वलभीपुरी ॥ क्व तद्वासी कुमारोऽहं । क्वैनाः श्रेष्ठितनूरुहाः ॥ २५ ॥ परं पितुरुपालंभ—देवीसंगमनादिना ॥ मत्पुण्यमेव सफलं । तदिदं पर्यणीनमत् ॥ ॥ २६ ॥ मन्ये श्लोकोऽपि वाग्देव्याः । कृत्येनानेन संप्रति ॥ सत्यार्थतां दधातिस्म । न मृषा देवतोचितं ॥ २७ ॥ आसां च दक्षतां ज्ञातुं । श्लोकं स्वज्ञापनाकृते ॥ लिखित्वा यामि मां तेन । विदंत्येताः प्रिया नवाः ॥ २८ ॥ इति ध्यानपरे पुण्य—सारे तं मंदिरात्ततः ॥ प्रस्थापयितुकामेव यातुकामा निशाजनि ॥ २९ ॥ षड्भिः कुलकं ॥

अथ वैवाहिकीं विप्र—रूपां मुक्त्वा परं धनं ॥ देहशंकाकुलं कृत्वा । कुमारो निर्गतस्ततः ॥
॥ ३० ॥ नितांतकांतभक्तत्वा—द्गुणश्रीरष्टमी प्रिया ॥ तत्पृष्टे निर्ययौ हस्ते । वहंती कनकालुकां
॥ ३१ ॥ स तस्यामेव पश्यंत्यां । बहिर्द्वारप्रकोष्टके ॥ एकं लिलेख सुश्लोकं । श्लोकं स्वज्ञापनाकृते
॥ ३२ ॥ पुण्यसारस्ततो गत्वा । पूर्वं संकेतितास्पदं ॥ समागंस्त तयोर्देव्यो—स्तद्धर्मं प्रक्रमाणयोः
॥ ३३ ॥ तं पाणिग्रहचिह्नाढ्यं । दृष्ट्वा देव्यावपृछतां ॥ त्वमेव पर्यणैषीः किं । कामदेवकनीरिमाः ॥
॥ ३४ ॥ कुमारेणोमिति प्रोक्ते । स्मित्वा देव्यौ जजल्पतुः ॥ धन्यस्त्वं परिणिन्ये य—स्तादृशी.
पद्मलोचनाः ॥ ३५ ॥ पुण्यसारोऽवदत्सोऽयं । प्रसादो युवयोर्मयि ॥ पंगोरिव न चेदत्र । कथं स्या
न्मे समागमः ॥ ३६ ॥ त्वं तिष्टासुः प्रतिष्टासु—रथवेति निवेदिते ॥ देवीभ्यां सोऽवदत्तंतु । पि·
तृनेष्याम्यहं सह ॥ ३७ ॥ तं कुमारं समादाय । व्योम्नोत्पत्य च तत्क्षणं ॥ मुक्त्वा च तद्गृहांगणे ।
तिरोधत्तःस्म देवते ॥ ३८ ॥ त्रियामाजागरोद्विग्नः । पुण्यसारस्तदा क्षणं ॥ शय्यां कृत्वोत्तरीयं स्वं ।
निदद्रौ प्रमदोध्धुरः ॥ ३९ ॥ निर्वासितं सुतं मत्वा । पुण्यसारप्रसूरथ ॥ तन्वंत्यमंदमाक्रंदं । जगा·
द दयितंप्रति ॥ ४० ॥ स्वामिंस्तवात्मवत्कोऽद्य । निंद्योऽयं धीविपर्ययः ॥ येन प्राणाधिकः पुत्रो ।

गृहान्निर्वासितस्त्वया ॥ ४१ ॥ अथाहरत हाराद्यं । यद्ययं बाल्यकेलिभिः ॥ शिक्षणीयस्तदा सम्य-ग्शिक्षाश्यो न तु भृत्यवत ॥ ४२ ॥ स्मरसि त्वं कियांस्ताप—स्तदासीन्निःसुतस्य ते ॥ उत्पत्स्यते कथंकारं । कियतार्थव्ययेन सः ॥ ४३ ॥ अस्थिरस्य धनस्यार्थे । निर्भर्त्सयति कः सुतं ॥ कूटलोह-कृते को हि । परित्यजति कांचनं ॥ ४४ ॥ तदुत्तिष्ट सुतं सद्यो । मृगयित्वा समानय ॥ नोदये प्रे-क्ष्य मुखं तस्य । नान्यथेति विनिश्चयः ॥ ४५ ॥ धनसारोऽवदद्भद्रे । निराकर्तुं कुकर्मतां ॥ शिक्षि-तस्तनयो येन । मम प्राणाधिकोऽस्ति सः ॥ ४६ ॥ स्तेयादिकृत्तनूजोऽपि । कुलप्रध्वंसहेतवे ॥ प्रा-णनाशाय पीयूष—मपि हि क्ष्वेमिश्रितं ॥ ४७ ॥ यदि व्यसनिनं पुत्रं । शिक्षयेन्न पिता तदा ॥ स तत्पापेन लिप्येत । प्रजापापेन भूपवत् ॥ ४८ ॥ इत्याश्वास्य प्रियां श्रेष्टी । धनसारो बहिर्ययौ ॥ ददर्श तत्र सुप्तं स्वं । पुत्रं वटतरोरधः ॥ ४९ ॥ तं समुत्थापयामास । धनसारः प्रमोदतः ॥ स मानीय गृहे तूर्णं । स्वप्रियामप्यतोषयत् ॥ ५० ॥ त्यक्त्वा दुर्जनसंगं च । पुण्यसारस्तदादितः ॥ सुसाधूनां प्रसंगेन । सदा पुण्यपरोऽजनि ॥ ५१ ॥

गुणश्रीरथ तत्रस्था—नागमं निजस्वामिनः ॥ ज्ञात्वा चिंतातुरीभूय । तं श्लोकं समवाचयत्

॥ ५२ ॥ श्लोकभावार्थतो ज्ञात्वा । श्रीगोपगिरिवासिनं ॥ स्वकीयं स्वामिनं साध्य । गतं निजपुरंप्र-
ति ॥ ५३ ॥ द्रुतमागत्य गेहांतः । कथयामास सा निजाः ॥ भगिनीःप्रति तद्वृत्तं । चिंताव्याकु-
लिता हृदि ॥ ५४ ॥ युग्मं ॥ ततोऽसौ निजपितृभ्यां । भगिनीभ्यश्च संजगौ ॥ भवदाज्ञापिताहं
द्रा—क्तत्र गंतुं समुत्सहे ॥ ५५ ॥ कृत्वा पुरुषवेषं च । स्थित्वा तत्र पुरे मुदा ॥ वणिग्भूय करि-
ष्यामि । निजस्वामिगवेषणं ॥ ५६ ॥ षण्मासाभ्यंतरे नूनं । गृहीत्वा स्वामिनं निजं ॥ आगमि-
ष्यामि भो सख्यो—ऽन्यथा नः शरणं चिता ॥ ५७ ॥ इत्युक्त्वाल्पपरिवारा । गुणश्रीर्नररूपभाक्
॥ समागाद्वणिग्भूय । तत्र गोपगिरिपुरे ॥ ५८ ॥ राजमार्गसमीपे सा । लब्ध्वा धामं मनोहरं ॥
भाटकेन परीवार—सहिता तत्र सा स्थिता ॥ ५९ ॥ गुणचंद्रेति नाम स्वं । प्रकटीकृत्य ततोऽथ सा
॥ चकार बहु वाणिज्यं । नानावस्तुगतं पुरे ॥ ६० ॥ उपहारं वरं दत्वा—न्यदा सोऽगान्नृपांति-
के ॥ नृपोऽपि बहुसन्मानं । ददौ तस्मै वणिग्भुवे ॥ ६१ ॥ राज्ञा प्रोक्तं सभायां मे । त्वयागंत-
व्यमेव भोः ॥ इत्युक्तो गुणचंद्रोऽपि । तत्र चायात्यहर्निशं ॥ ६२ ॥ अन्यदाऽसौ हयारूढो । रूप-
मन्मथजित्वरः ॥ पथि गछन् गवाक्षस्थ—राजपुत्र्या निरीक्षितः ॥ ६३ ॥ मदनव्याकुला जाता ।

दृष्ट्वा मदनवत्यपि ॥ हृयस्थं तं कुमारं द्रा—ग्गुणचंद्रं गुणोज्ज्वलं ॥ ६४ ॥ प्रियंवदां तदापृष्ठ—त्सखीं स्वीयां नृपांगजा ॥ सखि कोऽयं युवा याति । मन्मनश्चौरवद्धरन् ॥ ६५ ॥ सख्योक्तं गुणचंद्रोऽयं । वणिक्पुत्रो महागुणः ॥ तयोक्तं परिणेष्येऽहं । तमेव सखि नापरं ॥ ६६ ॥ इत्युक्त्वा विह्वलीभूता । कामबाणैरिवाञ्चितः ॥ अतीवखिद्यमाना सा । लुलोठाश्च महीतले ॥ ६७ ॥ प्रियंवदा वदत्तस्यै । कष्टं मास्म कृथा वृथा ॥ त्वन्मात्रे प्रणिगद्यैत—त्कारयिष्ये तवेप्सितं ॥ ६८ ॥ आश्वास्येति सुतां राज्ञः । सा तदैव प्रियंवदा ॥ तज्जनन्याः पुरः सर्वं । तद्वृत्तांतं न्यवेदयत ॥ ६९ ॥ ज्ञात्वा मदनवत्यास्त—त्समरश्रीर्मनीषितं ॥ एकांते निजकांताय । कथयामास सादरं ॥ ५२ ॥ नृपः समरसिंहस्ता—माहस्म सुचिरं मम ॥ अस्त्येव देवि त्वत्पुत्री—पाणिग्रहमहोद्यमः ॥ ५३ ॥ किंतु तादृग्वराभावा—दनुद्यम इवास्म्यहं ॥ परं मन्यमभूद्रक्ता । गुणचंद्रे यदात्मजा ॥ ५४ ॥ वरः सोऽयं वरेण्यश्रीः । पुण्यैरेवाप्यते प्रिये ॥ परं वणिक्सुतोऽस्तीति । चिंता मनसि मे मनाक् ॥ ॥ ५५ ॥ राज्ञी हृष्टा समाचष्ट । स्वामिंश्चिंतेयमुज्झ्यतां ॥ वणिजो हि न सामान्या । लोकोत्तरगुणत्वतः ॥ ५६ ॥ कुलं शीलं सदाचारो । विवेको विनयो नयः ॥ श्रेयस्करं च लक्ष्म्यादि । वणि-

द्वेवाखिलं किल ॥ ५७ ॥ तदियं दीयतामेव । गुणचंद्राय नंदिनी ॥ संबंधोऽस्त्वनयोः श्लाघ्यः ।
कौमुदीचंद्रयोरिव ॥ ५८ ॥ अंगीकृत्य प्रियोक्तं त—त्तत्क्षणं क्षोणिवल्लभः ॥ गुणश्रियं समाकार्य ।
रहः कार्यविदूचिवान् ॥ ५९ ॥ दैवात्प्रीतिलताकंदं । सौहार्दमिदमावयोः ॥ जज्ञे तद्येन न क्वापि ।
दृश्यते किंचिदंतरं ॥ ६० ॥ अधुना तद्दृढत्वाय । त्वमंगीकुरु मेंगजां ॥ यद्भूपस्य पुरः सर्वा । दे·
व्यो हि तृणसन्निभाः ॥ ६१ ॥ चिंताचांता गुणश्रीस्तं । जगौ गोपगिरीश्वरं ॥ संबंधोऽयं प्रजानाथ ।
कथमौचित्यमंचति ॥ ६२ ॥ क्व विवस्वान् क्व खद्योतः । क्व मेरुः क्व च सर्षपः ॥ क्व कल्पद्रुः क्व
धत्तूरः । क्व माणिक्यं क्व कर्करः ॥ ६३ ॥ क्व देवः श्रीजिनश्रीदः । क्वाहं रंको वणिक्सुतः ॥ न
महोदधिसंबंधं । तडागोऽर्हति कर्हिचित् ॥ ६४ ॥ यो देववत्सदाराध्यो । दूरस्थैरेव यत्नतः ॥ स्व·
प्नेऽप्यस्पृहणीयं त—त्सुतावीवाहसाहसं ॥ ६६ ॥ न साम्राज्यं न बह्वर्द्धि—रेकत्वावस्थितिर्न मे ॥
न मातापितरावत्र । कथं कार्यमिदं भवेत् ॥ ६७ ॥ पुनस्तमालपद्भूपः । स्वरूपं यदिदं त्वया ॥ वि·
ज्ञप्यतेस्म तत्सर्वं । विदन्नस्मि हृदंतरे ॥ ६८ ॥ परं कदापि त्वां दृष्ट्वा । देवे देवीव मत्सुता ॥
त्वय्यन्वरज्यतात्यर्थं । प्रार्थयेऽहं ततः कृतिन् ॥ ६९ ॥

… निजचित्तवत् ॥ गुणश्रीर्मंदिरे तत्र । राजपुत्रीमतिष्ठिपत् ॥ ९४ ॥ ततः सा
स्वपरीवार—मित्यूचे चतुराशया ॥ निरूप्यं न स्वरूपं मे । पुरतोऽस्याः कदाचन ॥ ९५ ॥ गोष्ठ्यां
सुधासधर्मीयां । प्रवृत्तायां मिथो निशि ॥ स्वं निह्नोतुमनाः स्माह । गुणश्रीर्नृपनंदिनी ॥ ९६ ॥
प्रिये व्रतविशेषस्य । पर्युपास्तिकृते मया ॥ षण्मासीप्रमितं ब्रह्म—व्रतमस्त्युररीकृतं ॥ ९७ ॥ मासा
द्वित्रा गतास्तत्र । तस्मिन्नवसिते सति ॥ त्वया सार्धं प्रवर्धिष्णु—प्रेमा मोदयेऽन्वहं सुखं ॥ ९८ ॥
तावत्त्वं मास दूनाभू—रेवमाश्वास्य तामसौ ॥ गोष्ठ्या भूषादिदानैश्च । प्रीणयामास नित्यशः ॥
॥ ९९ ॥ चतुर्भिः कलापकं ॥ अनंगरंगभंगेन । खिन्ना मदनवत्यपि ॥ कथंचिद्दिवसान् क्लेश—
विवशानत्यवाहयत ॥ १०० ॥ पुण्यसारकुमारोऽथ । कामदेवभुवा समं ॥ दृष्ट्वा मदनवत्यास्तं । पा
णिग्रहमहोत्सवं ॥ १ ॥ सर्वथापि परित्यक्त—तदीयाप्तिमनोरथः ॥ हिमक्लिष्टेंदुमंदश्री—र्मनसि ध्या
तवानदः ॥ २ ॥ युग्मं ॥ मया मदनवत्यर्थं । प्रार्थिता प्राक् सरस्वती ॥ आहस श्लोकमेकं मां ।
सा तत्प्राप्तिनिबंधनं ॥ ३ ॥ स्मरतोऽपि तमंतर्मे । मंत्रवत्तत्समीहया ॥ कुमारो गुणचंद्रस्तां । परिणि-
न्येऽनुरागिणीं ॥ ४ ॥

श्लोकेन वंचयामास । वाणी धूर्तेव मां कुतः ॥ ध्यानात्प्रत्यक्षयित्वा ता—मुपालप्स्येनमामहं
॥ ५ ॥ पुण्यसारस्ततो ध्यान—प्रकटां वागधीश्वरीं ॥ महतीभक्तिरानम्य । योजयित्वा करौ जगौ
॥ ६ ॥ देवि श्लोकस्त्वयोक्तोऽत्र—न्मह्यं नृपसुताप्तये ॥ मयि तद्व्यायकेऽप्यासी—त्सा परस्य परि·
ग्रहः ॥ ७ ॥ भक्तिर्यदि त्वदीयापि । मृषाद्यत्वेन दूषिता ॥ भानुप्रज्ञा तदा किं न । स्यात्तमिस्रेण
मिश्रिता ॥ ८ ॥ त्वयापि वंचितोऽहं चे—द्वात्सल्यरसकुल्यया ॥ वंचयित्री ध्रुवं तर्हि । पुत्रं माता·
प्यतः परं ॥ ९ ॥ वाणी बभाण मां वत्स । किमुपालंभसे मृषा ॥ दैवी वाग्मेरुचूलेव । न चल
त्येव कर्हिचित् ॥ १० ॥ वंचयेऽहं प्रपंचेन । सामान्यमपि नो जनं ॥ निर्व्याजं भक्तिभाजं च ।
किं पुनस्त्वां नरोत्तमं ॥ ११ ॥ अद्यापि राजपुत्रीं तां । स्ववधूं चेद्दिदृक्षसे ॥ निर्मिमीष्व तदा मि
त्रं । कामदेवतनूरुहं ॥ १२ ॥ देव्यामुक्त्वेति यातायां । पुण्यसारो व्यचारयत् ॥ अधुनापि जगा·
देयं । किमेतदसमंजसं ॥ १३ ॥ परकीया प्रिया सासीत । परस्त्रीविमुखस्त्वहं ॥ तन्मे कथं नविर्बा
स्त्री । वंचितोऽस्मि पुनर्ध्रुवं ॥ १४ ॥ तथापि गुणचंद्रेण । सार्धं निर्माय सौहृदं ॥ श्रुताधिष्ठायिका·
दिष्टं । वितनिष्ये प्रियेप्सया ॥ १५ ॥ ततः स धिषणासारः । पुण्यसारः स्वमानसे ॥ गुणश्रियं स·

तस्माद्धनादिसंकोचं । पित्रादेरपि चोत्तरं ॥ नापेक्षेऽहं ततस्त्वेन—प्रेमवृद्ध्यै प्रमाणय ॥७०॥
गाढमाग्रहमालोक्य । गुणश्रीर्धरणीशितुः ॥ वृद्धानापृच्छ्य दा[illegible] । प्रानरुत्तरमित्यवग् ॥ ७१ ॥
ततोऽभ्येत्य निजं वेश्म । विस्मेरा कामदेवभूः ॥ तत्रीममरसिंहस्य । वाक्यं वृद्धाग्रतोऽभ्यधात् ॥
॥ ७२ ॥ अन्वयुंक्त च किं युक्त—मत्र वृद्धा निगद्यतां ॥ दैवेन कीदृशे कार्य—संकटे पातिता
स्मि हा ॥ ७३ ॥ एकतोऽयं नृपः पुत्रीं । दत्ते तत्वमसंविदन् ॥ अन्यतोऽहं कृतछद्म—पौंस्ना नारी
करोमि किं ॥ ७६ ॥ प्रादुष्करोम्यथ स्वात्म—रूपं तर्ह्यखिले पुरे ॥ विडंबना ममोच्चैः स्या—त्प्रि·
यप्राप्तिश्च नो तथा ॥ ७७ ॥ गुणश्रीवाचमाचम्य । किंचिद्रम्यं तदुत्तरं ॥ ध्यानादपि न पश्यंतो ।
वृद्धास्तामाचचक्षिरे ॥ ७८ ॥ वार्धके नैव वृद्धाः स्मो । न वयं शुद्धया धिया ॥ चिंतयन्तोऽपि तेने·
ह । किंचिज्जानीमहे न हि ॥ ७९ ॥ त्वद्बुद्धिरेव सर्वेषु । कार्येष्वायाति धुर्यतां ॥ यथोचितं त्व·
मेवोच्चै—र्ध्यात्वा वत्से विधत्स्व तत ॥ ८० ॥ गुणश्रिया ततोऽध्यायि । निषिद्धोऽप्येष नृधवः ॥
न स्थास्यति ध्रुवं कन्या—पाणिग्रहमहाग्रहात ॥ ८१ ॥ न चार्वाक्स्वप्रियप्राप्तेः । स्त्रीत्वं वक्तुं म·
मोचितं ॥ परिणेष्येऽधुना तस्मा—त्पुंवेषस्था नृपात्मजां ॥ ८२ ॥ षड्भिर्मासैर्यदि प्राप्तः । प्रेयानत्र

मया तदा ॥ भूपात्मजापि तस्यैव । भवित्री प्राणवल्लभा ॥ ७३ ॥ अथ चेन्न प्रियः प्राप्तः । प्रमी
तायां तदा मयि ॥ यथेहं तनुतां राज—नंदिनी स्वमनीषितं ॥ ७४ ॥ ततः प्रातर्नृपास्थानीं । पु·
ण्यसारप्रियागमत् ॥ तन्निर्बंधात्प्रपेदे च । तत्पुत्रीपाणिपीडनं ॥ ७५ ॥ श्रुत्वा मदनवत्यासौ—त्तमु·
दंतमनंतमुत् ॥ स्त्रीणां प्रायः प्रियप्राप्तिः । सुधातोऽप्यधिकायते ॥ ७६ ॥ नृपः समरसिंहोऽथ । प्री·
तस्तुङ्गेतरोत्सवैः ॥ तया गुणश्रिया साकं । स्वकनीं पर्यणीनयत ॥ ७७ ॥ गुणश्रीपाणिना स्पृष्ट ।
चित्ते मदनवत्यधात ॥ यं संमदं न सोऽध्वन्यो—ऽवात्कविगिरामपि ॥ ७८ ॥ तदा वस्त्रांचला गो·
प—गिरिनाथसुतांचले ॥ गुणश्रीर्वेदिमध्यस्था । विस्मिता ध्यानवत्यद ॥ ७९ ॥ कलयितुमलं स·
र्वव्यापिकविप्रतिज्ञा न यत् । प्रविशति मनःस्फूर्तिर्यस्मिन्न विष्टपलंघिनी ॥ विलसति न यज्ज्योति
र्ज्ञानेऽप्यनागतवेदके । तदपि सहसा कार्यं दैवं तनोत्यतिकौतुकं ॥ ८० ॥ अदृष्टमश्रुतं चापि ।
विदधे विधिनात्र यत् ॥ घृणीयमानहृदयं । स्त्रीपाणिग्रहणं स्त्रिया ॥ ८१ ॥ पाणिमुक्तिक्षणे दो
णी—श्वरः श्रेष्टितनूरुहे ॥ हास्तिकाश्वीयहेमाद्यं । माद्यत्प्रीतिः प्रदत्तवान् ॥ ८२ ॥ ततः समरसिं·
हाद्यैः । शिक्षितां विस्मिता हृदि ॥ तां समादाय मदन—वतीं सा स्वगृहं ययौ ॥ ८३ ॥ कारयि·

त्वांतरावासं । विपुलं निजचित्तवत ॥ गुणश्रीमंदिरे तत्र । राजपुत्रीमतिष्ठिपत् ॥ ९४ ॥ ततः सा स्वपरीवार—मित्यूचे चतुराशया ॥ निरूप्यं न स्वरूपं मे । पुरतोऽस्याः कदाचन ॥ ९५ ॥ गोष्ठ्यां सुधासधर्मायां । प्रवृत्तायां मिथो निशि ॥ स्वं निह्नोतुमनाः स्माह । गुणश्रीर्नृपनंदिनीं ॥ ९६ ॥ प्रिये व्रतविशेषस्य । पर्युपास्तिकृते मया ॥ षण्मासीप्रमितं ब्रह्म—व्रतमस्त्युररीकृतं ॥ ९७ ॥ मासा द्वित्रा गतास्तत्र । तस्मिन्नवसिते सति ॥ त्वया सार्धं प्रवर्धिष्णु—प्रेमा गोष्ठ्येऽन्वहं सुखं ॥ ९८ ॥ तावत्त्वं मास्म दूनाभू—रेवमाश्वास्य तामसौ ॥ गोष्ठ्या भूषादिदानैश्च । प्रीणयामास नित्यशः ॥ ॥ ९९ ॥ चतुर्भिः कलापकं ॥ अनंगरंगभंगेन । खिन्ना मदनवत्यपि ॥ कथंचिद्दिवसान् क्लेश—विवशानत्यवाहयत ॥ १०० ॥ पुण्यसारकुमारोऽथ । कामदेवभ्रुवा समं ॥ दृष्ट्वा मदनवत्यास्तं । पाणिग्रहमहोत्सवं ॥ १ ॥ सर्वथापि परित्यक्त—तदीयाप्तिमनोरथः ॥ हिमक्लिष्टेंदुमंदश्री–र्मनसि ध्यातवानदः ॥ २ ॥ युग्मं ॥ मया मदनवत्यर्थं । प्रार्थिता प्राक् सरस्वती ॥ आहस्म श्लोकमेकं मां । सा तत्प्राप्तिनिबंधनं ॥ ३ ॥ स्मरतोऽपि तमंतर्मे । मंत्रवत्तत्समीहया ॥ कुमारो गुणचंद्रस्तां । परिणिन्येऽनुरागिणीं ॥ ४ ॥

श्लोकेन वंचयामास । वाणी धूर्तेव मां कुतः ॥ ध्यानात्प्रत्यक्षयित्वा ता—मुपालप्स्येतमामहं
॥ ५ ॥ पुण्यसारस्ततो ध्यान—प्रकटां वागधीश्वरीं ॥ महतीभक्तिरागस्य । योजयित्वा करौ जगौ
॥ ६ ॥ देवि श्लोकस्त्वयोक्तोऽभू—न्मह्यं नृपसुताश्रये ॥ मयि तच्छ्रायकेऽप्यासी—त्सा परस्य परि·
ग्रहः ॥ ७ ॥ भक्तिर्यदि त्वदीयापि । मृषाद्यत्वेन दूषिता ॥ ज्ञानुप्रज्ञा तदा किं न । स्यात्तमिस्रेण
मिश्रिता ॥ ८ ॥ त्वयापि वंचितोऽहं चे—द्वात्सल्यरसकुल्यया ॥ वंचयित्री ध्रुवं तर्हि । पुत्रं माता·
प्यतः परं ॥ ९ ॥ वाणी बभाण मां वत्स । किमुपालंभसे मृषा ॥ देवी वाग्मेरुचूलेव । न चल
त्येव कर्हिचित् ॥ १० ॥ वंचयेऽहं प्रपंचेन । सामान्यमपि नो जनं ॥ निर्व्याजं भक्तिभाजं च ।
किं पुनस्त्वां नरोत्तमं ॥ ११ ॥ अद्यापि राजपुत्रीं तां । स्ववधूं चेद्विधीत्ससे ॥ निर्मिमीष्व तदा मि·
त्रं । कामदेवतनूरुहं ॥ १२ ॥ देव्यामुक्त्वेति यातायां । पुण्यसारो व्यचारयत् ॥ अधुनापि जगा
देयं । किमेतदसमंजसं ॥ १३ ॥ परकीया प्रिया सासीत । परस्त्रीविमुखस्त्वहं ॥ तन्मे कथं नविर्वा
स्त्री । वंचितोऽस्मि पुनर्ध्रुवं ॥ १४ ॥ तथापि गुणचंडेण । सार्धं निर्माय सौहृदं ॥ श्रुताधिष्ठायिका·
दिष्टं । वितनिष्ये प्रियेप्सया ॥ १५ ॥ ततः स धिषणासारः । पुण्यसारः स्वमानसे ॥ गुणश्रियं स·

त्वांतरावासं । विपुलं निजचित्तवत ॥ गुणश्रीर्मंदिरे तत्र । राजपुत्रीमतिष्टिपत् ॥ ७४ ॥ ततः सा स्वपरीवार—मित्यूचे चतुराशया ॥ निरूप्यं न स्वरूपं मे । पुरतोऽस्याः कदाचन ॥ ७५ ॥ गोष्ट्यां सुधासधर्मीयां । प्रवृत्तायां मिथो निशि ॥ स्वं निह्नोतुमनाः स्माह । गुणश्रीर्नृपनंदिनीं ॥ ७६ ॥ प्रिये व्रतविशेषस्य । पर्युपास्तिकृते मया ॥ षण्मासीप्रमितं ब्रह्म—व्रतमस्त्युररीकृतं ॥ ७७ ॥ मासा द्वित्रा गतास्तत्र । तस्मिन्नवसिते सति ॥ त्वया सार्धं प्रवर्धिष्णु—प्रेमा गोष्ट्येऽन्वहं सुखं ॥ ७८ ॥ तावत्त्वं मास्म दूनात्रू—रेवमाश्वास्य तामसौ ॥ गोष्ट्या नृपादिदानैश्च । प्रीणयामास नित्यशः ॥ ॥ ७९ ॥ चतुर्भिः कलापकं ॥ अनंगरंगजांगेन । खिन्ना मदनवत्यपि ॥ कथंचिद्दिवसान् क्लेश—विवशानत्यवाहयत ॥ १०० ॥ पुण्यसारकुमारोऽथ । कामदेवसुवा समं ॥ दृष्ट्वा मदनवत्यास्तं । पाणिग्रहमहोत्सवं ॥ १ ॥ सर्वथापि परित्यक्त—तदीयाप्तिमनोरथः ॥ हिमक्लिष्टेंदुमंदश्री—र्मनसि ध्यातवानदः ॥ २ ॥ युग्मं ॥ मया मदनवत्यर्थे । प्रार्थिता प्राक् सरस्वती ॥ आहस्म श्लोकमेकं मां । सा तत्प्राप्तिनिबंधनं ॥ ३ ॥ स्मरतोऽपि तमंतर्मे । मंत्रवत्तत्समीहया ॥ कुमारो गुणचंद्रस्तां । परिणिन्येऽनुरागिणीं ॥ ४ ॥

श्लोकेन वंचयामास । वाणी धूर्तेव मां कुतः ॥ ध्यानात्प्रत्यक्षयित्वा ता—मुपालप्स्येतमामहं
॥ ५ ॥ पुण्यसारस्ततो ध्यान—प्रकटां वागधीश्वरीं ॥ महतीभक्तिरानम्य । योजयित्वा करौ जगौ
॥ ६ ॥ देवि श्लोकस्त्वयोक्तोऽत्र—न्मह्यं नृपसुताश्रये ॥ मयि तद्ध्यायकेऽप्यासी—त्सा परस्य परि·
ग्रहः ॥ ७ ॥ भक्तिर्यदि त्वदीयापि । मृषात्वत्वेन दूषिता ॥ भानुप्रभा तदा किं न । स्यात्तमिस्रेण
मिश्रिता ॥ ८ ॥ त्वयापि वंचितोऽहं चे—द्वात्सल्यरसकुल्यया ॥ वंचयित्री ध्रुवं तर्हि । पुत्रं माता·
प्यनः परं ॥ ९ ॥ वाणी बभाण मां वत्स । किमुपालंभसे मृषा ॥ दैवी वाग्मेरुचूलेव । न चल
त्येव कर्हिचित् ॥ १० ॥ वंचयेऽहं प्रपंचेन । सामान्यमपि नो जनं ॥ निर्व्याजं भक्तिभाजं च ।
किं पुनस्त्वां नरोत्तमं ॥ ११ ॥ अद्यापि राजपुत्रीं तां । स्ववधूं चेद्दिधीत्ससे ॥ निर्मिमीष्व तदा मि·
त्रं । कामदेवतनूरुहं ॥ १२ ॥ देव्यामुक्त्वेति यातायां । पुण्यसारो व्यचारयत् ॥ अधुनापि जगा·
देयं । किमेतदसमंजसं ॥ १३ ॥ परकीया प्रिया सासीत । परस्त्रीविमुखस्त्वहं ॥ तन्मे कथं भविती
स्त्री । वंचितोऽस्मि पुनर्ध्रुवं ॥ १४ ॥ तथापि गुणचंद्रेण । सार्धं निर्माय सौहृदं ॥ श्रुताधिष्ठायिका·
दिष्टं । वितनिष्ये प्रियेप्सया ॥ १५ ॥ ततः स धिषणासारः । पुण्यसारः स्वमानसे ॥ गुणश्रियं स·

स्वीकर्तुं । कामयामास तत्क्षणं ॥ १६ ॥ गुणश्रीरपि कांतस्य । किंवदंतीमथो क्वचित् ॥ अविंदंती
विधाप्य द्रा—ग्वेदीं द्वारबहिर्भुवि ॥ १७ ॥ तत्र स्थित्वा स्वयं भृत्यै—र्वाणिज्याद्यं व्यदीधपत ॥
व्यवहारचिकीः प्रेयान् । कदाप्यत्रागमेदिति ॥ १८ ॥ युग्मं ॥ पुण्यसारस्तदा वेद्या—मुपविष्टां गु
णश्रियं ॥ संगंतु गतवांस्तत्र । तुंगरंगत्तरंगहृत् ॥ १९ ॥ दूरतोऽपि समायांतं । गुणश्रीः प्रेक्ष्य तं
पुरः ॥ अजानानापि कांतं स्वं । प्रमोदाद्वैतमासदत् ॥ २० ॥ प्रथमं रचयामास । साभ्युत्थानं हृदा
मुदा ॥ विस्तृताक्ष्यां ततो दृग्भ्यां । सस्नेहं च व्यलोकत ॥ २१ ॥

पदानि कतिचिद्गत्वा । निवेश्य स्वासनेऽद्भुते ॥ वाचा सुधामुचा सा तं । वार्तयामासुषी चिरं
॥ २२ ॥ पुण्यसारोऽपि हृष्टः सं—स्तद्गोष्ठीरसमापिबत् ॥ निमग्न इव पीयूष—पयोधौ निदधौ मुदं
॥ २३ ॥ मिथः स्त्रीपुंसभावं तौ । न यद्यप्यवजग्मतुः ॥ तथापि तन्मनोनेत्रे । निस्तुषं सुखमापतुः
॥ २४ ॥ नूनं दृग्मनसी एव । प्रियाप्रियविवेचिनी ॥ स्यातां सद्योऽपि यद् दृष्ट्वा । प्रीतिद्वेषभृते हि
ते ॥ २४ ॥ स्वचित्तमिव तच्चित्तं । प्रीतं प्रेक्ष्य स्वसन्निधेः ॥ पुण्यसारस्त्वया सार्धं । मैत्री मेऽस्त्वि-
त्ययाचत ॥ २५ ॥ अभाषिष्ट गुणश्रीस्तं । मैत्र्ये मे केयमर्थना ॥ न हि पीयूषपानार्थे । प्रार्थ्यते

कोऽपि कुत्रचित् ॥ २६ ॥ सोऽपि स्याद्धनमूर्धन्यो । यस्ते दास्यमपि श्रयेत् ॥ किं वाच्यः स तु यं प्रीत्या । त्वं वयस्यायसि स्वयं ॥ २७ ॥ इति तज्जल्पितानल्प—प्रोद्भृतामोदमेदुरः ॥ प्रीतिं गुणश्रिया सार्धं । संततं सोऽप्यवर्धयत् ॥ २८ ॥ अजनिष्ट तयोरैक्यं । मन्येऽन्योन्यानुवेधतः ॥ अन्यथा कथमापन्नौ । तदात्मानौ सरूपतां ॥ २९ ॥ एवं प्रियोल्लसत्प्रीति—हृष्टा सा श्रेष्ठिनंदिनी ॥ पञ्चमासीं समस्तिर्विम्नै—रपूर्णामत्यवाहयत् ॥ ३० ॥ तथापि न प्रियोदंतः । क्वापि नापि तया यदा ॥ तदा मृत्युकृतेऽवादि । विजने स्वपरिच्छदः ॥ ३१ ॥ प्रत्यज्ञायि मया पूर्वं । षड्भिर्मासैः पतिं यदि ॥ न प्राप्नोमि तदा वह्नौ । सतीवत्स्वं जुहोम्यहं ॥ ३२ ॥ क्रमेण सातिचक्राम । प्रियः प्राप्तो न कुत्रचित् ॥ तदद्य नगराद्बाह्ये । रच्यतां चंदनैश्चिता ॥ ३३ ॥ तया गिरा ज्वलद्दाव—कीलयेवाकुलीकृतः ॥ व्याजहार परिवार—स्तांप्रति स्खलदक्षरं ॥ ३४ ॥ अद्यापि त्वत्प्रतिज्ञायाः । सप्तदिन्यवशिष्यते ॥ निश्चितं लप्स्यते क्वापि मृग्यमाणः पतिस्तव ॥ ३५ ॥ अथाभाग्यान्न स प्राप्त—स्तथापि न तवोचितं ॥ मृत्यु माश्रयितुं येन । तथा जीवस्य दुर्गतिः ॥ ३६ ॥ दुर्लभं नृभवं प्राप्य । धर्मं निर्माहि निर्मलं ॥ यस्मादिहेप्सितं सर्वं । परलोके च सद्गतिः ॥ ३७ ॥

त्रेनाश्रुवर्षेण । वार्षिकांबुदवीचिवत् ॥ प्रथिष्ठमपि पंथानं । जनयंतीव पंकिलं ॥ ५० ॥ प्राणान्नि
ष्काशयंतीव । मुष्टिघृष्टोरुहृत्तटात् ॥ तदैव विह्वलीभूता । पृष्टे मदनवत्यगात ॥ ५१ ॥ त्रिभिर्विशेष
कं ॥ राजापि राजलोकोऽपि । पौरवर्गोऽपि दुःखितः ॥ तत्राजगाम वेगेन । तं निवारयितुं मृतेः
॥ ५२ ॥ ऊचे समरसिंहस्तां । वत्स स्वजनवत्सल ॥ अकस्मात्कारणात्कस्मा—न्म्रियसे क्लेशवानि
व ॥ ५३ ॥ न्यूनं किमपि ते वस्तु । न्यक्कृतोऽस्यथ केनचित ॥ दृष्टानां किमुतानिष्टं । किं ते दुः
खं निवेदय ॥ ५४ ॥ इदं वपुरियं लक्ष्मी—रियं स्त्री स्वजनोऽप्ययं ॥ एतत्सर्वं वृथैव त्वं । न परि
त्यक्तुमर्हसि ॥ ५५ ॥ त्वं वाङ्मयाब्धिपारीण—स्त्वं कलैकनिकेतनं ॥ त्वं दक्षशेखरो ब्रूहि । कि
मित्येवं व्यवस्यसि ॥ ५५ ॥ एवं नृपेण पौरैर—प्युच्चैः पृष्टापि सा तदा ॥ विगोपनभिया स्वस्य
। नाब्रवीन्मृत्युकारणं ॥ ५६ ॥ पंचभिः कुलकं ॥

ततः कर्णे लगित्वास्य—वृद्धानां श्रेष्ठिनंदिनी ॥ उवाच वाचिकान्येवं । प्रियादीनप्रति दीन
गीः ॥ ५७ ॥ मृत्योश्च कारणं मेऽत्र । जानीतं पितरौ युवां ॥ क्षमेथां च मदागस्त—द्यत्कृतं शै
शवादपि ॥ ५८ ॥ धन्यातिधन्या कन्या स्या—दिंदुज्योत्स्नेव मोदिनी ॥ पित्रोरहं तु पापात्मा ।

तापश्रीरिव तापिनी ॥ ५९ ॥ हे स्वसारोऽनलेऽसारं । हुत्वा जीवितमात्मनः ॥ तथा शीघ्रं समायात । यथा मिलत मे पुरः ॥ ६० ॥ सख्यः सख्येन यत्किंचि—द्युष्मदग्रे जगे मया ॥ तदरम्यमपि क्षम्य—मंतिमोऽयं कृतोंजलिः ॥ ६१ ॥ त्रिःपरीय चितां प्रीत्या । गुणश्रीः स्फुटमूचुषी ॥ जगत्साक्षिंस्तथा लोक—पालाः शृणुत मद्वचः ॥ ६१ ॥ पापिन्यात्र मया प्राप्तो । न प्रेयांस्तद्भवांतरे ॥ स एव मे प्रियो भूया—द्भवदीयप्रसादतः ॥ ६२ ॥ युग्मं ॥ ततो नृपादिभिर्लोकै—र्हाकारमुखराननैः ॥ मा मेति वार्यमाणापि । यावद्विशति सा चितां ॥ ६३ ॥ तावद्विज्ञाय तल्लोकात् । पुण्यसारोऽतिविह्वलः ॥ तत्रागाद्बाष्पपूरेण । कुर्वन्नुदकिलामिलां ॥ ६४ ॥ गुणश्रीपरिवारेण । स्नेहेन च भृशेरितः ॥ स कूपारसपाथोधि—स्तांप्रति प्रोचिवानिति ॥ ६५ ॥ किमेतत्कर्म निर्मातुं । भवान् मित्रोपचक्रमे ॥ ईदृग्भवादृशः कश्चि—द्विपश्चिच्चक्रवान्न हि ॥ ६६ ॥ मामन्यधाः सदापि त्वं । तवाकथ्यं न किंचन ॥ यद्येतत्सत्यमाचक्ष्व । प्रविशस्यनलं किमु ॥ ६७ ॥ मृत्युहेतुमनुक्त्वैव । म्रियतेऽथ त्वया सखे ॥ तदा मयापि मर्तव्य—मवश्यमिति मे ग्रहः ॥ ६८ ॥ निवारयति पातकाद्विशति मार्गमत्युज्ज्वलं । न मर्म वदति क्वचित् प्रकटयत्यशेषान् गुणान् ॥ समुद्धरति संकटाद्वहति

दर्पमन्युन्नतौ । मह त्यजति जीवितं स्फुरति मित्रकृत्यं हृदः ॥ ६९ ॥ चित्तेन निर्विकल्पेन । ज-
ल्पित्वेति तदैव सः ॥ सञ्जीजवितुमारेभे । झंपां दातुं चितांतरे ॥ ७० ॥ तादृग्निरूप्य तत्प्रेम । म-
रणांतप्रति तं सुहृत् ॥ स्वरहस्यं रहस्यूचे । गुणश्रीस्तंप्रति स्फुटं ॥ ७१ ॥ तन्निशम्यातिविस्मेरः । पु-
ण्यसारो व्यचिंतयत ॥ अहो पत्नी ममैवेयं । गुणश्रीः स्पष्टमिष्टधीः ॥ ७२ ॥

श्लोकसंकेतमात्रेण । कथमत्रेयमागमत् ॥ कथं च कन्यां राज्ञोऽस्य । परिणिन्ये नृवेषभाक्
॥ ७३ ॥ कथं गोपायतिस्म स्वं । नृपाद्यैः प्रश्निताप्यलं ॥ कथं वा प्रियमप्राप्य । वह्नौ विशति स-
त्वनः ॥ ७७ ॥ नदेतस्या गुणाः पांथी—भवंति न हि वाक्पथं ॥ वैदग्ध्यीदृढतागूढ—मंत्रतासत्य-
तादयः ॥ ७८ ॥ मयाप्येषा सखीचक्रे । साधु वाग्देवतोदितात ॥ नो चेदस्यां मृतायां मे । म्रिये-
रंस्तत्र ताः प्रियाः ॥ ७९ ॥ प्रियाणां वर्यचातुर्य—वीक्षायै दाक्ष्यमीदृशं ॥ कृत्वा मयैव कृतासी—
त्वस्यानर्थपरंपरा ॥ ८० ॥ ध्यात्वेति मज्जनाकंठ—ममंदानंदवारिधौ ॥ वदतिस्म विनोदेन । पुण्य-
सारो निजप्रियां ॥ ८१ ॥ सप्तभिः कुलकं ॥ अहो ते कृत्रिमा प्रीति—रेतावंति दिनान्यभूत् ॥
स्थितापि न मह्यं य—त्त्वयैतज्जातु जल्पितं ॥ ८२ ॥ इदं यदि त्वया प्रीति—प्रारंभेऽप्यज्ञणिष्यत

॥ तदा तदैव त्वत्प्रेयान् । मया त्वां मेलयिष्यत ॥ ८३ ॥ इदानीमपि तत्सिद्धं । साध्यं यन्मां त्व-
मन्यथाः ॥ परं किंचन वच्मि त्वां । यदि मह्यं न कुप्यसि ॥ ८४ ॥ इति तद्वाक्सुधासारैः । प्रमी-
तोज्जीवितेव सा ॥ वामांगस्फुरणात्कांतं । संप्राप्तमिव जानती ॥ ८५ ॥ धनसारसुतं स्माह । मन्म-
नोदाहचंदन ॥ यथेष्टमुच्यतां कोपः । कस्त्वां पतिविदंप्रति ॥ ८६ ॥ युग्मं ॥ सोऽप्यधात्सुभगे का
ते । प्रीतिस्तं कुपितंप्रति ॥ सस्नेहामप्यहो यस्त्वां । निःस्नेहामिव मुक्तवान् ॥ ८७ ॥ तस्मिन् वि
धीयते प्रीति—र्यः स्वस्मिन् प्रीयतेतमां ॥ विरक्ते क्रियमाणा सा । स्यादंधमुखमंडनं ॥ ८८ ॥ म-
र्तव्यं म्रियमाणेन । सार्धमित्थं जनश्रुतिं ॥ ज्ञात्वापि म्रियमाणासि । तस्मै कुप्रेयसे किमु ॥ ८९ ॥
अतोऽपरं प्रियं कृत्वा । विलासं कुरु दुर्लभं ॥ मुधा म्रियस्व मा मुग्धे । निःस्नेहस्वामिनः कृते ॥
॥ ९० ॥ गुणश्रीरथ तत् श्रुत्वा । द्रुतं वज्राहतेव सा ॥ हृदि दोदूयमानाह । पुण्यसारंप्रति वचः
॥ ८९ ॥ अपरप्रियनिर्माणं । यत्त्वं वदसि सांप्रति ॥ तद्युज्यते पणस्त्रीणां । कुलस्त्रीणां न धार्मि-
क ॥ ९० ॥ हास्यमेतत्ततो हित्वा । यदि जानासि मत्प्रियं ॥ तर्ह्यानयेह वेगेन । नोचेन्मर्तुं प्रय-
च्छ मे ॥ ९१ ॥ तादृग्निजप्रियाप्रेम—स्थाम्ना चित्ते चमत्कृतः ॥ पुण्यसारो बभाषे तां । वाचं पीयू-

धर्मिणीं ॥ ८२ ॥ यद्येवं निश्चयस्तेऽस्ति । तर्ह्याश्रय निजाश्रयं ॥ सौभागिनेयि कांतं ते । यथा-
नीय प्रदर्शये ॥ ८३ ॥ मा स्माह नाभिः कूटाभिः । प्रतीयेऽहं त्वदुक्तिभिः ॥ प्रियमेलोऽसि सत्यं
चे—त्तर्ह्यत्रैव स मेलनां ॥ ८४ ॥ प्रियस्तां पुनराचष्ट । सम्यक्परिचयं विना ॥ तमानीतमपीह त्वं
। कथं विज्ञास्यसे वद ॥ ८५ ॥ गुणश्रीः स्माह सुश्लोक । श्लोकसंकेतपाठनः ॥ प्रत्याययिष्यते
मां चे—त्तर्हि ज्ञास्यामि तं प्रियं ॥ २ ॥ स्मित्वा तेनोदिते तस्मिन् । श्लोके तत्श्रुतिमात्रतः ॥
नृत्यंतीव मुदा चित्ते । सा तं ज्ञानवती प्रियं ॥ ३ ॥ भ्रमांतमिव हृन्मध्ये । कांते स्नेहरसं भृशं ॥
धारयंती बहिर्देहे । प्रकटं स्वेदकैतवात् ॥ ४ ॥ उपोषिते इव दृशौ । तदालोकसुधारसं ॥ स्वादयं-
ती करे धृत्वा । गुणश्रीर्निजगाद तं ॥ ५ ॥ युग्मं ॥ स्वामिन् केनापराधेन । स्नेहाधीनहृदः प्रि-
याः ॥ अमुन्यतार्यपुत्रेण । तृणवत्प्रथमेऽह्न्यपि ॥ ६ ॥ स्त्रीणां प्रेम वरं प्राणान् । पत्ये मुंचंति याः
क्षणात् ॥ न तु पुंसां विना दोष—मपि प्रीतप्रियामुचां ॥ ७ ॥ तदानीं वंचयित्वा मां । निलयात्त्वं
पलायितः ॥ इदानीं करलग्नायां । मयि यासि कथं वद ॥ ८ ॥

उक्त्वेति रुदतीनारं । सा प्रीतिवचनामृतैः ॥ वर्षाब्दोक्षितवल्लीव । सोल्लासा प्रेयसा कृता ॥

॥ ९ ॥ गुणश्रीः स्वं प्रियं प्राप्य । यं प्रमोदं समासदत् ॥ तं विवेचयितुं शक्त । सहस्ररसनोऽपि
न ॥ १० ॥ प्रियदर्शनमेवात्र । सुधा सान्या मुधा बुधा ॥ आला यत्पानतस्तापं । सर्वांगीणं वि-
मुंचति ॥ ११ ॥ पुंवेषोऽयं त्वयोत्तार्यो । गृहं गत्वात्र न प्रिये ॥ इत्युक्त्वा तां करे कृत्वा । कुमा-
रोऽभूत्पुरोन्मुखः ॥ १२ ॥ एतत्किमिंद्रजालाग—मित्युच्चैः संत्रपालवः ॥ व्यावर्तिषंत ते सर्वे । नृ-
पाद्याः स्वगृहान् प्रति ॥ १३ ॥ प्रेयसा सममासाद्य । गुणश्रीः सद्म तत्क्षणं ॥ तदादेशान्निजं रूपं ।
नटीव प्रकटं व्यधात् ॥ १४ ॥ सा संप्राप्तनिधानेव । तथोत्सवमनीतनत् ॥ यथा पौरव्रजो जज्ञे ।
विस्मयार्पितमानसः ॥ १५ ॥ निशाख्य निजनाथस्य । स्त्रीत्वं मदनवत्यथ ॥ प्रातः कुमुदिनीवाति—
म्लाना पित्रोस्तदभ्यधात् ॥ १६ ॥ तावपि स्फुरदाश्चर्यौ । समाकार्य गुणश्रियं ॥ विचित्रं वीक्ष्य त-
त्सर्वं । प्रश्नयांचक्रतुस्तरां ॥ १७ ॥ तया प्रोक्ते निजे वृत्ते । नृधवः क्रोधवन्मनाः ॥ अहो स्त्रीसाह-
सं गाढ—मिति ध्यायन्नुवाच तां ॥ १८ ॥ अप्रकाश्य निजं रूपं । वंचयित्वा च मां त्वया ॥ म-
त्कन्नी परिणीयेयं । किमित्येवं व्यरंब्यत ॥ १९ ॥ साभ्यधाददतिनिर्बंधे । देवेन विहिते सति ॥
स्वविगोपनभीत्याह—मकृत्यं कृतवत्यदः ॥ २० ॥ अधुना तु प्रियासौ य—न्मयात्मा प्रकटीकृतः ॥

स्वनाम्नसिद्धौ जानायां ; नाकीर्तिः काचनेति तत् ॥ २० ॥ ततो गोपगिरींद्रस्तां । प्रेष्य पप्रछ मंत्रिणं ॥ कर्तुमस्याः सुताया मे । सांप्रतं किमु सांप्रतं ॥ २१ ॥ जवाच धीसखो ध्यात्वा । देव यत्पाणिपीडनं ॥ अम्या गुणश्रिया सार्धं । बजूव व्यर्थमेव तत् ॥ २२ ॥

पुनर्योग्यो वरः कोऽपि । नान्यो मान्योऽस्ति सद्गुणैः ॥ तदस्मायेव कन्येयं । पुण्यसाराय दीयतां ॥ २३ ॥ युक्तं मंत्रिवचः श्रुत्वा । श्रीगोपगिरिनृपतिः ॥ धनसारं समाकार्य । सुतवृत्तप्रमोदितं ॥ २४ ॥ वितीर्य तत्तनूजाय । विधिवत्तनयां निजां ॥ तयोर्विरचयामास । वीवाहं विस्तृतोत्सवं ॥ २५ ॥ युग्मं ॥ चिरेप्सितां राजसुतां । प्राप्य न्यक्कृतपूर्विणीं ॥ धनश्रीनंदनो दध्यौ । हृदि वर्धिष्णुसंमदः ॥ २६ ॥ धन्यानामपि मूर्धन्यो—ऽस्म्यहं येन मयाधुना ॥ वीवाह्य स्वस्त्रिया व्यूहे—ऽनिच्छंत्यपि नृपात्मजा ॥ २७ ॥ एकां सरस्वतीमेव । स्तुवेऽहं जक्तवत्सलां ॥ एकप्रियार्थमाराद्धा । या दत्तस्म प्रियाद्वयीं ॥ २८ ॥ यद्वा किमपरैर्वर्ण्यं । पुण्यमेवैकमुल्बणं ॥ यस्याग्रे किंकरायंते । समस्ता अपि सिद्धयः ॥२९॥ पुण्यसारं पतिं लब्ध्वा—ध्यासीन्मदनवत्यपि ॥ धिग्दैवतमयोग्यं यः । संबंधं तनुतेऽखिन् ॥ ३० ॥ अनेनैव विमंत्र्य स्त्री । स्त्रीत्वेन निखिले पुरे ॥ यच्चक्रेऽहमनिष्टस्य ।

॥ ९ ॥ गुणश्रीः स्वं प्रियं प्राप्य । यं प्रमोदं समासदत् ॥ तं विवेचयितुं शक्तः । सहस्ररसनोऽपि न ॥ १० ॥ प्रियदर्शनमेवात्र । सुधा सान्या मुधा बुधाः ॥ आज्ञा यत्पानतस्तापं । सर्वांगीणं विमुंचति ॥ ११ ॥ पुंवेषोऽयं त्वयोत्तार्यो । गृहं गत्वात्र न प्रिये ॥ इत्युक्त्वा तां करे कृत्वा । कुमारोऽभूत्पुरोन्मुखः ॥ १२ ॥ एतत्किमिंद्रजालाद्य—मित्युच्चैः संत्रपालवः ॥ व्यावर्तिषत ते सर्वे । नृपाद्याः स्वगृहान् प्रति ॥ १३ ॥ प्रेयसा सममासाद्य । गुणश्रीः सद्म तत्क्षणं ॥ तदादेशान्निजं रूपं । नटीव प्रकटं व्यधात् ॥ १४ ॥ सा संप्राप्तनिधानेव । तथोत्सवमतीतनत् ॥ यथा पौरव्रजो जज्ञे । विस्मयार्पितमानसः ॥ १५ ॥ निशाव्य निजनाथस्य । स्त्रीत्वं मदनवत्यथ ॥ प्रातः कुमुदिनीवातिम्लाना पित्रोस्तदन्यधात् ॥ १६ ॥ तावपि स्फुरदाश्चर्यौ । समाकार्य गुणश्रियं ॥ विचित्रं वीक्ष्य तत्सर्वं । प्रश्नयांचक्रतुस्तरां ॥ १७ ॥ तया प्रोक्ते निजे वृत्ते । नृधवः क्रोधवन्मनाः ॥ अहो स्त्रीसाहसं गाढ—मिति ध्यायन्नुवाच तां ॥ १८ ॥ अप्रकाश्य निजं रूपं । वंचयित्वा च मां त्वया ॥ मत्कन्नी परिणीयेयं । किमित्येवं व्यमंत्र्यत ॥ १९ ॥ सान्यधादतिनिर्बंधे । देवेन विहिते सति ॥ स्वविगोपनभीत्याह—मकृत्यं कृतवत्यदः ॥ २० ॥ अधुना तु प्रियासौ य—न्मयात्मा प्रकटीकृतः ॥

स्वनाभ्यमित्रौ जातायां । नाकीर्तिः काचनेति तत् ॥ २० ॥ ततो गोपगिरींद्रस्तां । प्रेष्य पप्रच्छ मं
त्रिणं ॥ कर्तुमस्याः सुताया मे । सांप्रतं किमु सांप्रतं ॥ २१ ॥ उवाच धीसखो ध्यात्वा । देव य
त्पाणिपीडनं ॥ अस्या गुणश्रिया सार्धं । बभूव व्यर्थमेव तत् ॥ २२ ॥
एतद्योग्यो वरः कोऽपि । नान्यो मान्योऽस्ति सद्गुणैः ॥ तदस्मायेव कन्येयं । पुण्यसाराय
दीयतां ॥ २३ ॥ युक्तं मंत्रिवचः श्रुत्वा । श्रीगोपगिरिभूपतिः ॥ धनसारं समाकार्य । सुतवृत्तप्रमो
दितं ॥ २४ ॥ वितीर्य तत्तनूजाय । विधिवत्तनयां निजां ॥ तयोर्विरचयामास । वीवाहं विस्तृतोत्सवं
॥ २५ ॥ युग्मं ॥ चिरेप्सितां राजसुतां । प्राप्य न्यक्कृतपूर्विणीं ॥ धनश्रीनंदनो दध्यौ । हृदि व
र्धिष्णुसंमदः ॥ २६ ॥ धन्यानामपि मूर्धन्यो—ऽस्म्यहं येन मयाधुना ॥ वीवाह्य स्वस्त्रिया व्यूहे—
ऽनिच्छंत्यपि नृपात्मजा ॥ २७ ॥ एकां सरस्वतीमेव । स्तुवेऽहं भक्तवत्सलां ॥ एकप्रियार्थमाराध्या ।
या दत्तस्म प्रियाद्वयीं ॥ २८ ॥ यद्वा किमपरैर्वर्ण्यं । पुण्यमेवैकमुल्बणं ॥ यस्याग्रे किंकरायंते । स
मस्ता अपि सिद्धयः ॥२९॥ पुण्यसारं पतिं लब्ध्वा—प्यासीन्मदनवत्यपि ॥ धिग्दैवतमयोग्यं यः ।
संबंधं तनुतेऽस्थिरं ॥ ३० ॥ अनेनैव विमृश्य स्त्री । स्त्रीत्वेन निखिले पुरे ॥ यच्चक्रेऽहमनिष्टस्य ।

पुण्यसारस्य वल्लभा ॥ ३१ ॥ परं दैवकृते कार्यै । किं करोत्यभिमानिता ॥ ध्यात्वेति दध्रे मदन-
वती प्रीतिं परां प्रिये ॥ ३२ ॥ अथ विज्ञपयामास । गुणश्रीः स्वप्रियंप्रति ॥ भगीभिर्यत्प्रतिज्ञातं ।
मत्प्रयाणेऽवधेहि तत ॥ ३३ ॥ षण्मासांते सकांता चेत् । स्वसस्त्वं न समेष्यसि ॥ दुःखांताय तदा
प्राणान् । होष्यामः प्रबलेऽनले ॥ ३४ ॥ दिवसाः संति पंचैव । न्यूना ह्यवधिमध्यतः ॥ तद्वरिष्ठ प्र
तिष्ठस्व । त्वं द्रुतं वलभींप्रति ॥ ३५ ॥ नो चेद्भवद्वियोगार्त्ता । भगिन्यः पितरौ च मे ॥ जातवेद-
सि लप्स्यंते । शलभैः सुलभां गतिं ॥ ३६ ॥ पित्रे राज्ञे च विज्ञाय । तदनुज्ञामवाप्य च ॥ रति-
प्रीतियुतः काम । इव स्त्रीद्वयभासुरः ॥ ३७ ॥ धनसारतनूजन्मा । पवनानिव रूपिणः ॥ वाजिप्रष्ठा-
नधिष्ठाय । प्रातिष्ठत पुरात्ततः ॥ ३८ ॥ युग्मं ॥ ग्रामीणानां प्रतिग्रामं । विनोदैर्मोदयन्मनः ॥ म-
हीं महीयसीमेष । ययौ व्योम्नेव संचलन् ॥ ३९ ॥ मिथः प्रियाप्रियालाप—कलापामृततर्पितः ॥
प्रस्थाणुरपि सोऽश्रांतं । न वर्त्मश्रांततामधात् ॥ ४० ॥ इत्यविछिन्नयानेन । पुण्यसारः समासदत् ॥
पंचमे दिवसे प्रात—र्वलभीपुरगोचरं ॥ ४१ ॥

तस्मिन्नेव दिने काम—देवं तत्र तनूरुहाः ॥ तातमभ्येत्य चात्यंत—दुःखतप्ता व्यजिज्ञपन् ॥

॥ ४२ ॥ पद्ममासी परिपूर्णासी—न्नायासीद्भगिनी परं ॥ नूनं सा न प्रियं प्राप । तेन जीवति नैव
च ॥ ४३ ॥ इत्यचिरं स्वकांताशां । द्रविणाशां दरिद्रवत् ॥ कृत्वा वृथासहिष्णोच्चै—र्दुस्सहं विर·
हानलं ॥४४॥ ततस्तत्र पितः सोऽत्र । सोद्यमीभूय दीयतां ॥ अस्मभ्यं सर्वदुःखदु—दहनाय ध·
नंजयः ॥ ४५ ॥ दुहितॄणां तया वाचा । विद्युतेव हृदि क्षतः ॥ लहरीरिव दुःखाब्धेः । कामदेवो
जगाद ता ॥ ४६ ॥ धत्त वत्सा· किमौत्सुक्य—मेकः सार्थः करिष्यते ॥ भद्रस्रो जाग्रदस्त्येव ।
मंत्रोऽयं मनसन्यपि ॥ ४७ ॥ निपिठा अपि चेद्यूयं । नैव स्थास्यथ मृत्युतः ॥ म्रियमाणांश्च नो
युष्मा—नहं शक्ष्याम्युपेक्षितुं ॥ ४८ ॥ ततस्तथा विधास्येऽहं । भवतीभिः सहाग्रतः ॥ यथा न मे
वियोगः स्या—दिहैव सह्वागतः ॥ ४९ ॥ अथार्पयित्वा वेश्मादि । स्वेषां पुत्रीप्रियान्वितः ॥ श्रे
ष्ठी समाश्रयद्भाह्ये । ज्वलदग्न्यंचितां चितां ॥ ५० ॥ अश्रूणि नेत्रतोऽत्यंतं । वर्षन् पौरजनोऽखिलः
॥ एत्य तस्य समर्यादं । समवादमिदं जगौ ॥ ५१ ॥ श्रेष्ठिंस्त्वया किमारब्धं । गर्हितं जगदर्हता ॥
न प्रागपि मृतः कोऽपि । पुत्रीजामातृहेतवे ॥ ५२ ॥ जामाता यदि न प्राप्तो । मर्तव्यं न वरं त्वया
॥ मृते पितरि पुत्रोऽपि । केनापि म्रियते न हि ॥ ५३ ॥

अथ मर्तुमना एव । तथाप्याशायमास्व भोः ॥ दैवात्कदाचिदप्येति । दुहिता ते प्रियान्विता ॥ ५४ ॥ एवं निवार्यमाणोऽपि । स्वजनैः शोकसंकुलैः ॥ सोऽजवत्सकुटुंबोऽपि । चितायां यातुमुद्यतः ॥ ५५ ॥ तदा वृक्षाग्रमारुह्य । कोऽपि पश्यन् दिशोऽखिलाः ॥ नमूचे केचिदायांति । हयारूढा जना द्रुतं ॥ ५६ ॥ कामदेवस्तया वाचा । सुधावृष्ट्यैव तर्पितः ॥ कृतोद्यमोऽपि झंपार्थं । क्षणमात्रं विलंबितः ॥ ५७ ॥ तावद् दृष्ट्वा पुरासन्नं । सर्पंतं धूममभ्द्रवत ॥ गुणश्रीः प्रियमाचष्ट । श्वश्रीनां मृत्युशंकिनी ॥ ५८ ॥ अभ्रंलिहः पुरः स्फूर्तिं । धूमस्तोमः समेति यत् ॥ मन्येऽनेन स्वसारो मे । प्राविशन्नाशुशुक्षणौ ॥ ५९ ॥ प्रमीता यदि तास्तर्हि । वृथैवायं मम श्रमः ॥ जीवंतीषु ततस्तासु । कथंचिद् व्रज वल्लभ ॥ ६० ॥ ततस्तत्प्रेरितः पुण्य—सारः सत्वरमुत्सुकः ॥ धूमाश्रितां दिशं श्रित्वा । प्रेरयामासिवान् हयान् ॥ ६१ ॥ दूरादालोकयन् वह्नि—ज्वालाः कवलितांबराः ॥ संनिकर्षात्पुनः शृण्वं—स्तुमुलं जनतोत्थितं ॥ ६२ ॥ चितांतिकं परिप्राप्तः । पुण्यसारो न्यभालयत ॥ श्रेष्ठिनं ससुतास्त्रीकं । दिष्टांताविष्टचेतसं ॥ ६३ ॥ युग्मं ॥ हयादयात्समुत्तीर्य । जामाता विनयोन्नतः ॥ श्वश्रूश्वशुरपादाब्जे । भृंगयामास मस्तकं ॥ ६४ ॥ गुणश्री राजपुत्री च । प्रणामप्राभृतार्प-

णान ॥ आनंद्य पितरौ ज्येष्ठ । जामीरप्यत्यनंदतां ॥ ६५ ॥ पुण्यसारमुखालोका—त्परमोल्लासमा-
मदन ॥ सकुटुंबोऽपि स श्रेष्ठी । पयोभिरिव पादपः ॥ ६६ ॥ तल्लोचनानां शोकाश्रु—स्थाने हर्षा-
श्रुबिंदवः ॥ आमन्त्रस्यादिधातूनां । पदे त्वादयो यथा ॥ ६७ ॥ कामनीयकमालोक्य । जामातु
र्विश्वजित्वरं ॥ तदा न त्यक्तवान कस्को । मन्मथालोककौतुकं ॥ ६८ ॥ स्वोत्संगसंगिनीं कृत्वा ।
कामदेवो गुणश्रियं ॥ ऊचे वत्से गुणान वच्मि । कांस्कान् लोकोत्तरांस्तव ॥ ६९ ॥ इदं साह-
समत्युग्रं । प्रजेयं विश्वदुश्चरी ॥ इदं दुःकरकर्तृत्वं । त्वत्तोऽन्यत्र न कुत्रचित ॥ ७० ॥ न केवलं त्व-
यानीतः । स्फीतमत्या निजः पतिः ॥ किंतु जीवितमप्यस्य । कुटुंबस्य विनश्यतः ॥ ७१ ॥ यथा
कमलया विश्व—स्पृहणीयगुणौघया ॥ प्रतिष्ठां प्रापितो वार्धि—स्तथाहं सुतया त्वया ॥ ७२ ॥
कान्ति पुत्रि द्वितीयासा—विति पृष्ठा जगाद सा ॥ पुत्री समरसिंहस्य । तातेयं मत्प्रियप्रिया ॥
॥ ७३ ॥ कामदेवस्ततो लक्ष्मी—धर्माविव वधूवरौ ॥ पुरस्कृत्य निजं धाम । जगाम प्रकृतोत्सवः ॥
॥ ७४ ॥ अतिपथ्यैर्महातिथ्यै—र्नेपथ्यैश्च नवैर्नवैः ॥ जामातरं स सच्चक्रे । सच्चक्रैकशिरोमणिः ॥
॥ ७५ ॥ स्वपुत्रीभ्योऽपि मदन—वतीं सोऽमानयत्तमां ॥ आत्मीयोऽयं परो वेति । क्व विज्ञागो म-

हात्मनां ॥ ७६ ॥ नत्रानामपि पत्नीनां । पुण्यसारः समोऽजनि ॥ तत्संख्यानां यथा ब्रह्म—गुप्तीनां मुनिसत्तमः ॥ ७७ ॥ सुधांशोरिव जामातु—र्विश्वजीवातुसन्निभान् ॥ गुणान् निभालयन् श्रेष्ठी । दक्षवत्पिप्रियेतमां ॥ ७८ ॥

पुण्यसारे सुखेनैवं । सस्त्रीके तत्र तिष्ठति ॥ समागमन् जना· क्ष्माप—तत्पित्रादेशपेशलाः ॥ ७९ ॥ पुण्यसारं प्रणम्योचु—स्ते धीमन् विरहस्तव ॥ तापयत्यर्कवत्कोप—गिरिंद्र पितरावपि ॥ ॥ ८० ॥ प्रस्थाय तदितस्तूर्णं । दाक्षिण्यैकनिधे त्वया ॥ स्वजनोत्तापशांत्यर्थं । पुष्करावर्तकायतां ॥ ८१ ॥ तदनिष्टमिव श्रुत्वा । कामदेवोऽर्त्तिवानभूत् ॥ तादृशानां प्रयाणोक्ति—र्न स्यात्कस्यार्त्तिकारणं ॥ ८२ ॥ तदीयं सर्वमाश्रीय—स्वर्णाद्यं यौनकार्पितं ॥ दत्वानर्घ्यांश्च वेषादीन् । भूपवैवाहिकोचितान् ॥ ८३ ॥ सत्कृत्य च पुनर्दिव्य—वस्त्राभरणदानतः ॥ कुमारं स नवस्त्रीकं । श्रेष्ठी प्रातिष्टिपत्ततः ॥ ८४ ॥ युग्मं ॥ प्रयाणसमये पुत्रीः । पित्रोः प्रणतिकारिणीः ॥ पिता पल्लवितप्रीति—रेताः प्रत्येकमन्वशात् ॥ ८५ ॥ पत्यौ प्रीतिरकृत्रिमा श्वशुरयोर्भक्तिः सपत्नीजने—ऽनुत्सेको विनयो ननांदरि महान् स्नेहः कुटुंबेऽखिले ॥ देवार्चादिरतिः कुकर्मविरतिः क्षांतिप्रियोक्तित्रपा—दा

नाट्यानि च सुरुचां विदधते श्रेष्ठां प्रतिष्ठां गृहे ॥ ८६ ॥ इमान् कुलवधूधर्मा—न्निर्मिमाणाः स्वश
र्मणा ॥ पताकायाश्चमात्मीये । वंशे यूयं सुनाश्चिरं ॥ ८७ ॥ ततः स्वयं कियद्दूरं । पराणीय स्नु
षापतिं ॥ कामदेवो न्यवर्त्तिष्ट । स्पष्टकष्टः कथंचन ॥ ८८ ॥ कुमारोऽपि सपत्नीस्ताः । पितादिविर
हार्दिताः ॥ कथादीनां विनोदेन । मोदयन् प्रस्थितः पथि ॥ ८९ ॥ मदनस्येव शस्त्रीभि—र्नव
स्त्रीभिः सह व्रजन् ॥ रथस्थः सोऽन्यदा मार्गे । मार्गयूथमुदैक्षत ॥ ९० ॥ कांश्चित्प्रौढप्रियानेत्र—
जितनेत्रोत्पलानिव ॥ कांश्चन व्योमसंक्रांत—फालान् क्रीडापशानिव ॥ ९१ ॥ कांश्चिच्चकोरुचीत्का
रैः । स्तंभितानिव निश्चलान ॥ स कुरंगानपि प्राप्त—रंगान् दृष्ट्वा विमृष्टवान् ॥ ९२ ॥ युग्मं ॥
वनक्रोडे लसत्क्रीडा—पराश्चाप्यतिहर्षिणः ॥ इत्थं मया क सारंगा । निरीक्षांचक्रिरे पुरा ॥ ९३ ॥
ध्यायंतश्चिंतयन्नेव । पौनःपुन्यान्मुमूर्छ सः ॥ प्राक्तनं जननं स्वस्य । दृष्टवांश्च यथास्थितं ॥ ९४ ॥
तत्कालं प्रेक्ष्य मूर्छालं । प्रियमत्याकुलाः प्रियाः ॥ चंदनाद्युपचारेण । चैतन्यं प्रापयंश्चिरात् ॥९५॥
मूर्छाहेतुं प्रियापृष्टः । पतिः प्रोचे मृगेक्षणाः ॥ मूर्छितो ज्ञानवान् जाति—स्मृत्याहं प्राग्भवं निजं
॥ ९६ ॥ तथाहि विश्वहृद्ग्राहि—श्रीवृत्ते क्वापि पर्वते ॥ धर्ममंदः पुलिंदोऽहं । सस्त्रीकः प्राग्भवे·

ऽव्रवं ॥ ९७ ॥ सप्रियोऽपि वहंश्चर्म्म । कोदंडं काममंडितं ॥ मृगव्यां कर्तुमन्येद्यु—र्य्याधवद्विपिने-
ऽभ्रमं ॥ ९८ ॥ स्फारान् कार्मुकटंकारान् । श्रुत्वाकाशोदरंभरीन् ॥ वने वनेचरास्तत्र । तत्रसुः प्रा-
णिनोऽखिलाः ॥ ९९ ॥ ततः परस्परासंगा—नंगरंगतरंगितं ॥ शरव्यीक्रियतेस्मैकं । मृगस्य मि-
थुनं मया ॥ १०० ॥ सन्निकृष्टं समाकृष्ट—कार्मुकं वीक्ष्य मां मृगः ॥ नंष्टुं सहोऽपि नानेश—द्वि-
मृशन् गर्भिणीं मृगीं ॥ १ ॥ किंतु तां परमप्रेम्णा । समाछाद्य स्ववर्ष्मणा ॥ पश्यन्मां त्रस्तया दृ-
ष्ट्या । दीनवत्तस्थिवान् पुरः ॥ २ ॥ तथा मया निभाल्यापि । निस्त्रिंशत्वेन सा मृगी ॥ सक्रिये-
व कृतघ्नेन । निजघ्नेऽकृतुदेषुणा ॥ ३ ॥ तेन बाणेन निर्भिन्ना । हरिणी धरणीं गता ॥ विदीर्णोद-
रनिर्गच्छ—द्गर्भा मरणमानशे ॥ ४ ॥ प्रमीतां हरिणीं प्रेक्ष्य । प्रीत्या व्रीड्या च तत्क्षणं ॥ दीर्णहृ-
त्पक्ववालुंकी—फलवन्मृतवान्मृगः ॥ ५ ॥

गत्वा दृष्ट्वा च सारंग—मिथुनं तत्तथा मृतं ॥ भुवि स्फुरंतं गर्भं च । किंचिच्चैतन्ययोगतः ॥
॥ ६ ॥ अहं मद्वल्लभा सापि । जुगुप्सामासिवोच्चकैः ॥ अनुतापाग्निसंतप्त—मानसौ स्वं कुकर्म तत्
॥ ७ ॥ युग्मं ॥ आजन्माविद्धकर्णोऽपि । धर्माक्षरशलाकया ॥ दैवात्तदा स्फुरच्चारु—कारुण्योऽह-

माचिंतयं ॥ ८ ॥ मृगव्यं सत्यमेवाहुः । पापर्द्धिं शुद्धबुद्धयः ॥ आय·शूलिकना यस्मि–न्नीदृशी जं·
तुघातिनी ॥ ९ ॥ समस्तानप्यहो जंतून् । क्षमंते केचिदुत्तमाः ॥ मयानार्येण मार्यंते । हंत निर्म·
न्तवोऽपि ते ॥ १० ॥ अहो मे मूढता कापि । सकृत्तृप्तिकृतेऽनिशं ॥ अमीषां जन्मिनां जन्म । नि
ष्फलं खलु लुप्यते ॥ ११ ॥ इयत्कालं वृथा काल–धर्मं नीता मयांगिनः ॥ नियमोऽतः परं यात्र
–ज्जीवं जीववधेऽस्तु मे ॥ १२ ॥ पक्षिवत्पोषयन् प्राणान् । कंदमूलफलादिभिः ॥ अहं तु मांसलं
मांस–मपि नाश्नामि कर्हिचित् ॥ १३ ॥ इत्यभिग्रहमत्युग्र–मादायाहं दयाद्भुतः ॥ यतिस्थितिमि
वामायां । जायांप्रति तमन्वधां ॥ १४ ॥ सापि धर्मोन्मुखी किंचि–त्सुमुखी मांसभक्षणे ॥ जग्राहा
भिग्रहं प्रागः । सती पत्यनुवर्तिनी ॥ १५ ॥ ततो वनेचरान् जीवान् । पश्यंतौ निजजीववत् ॥ नि·
यमं पालयंतौ च । कालं निन्यवहे बहु ॥ १६ ॥ अंतेऽहं शुद्धभावेन । मृत्वा कारुण्यरंगतः ॥ अ·
स्मिन्निःसीमसौख्यैक–पात्रं मर्त्योऽप्यमर्त्यवत् ॥ १७ ॥ प्रिया दयैकजीवातुः । सा तु मद्विरहातुरा ॥
मृत्वोदपादि कुत्रापि । न वेद्मि तदहं हहा ॥ १८ ॥ इति ब्रुवत एवास्य । पुण्यसारस्य दृक्पथे ॥
अवातारीद्दिवः साधु–श्चारणः पापवारणः ॥ १९ ॥ अवतीर्य रथात्तूर्णं । द्वेधापि प्रमदान्वितः ॥

कुमारस्तं नमश्चक्रे । मुनिं व्रतमिवांगिनं ॥ २० ॥ श्रेयोराशिमिव प्राप्य । तदाशीर्वादमादरात् ॥ कु
त्र मे प्राग्भवस्त्रीति । पृछतिस्म स तं ततः ॥ २१ ॥ विज्ञाय ज्ञानतः साधु—रभिधत्तेस्म तंप्रति ॥
गुणश्रीरियमुद्दाम—प्रीतिस्ते प्राग्भवप्रिया ॥ २२ ॥ स्मरसि त्वमियं धृत्वा । पुंवेषं त्वत्पुरं गता ॥
मृतिव्यतिकरेण त्वां । धीमन्नासादयिष्यति ॥ २३ ॥ पुष्णाति प्राग्भवप्रीते—रेव कांतास्वियं त्वयि ॥
पुष्कलं प्रेम तारासु । रोहिणीव सितद्युतौ ॥ २४ ॥ किंच दृष्ट्वा पुरोपात्तो—दात्तजीवदयावता ॥ ई-
दृक्फलं ततः कार्यं । भवेऽस्मिन्नपि तत्त्वया ॥ २५ ॥

कृपैव सर्वजीवानां । सर्वानंदप्रदायिनी ॥ यथा कुमुदखंडानां । चंद्रिकैव विकाशिनी ॥ २६ ॥ यथा सदप्यसद्दृश्यं । देहं चेतनयोज्झितं ॥ कृतमायं धनाढ्यं च । पुण्यं निःकरुणं तथा ॥ २७ ॥ तां निशम्य मुनेर्वाचं । पुण्यसारः प्रियान्वितः ॥ जगृहे निधिवत् श्राद्ध—धर्मं जीवदयामयं ॥ २८ ॥ तं चारणमुनिं नत्वा । प्रस्थितः सुस्थितस्ततः ॥ प्राप गोपगिरिदुर्गं । स पित्रालोकनोत्सुकः ॥२९॥ तत्पित्रा धनसारेण । राज्ञा चागत्य संमुखं ॥ कृतोत्सवो निजं सद्म । पुण्यसारः समाश्रयत् ॥ ३० ॥ स्त्रीणां विरहसंतप्तं । चेतः सिंचन्नहर्निशं ॥ अकृत्रिमप्रेमरसैः । स सुखं तस्थिवान् गृहे ॥ ३१ ॥ न्नु-

मारं समगमिंद्रोऽथ । पुत्रान्नावान्निजे पदे ॥ पुण्यसारं तमारोप्य । प्रव्रज्य च दिवं ययौ ॥ ३२ ॥ पुण्यसारस्ततः स्फारै—रनीकैर्जगति जयन् ॥ सुखं न्यवीविशत्स्वाज्ञां । राज्ञां मूर्धनि माल्यवत् ॥ ॥ ३३ ॥ गुणश्रियं गुणोद्दामां । पट्टराज्ञीं व्यधत्त च ॥ कल्पवल्लीव पत्यौ स्यात् । प्रीतिः स्त्रीणां प्रियंकरा ॥ ३४ ॥ कष्टादिरक्षणान्याय—शिक्षणात्पोषणादिभिः ॥ न नृप स हितोऽत्यंतं । पितृन्प्रकृतीः प्रति ॥ ३५ ॥ विदन्न्यायफलं ताह—ग्वैजवाद्यं स नृपतिः ॥ अनयोद्घोषणापूर्वं । जीवघातं न्यवारयत ॥ ३६ ॥ अहं पूर्वं पुलिंदोऽपि । चारुकारुण्ययोगतः ॥ इहापि प्राप्तवानस्मि । संपदं ज्ञानमन्वयीं ॥ ३७ ॥ प्रत्येकमुपदिश्येति । स धर्माचार्यवन्नृपः ॥ अपरैरपि नृपालै—र्दयोदयमसूत्रयत ॥ ३८ ॥ पुण्यसारो ददौ दानं । दीनादिभ्यो दिने दिने ॥ परलोकाप्तये नूनं । न्यासीकुर्वन्निव श्रियं ॥ ३९ ॥ मोक्षद्वारप्रतीहारान् । हारान् श्रेयःश्रियां हृदि ॥ परमेष्ठिनमस्कारान् । स सस्मार स्वनामवत ॥ ४० ॥ एवमुपार्जयन् पुण्यं । न्यायेनोल्लासयन् यशः ॥ आस्वादयन् सुखं नृप—श्चिरं राज्यमपालयत् ॥ ४१ ॥

गतोऽथ वाहकेल्यर्थी । पार्थिवः प्राप्य सद्गुरुं ॥ तद्देशनारसं तृष्णा—तुरस्वपीतवानिति ॥४२॥

मानुषत्वाद्यमासाद्य । स्वहिते यः प्रमाद्यति ॥ विलंबते स दुर्बुद्धिः । सुधापानार्थमर्थित. ॥ ४३ ॥ गृहाशंसां मुक्त्वा चरणजरमादृत्य सुचिरं । तपस्यंतः संत. क्वचिदपि वने दुरितजने ॥ समाधिस्वः-कुल्याजलविगलिताशेषकलुषा—स्तदाप्तुं कैवल्यं कतिचन यतंते सुकृतिनः ॥ ४४ ॥ प्रबुद्धात्मा नृपो दत्वा । राज्यं स्वतनुजन्मने ॥ गुरोस्तस्यैव पादांते । दांतात्मा व्रतमाददे ॥ ४५ ॥ तपस्तप-र्तुनाशोष्य । कालुष्यसलिलं घनं ॥ पुण्यसारो विपद्यांते । दिवमासेदिवान्मुदा ॥ ४६ ॥ ततश्च्यु-त्वा विदेहेषु । भुक्त्वा चैश्वर्यमद्भुतं ॥ व्रतेन केवलं लब्ध्वा । स गमी मोक्षमक्षयं ॥ ४७ ॥ त्वं पुण्यसारकथया फलमाकलय्य । कारुण्यकल्पतरुकल्पितमित्यनल्पं ॥ निःशेषदर्शनमतं सुकृतैकसारं । तत्पालयस्व नरपालकुमारपाल ॥ ४८ ॥ इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्री-कुमारपालचरित्रे महाकाव्ये कारुण्योपदेशो नाम षष्ठः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ सप्तमः सर्गः प्रारभ्यते ॥

अथोदितस्य धर्मस्य । भेदज्ञापनकाम्यया ॥ उज्जगार गिरं राज—गुरुर्गुर्जरनायकं ॥ १ ॥

यतिश्राद्धगतत्वेन । धर्मो विस्फुरति द्विधा ॥ यं प्राप्य यानवज्जीव—स्तरत्येव भवार्णवं ॥ २ ॥ त-
त्रादिमो नवेत्यंत्र—महाव्रतमयात्मकः ॥ धीराणामतिनेदीया—नध्वा सिद्धिपुरस्य यः ॥ ३ ॥ द्वि-
तीयोऽपि स सम्यक्त्व—मूलो स्याद् द्वादशव्रती ॥ सम्यक्त्वाप्तिस्तु जीवस्य । प्रोचे प्राच्यैरिति श्रुते
॥ ४ ॥ जीवोऽनादिरसौ कर्मा—प्यनादि स्यात प्रवाहतः ॥ योगोऽप्यनादिरनयोः । सुवर्णमलयो-
रिव ॥ ५ ॥ स्याद् ज्ञानावरणीयाद्यं । मूलतः कर्म चाष्टधा ॥ भेदतोऽप्यष्टपंचाश—द्युतप्रकृतिसंयुतं
॥ ६ ॥ ज्ञानदृष्ट्यावृतिवेद्य—विघ्नानां तत्र कीर्तिताः ॥ सागरोपमकोटीनां । त्रिंशत्कोट्यः परा
स्थितिः ॥ ७ ॥ मोहस्य सप्ततिर्नाम—गोत्रयोर्विंशतिस्तथा ॥ आयुषश्च त्रयस्त्रिंश—त्सागरा नार-
कासुरे ॥ ८ ॥ ततः शैलसरिद्ग्राव—घोलनासंनिभात्स्वयं ॥ यथाप्रवृत्तिकरणात् । क्षीणेषु बहुक-
र्मसु ॥ ९ ॥ सागराणां कोटीकोट्यां । प्रत्येकं सर्वकर्मणां ॥ स्थितायां किंचिदूनायां । जीवाः कृत-
श्रमाः ॥ १० ॥ रागद्वेषपरीणाम—मयं घट्टतरस्थितिं ॥ दुर्भेदं ग्रंथिमायांति । वटं श्रांता इवा-
ध्वगाः ॥ ११ ॥ त्रिभिर्विशेषकं ॥ निवर्तंते ततः केचि—द्रागाद्यरिपरिद्रुताः ॥ सरस्वल्लोलकल्लोला
। इव वेलानिवारिताः ॥ १२ ॥ भ्रमंति केऽपि तत्रैव । कर्मरुद्धा शरीरिणः ॥ राधावेधाय यंत्रोर्ध्वे

—बद्धाश्वकगणा इव ॥ १३ ॥ भाविभूरिशुभाः केचि—त्तं ग्रंथिं प्रौढशक्तिनः ॥ भिंदंत्यपूर्वकरण-
वज्राग्रेण गिरींद्रवत् ॥ १४ ॥ कृतेंतरकरणेऽथा—निवृत्तिकरणस्थिता. ॥ क्षिपंत्यंतर्मुहूर्तेन । जीवाः क-
र्माणि भूरिशः ॥ १५ ॥ शांतेऽभ्युदीर्णे मिथ्यात्वे । संत्यूषरगताग्निवत् ॥ लभंते निर्वृतिप्राप्ति—हेतु
सम्यक्त्वमंगिनः ॥ १६ ॥ यद्ग्रंथिभेदे प्रथमं । सम्यक्त्वं जायतेंगिनां ॥ अंतर्मुहूर्तप्रमितं । तदौप-
शमिकं खलु ॥ १७ ॥ नैसर्गिकमिदं प्रोक्त । सम्यक्त्वं पूर्वसूरिभिः ॥ जातं गुरूपदेशेन । तदाधि
गमिकं पुनः ॥ १८ ॥ सद्देवगुरुधर्मेषु । या देवगुरुधर्मधीः ॥ सम्यक्त्वमवगम्यं त—न्मिथ्यात्वमित
रत्ततः ॥ १९ ॥ क्षीणनिःशेषरागादि—दोषस्त्रिभुवनार्चितः ॥ यथार्थवादी सर्वज्ञो । देवोऽर्हन्नेव
नापरः ॥ २० ॥ स्मरापस्मारमूर्छालाः । करालाः कोपचेष्टितैः ॥ विप्रलंभपरा देवा । मुक्त्यै न प्र
भविष्णवः ॥ २१ ॥ चारित्रकमलाकेलि—दीर्घिका ब्रह्मचारिणः ॥ शुद्धधर्मोपदेष्टारो । गुरवः स्युः
शिवंकराः ॥ २२ ॥ लोलुपा निःकृपाब्रह्म—भ्रष्टाः क्लिष्टाः कषायिणः ॥ धर्मविप्लावका नैव । गुरवो
हितहेतवे ॥ २३ ॥ मुक्तिलक्ष्मीशिरश्शूलः । प्रतिकूलो भवद्विषां ॥ विश्वानुकूलः कारुण्य—मूलो ध-
र्मो जिनैर्मतः ॥ २४ ॥

हिंसामयोऽपि धर्मश्चे—न्निर्वाणाय प्रगल्भते ॥ जीवानां जीविताय स्या—द्विषास्वादस्तदा न किं ॥ २५ ॥ यच्चित्तौकसि सम्यक्त्व—दीपो देदीप्यते सदा ॥ न मिथ्यात्वतमःस्तोम—स्तान्न विद्रुम्स्यति क्वचित् ॥ २६ ॥ अंतर्मुहूर्तमपि यः । सम्यक्त्वं वहते हृदि ॥ अपार्धपुद्गलपरा—वर्तस्तस्य भवो भवेत् ॥ २७ ॥ सम्यक्सम्यक्त्वभृत्प्राणी । प्राप्नोति त्रिदशश्रियं ॥ न बद्धायुष्को चेत्पूर्वं । नरकादौ कुकर्मणा ॥ २८ ॥ चारित्रादपि सम्यक्त्वं । कथयंत्यधिकं जिनाः ॥ सिद्ध्यंति यच्चारित्रा—न्न सम्यक्त्वोज्झिताः पुनः ॥ २९ ॥ स्वं रोचयितव्यं चे—न्मुक्तिवध्वै सचेतनाः ॥ सम्यक्त्वभूषणेनैव । भूषयध्वं तदान्वहं ॥ ३० ॥ समसंवेगनिर्वेद—करुणास्तिकताभिधैः ॥ सम्यक्त्वं लक्षणैरेभि—र्लक्ष्यतेऽतिविचक्षणैः ॥ ३१ ॥ भक्तिः प्रभावना स्थैर्यं । दाढ्र्यं च जिनशासने ॥ तीर्थशुश्रूषणं चास्य । भवेद्भूषणपंचकं ॥ ३२ ॥ शंका कांक्षा जुगुप्सा च । मिथ्यादृक्स्तवसंस्तवौ ॥ सम्यक्त्वे दूषणान्याहुः । पंचेमानि मुनीश्वराः ॥ ३३ ॥ अणुव्रतानि पंचादौ । दिग्विरत्यादिकं त्रयं ॥ शिक्षाव्रतानि चत्वारि । स्यादेवं द्वादशव्रती ॥ ३४ ॥ द्विधा त्रिधापि च स्थूल—हिंसादेर्विनिवर्तनं ॥ अहिंसाप्रमुखा पंचा—णुव्रती गदिता जिनैः ॥ ३५ ॥ त्रसानां मंतुमुक्तानां । हिंसां संकल्पक-

द्विपतां ॥ स्थावराणां तथा व्यर्थं । वर्जयेत्करुणापरः ॥ ३६ ॥ देवातिथ्यादिपूजार्थं । वेदस्मृत्यादि-
वाक्यतः ॥ विधीयते वधः सोऽपि । नरकप्राप्तिलम्भकः ॥ ३७ ॥ यदि भजति पयोधिर्मिष्टतां शीतर-
श्मि—र्वहति दहनभावं पुष्यति ध्वांतमर्कः ॥ दिनमपि रजनीत्वं याति रात्रिर्दिनत्वं । तदपि हि
सुकृतं न प्राणिघातः प्रसूते ॥ ३८ ॥ न तच्छास्त्रं न सा देव—पूजा न स कुलक्रमः ॥ न तत्पुण्यं
भवेद्यत्र । प्राणित्राणं न चोदितं ॥ ३९ ॥

ततो दुर्जनमैत्रीवत् । कृत्वा हिंसां दवीयसीं ॥ सन्मैत्रीमिव कुर्वीत । दयां नेदीयसीं सुधीः ॥
॥ ४० ॥ दोषानिहाप्रतिष्ठादीन् । मूकत्वादीन् परत्र च ॥ असत्यफलमालोक्य । स्थूलं तत्सुकृती त्य-
जेत् ॥ ४१ ॥ ध्वांते दीपोंबुधौ यानं । शीतेऽग्नी रुजि भेषजं ॥ प्रतिक्रियेति सर्वत्रा—प्यस्ति ना-
सत्यवादिनः ॥ ४२ ॥ असत्यं निगदन् प्राणी । यदि चेद्याति दुर्गतिं ॥ तदा धर्मान्यथाभाषी ।
को वेद क गमी जनः ॥ ४३ ॥ सर्वथापि ह्यपाकृत्य । तदलीकं हितेच्छुना ॥ सत्यमेव समाश्रेयं ।
विश्वासादिगुणास्पदं ॥ ४४ ॥ हस्तछेदशिरश्छेद—शूलक्षेपादिकाः क्रियाः ॥ चौर्योपचारमालोच्य ।
स्थूलं तत्परिवर्जयेत् ॥ ४५ ॥ वधादप्यधिकं स्तेयं । ते नैको यद्विपद्यते ॥ धने हृते पुनः प्रौढ—

कुंथ्व सकलं कुलं ॥ ४६ ॥ दत्वा प्राणानपि द्रव्यं । त्रायंते जनतास्ततः ॥ तत्प्राणाधिकमात्मस्य ।
न कर्तव्यं विवेकिना ॥ ४७ ॥ स्वस्य मीमांसमानेन । मांसलं कुशलं चिरं ॥ स्तेयं बुद्धिमता हेयं
। प्राणघ्नं कालकूटवत् ॥ ४८ ॥ अकीर्तिं पंडतां द्रव्य—हानिं चाब्रह्मणः फलं ॥ विदंस्तोषं स्वदारे-
षु । विदधीत सुधीः सदा ॥ ४९ ॥ जितेंद्रियो गृहस्थोऽपि । यः शीलं परिशीलति ॥ रक्तेव तद्गु-
णैरेत्य । सुकृतश्रीर्वृणोति तं ॥ ५० ॥ स्वकीया परकीया च । पण्यस्त्री कन्यका तथा ॥ एवमस्ति
समस्तापि । स्त्रीणां जातिचतुष्टयी ॥ ५१ ॥ तन्मध्ये स्ववधूरेव । सेवनीया सतां मता ॥ शेषास्तु
स्वसवित्रीव—चिंतनीया दिवानिशं ॥ ५२ ॥ परस्त्रीं ये तु सेवंते । कामेनांधंभविष्णवः ॥ नरके
तेन पश्यंति । तप्तायःपुत्रिकाः पुरः ॥ ५३ ॥ या दत्वा दक्षिणं हस्तं । निजमप्युपैति प्रियं ॥ त
स्यां दास्यामिव त्यक्त—शिलायां प्रेम कीदृशं ॥ ५४ ॥ क्षणतापकरी वह्नि—ज्वालामालाश्रिता
वरं ॥ न पुनः परपत्नीयं । तापिनी नरशो भवान् ॥ ५५ ॥ घृणीयते व्रती या न । प्रियं पुत्रं च
बांधवान् ॥ स्पृष्टव्यापि न सान्यस्त्री । शस्त्रीवानर्थकारिणी ॥ ५६ ॥ निर्मलोऽपि कुलाचारो । निः-
श्वासादिव दर्पणः ॥ मलिनः स्याद्यदाश्लेषा—द्वर्ज्यास्ता वारयोषितः ॥ ५७ ॥ प्रासादध्वजतः कु-

शाग्रजलतः सौदामिनीदामतः । कुंभींद्रश्रुतितोऽश्वपुच्छनरतः शैलापगापूरतः ॥ एवं वै कपिकेलित-
स्तरलतामुच्चित्य मन्ये विधि-र्वारस्त्रीहृदयं व्यधत्त तदलं तेनैव तेऽप्यश्चलं ॥ ५८ ॥ हसित्वापि रु-
दित्वापि । कूटान्युक्त्वापि कोटिशः ॥ या भिनत्त्येव सर्वस्वं । सा वेश्या प्रीतये कथं ॥ ५९ ॥ विषं
हृद्यमृतं वाचि । नेत्रेऽश्रूणि मुखे स्मितं ॥ वहंत्यश्छलयंत्येव । यास्ता वारवधूस्त्यजेत् ॥ ६० ॥ ए-
वं कन्यापि नो काम्या । कामांधेनापि देहिनी ॥ अकीर्तिः पातकं चापि । प्रगल्भेतेतरां यतः ॥
॥ ६१ ॥ तत्त्यक्त्वा परपत्न्याद्यं । धार्यं ब्रह्मव्रतं शुचि ॥ भजंते यत्प्रभावेण । दासत्वं त्रिदशा अपि
॥ ६२ ॥ प्रायः परिग्रहाधिक्यं । पापव्यापारकारणं ॥ स च दुःखतरोर्मूलं । ततः कार्या तदल्पता ॥
॥ ६३ ॥ विभवेन महिष्ठेना—ऽल्पाः स्थूलं भविष्णवः ॥ सुकृतं तिरीयंत्येव । भानुमुड्डीनपांशुवत् ॥
॥ ६४ ॥ तत्परिग्रहमानेन । सेव्यः संतोषसन्निधिः ॥ पारिपार्श्विकतां यस्मि—न्नाश्रिते न्यूनतैव न
॥ ६५ ॥ दशदिग्गमने यत्र । मर्यादा कापि तन्यते ॥ दिग्विरत्याख्यया ख्यातं । तद्गुणव्रतमादि-
मं ॥ ६६ ॥ क्रमेण मार्यमाणानां । प्राणिनां परिरक्षणात् ॥ तटीयमानं लोभाब्धे—र्ग्राह्यमेतदपि
व्रतं ॥ ६७ ॥

यत्र सोमूल्यने मंख्या । शक्त्या भोगोपभोगयोः ॥ ख्यातं भोगोपभोगाख्यं । द्वितीयं तद्गु-
णव्रतं ॥ ६८ ॥ सकृद्देवोचितो भोगः । प्रोक्तोऽत्र कुसुमादिकः ॥ मुहु सेव्योचितस्तूप—भोगः स्व-
र्णस्त्रियादिकः ॥ ६९ ॥ मांस मद्यं दधिसारं । मधूदुंबरपंचकं ॥ रजनीभोजनानंत—कायाज्ञातफ-
लानि च ॥ ७० ॥ तुच्छफलं बहुबीजं । वृंताकं करका हिमं ॥ चलितरसं संधानं । मृद्घोलवटका
विपं ॥ ७१ ॥ अनक्ष्याणि जिनोक्तानि । द्वाविंशतिमिमानि य. ॥ वर्जयेत्पापमूलानि । स विवे-
कीति कीर्त्यते ॥ ७२ ॥ त्रिर्निर्विशेपकं ॥ पंचेंद्रियवधेनैव । पलमुत्पद्यतेऽखिलं ॥ तदश्नंत. कथं न
स्यु—र्मानवा अपि कौणपाः ॥ ७३ ॥ परेपां पिशितेनैव । येऽनिशं स्वांगपोपिणः ॥ तेपां नि-
स्त्रिंशचित्तानां । व्याघ्रादीनां च का भिदा ॥ ७४ ॥ तत्कृपावर्मितं धर्मं । जानन् भुंजीत जातु न ॥
तद्देवोत्पन्नतद्वर्णा—नेकजीवाकुलं पलं ॥ ७५ ॥ जीवतोऽपि मृतस्येव । वैकल्यं येन जायते ॥
लोके शास्त्रे च सावद्यं । तं मद्यं कोऽभिलष्यति ॥ ७६ ॥ गलितत्रपुपानेन । मरणं सुंदरं नृणां ॥
कापिशायनपानेन । न तु विश्वग्विमंचनं ॥ ७७ ॥ अकीर्त्युन्मत्ततादीनां । दोपाणामेकमास्पदं ॥
वर्जनीयं प्रयत्नेन । मद्यं सविपवारिवत् ॥ ७८ ॥ यस्मिन्नंतर्मुहूर्तेन । तद्वर्णाः प्राणभृद्गणाः ॥ मूर्छं-

ति नवनीतं त—स्त्यक्तव्यं पुण्यकांक्षिणा ॥ ७९ ॥ मक्षिकावदनोद्गीर्णं । प्रमीतानेककीटकं ॥ जुगुप्सनीयं निष्टयूत—मिव स्वाद्यं न मध्वपि ॥ ८० ॥ प्लक्षपिप्पलकाकोदुं—बरोदुंबरभूरुहां ॥ वटस्य च फलं कृम्या—कुलं भास्यं न जातुचित् ॥ ८१ ॥ प्रत्यक्षा यत्र वांत्यादि—दोषाः संति परःशताः ॥ तिर्यग्भ्यस्तनुते कोऽन्य—स्तद्रात्रिभोजनं जनः ॥ ८२ ॥

नक्तव्रतादिव्याजेन । ये जडा निशि भुंजते ॥ ते नूनं गमिनोऽधस्ता—ज्ज्ञानेऽहं जिनजल्पितात् ॥ ८३ ॥ पशवोऽपि निशि प्राय—स्त्यजंत्यशनमात्मनः ॥ मानवास्तु तदश्नंत—स्तेभ्योऽपि किमु नाधमाः ॥ ८४ ॥ कंदजातिः समस्तापि । नवः किशलयस्तथा ॥ कुमार्याद्यास्तु सूत्रोक्ता—स्त्याज्यास्तेऽनंतकायकाः ॥ ८५ ॥ वपुष्यनंतकायानां । सूच्यग्रप्रमितेऽपि यत् ॥ अनंता जंतवः सूक्ष्माः । संतीति भगवद्वचः ॥ ८६ ॥ येषां गूढानि पर्वाणि । स्युः शिराः संधयोऽपि च ॥ ये च छिन्नरूढा वृक्षा । ज्ञेयास्तेऽनंतकायकाः ॥ ८७ ॥ इनराण्यप्यभक्ष्याणि । कथितानि जिनागमे ॥ विषद्रुमफलानि च । भक्षयेन्नैव धार्मिकः ॥ ८८ ॥ आर्त्तं रौद्रं च दुर्ध्यानं । हिंसोपकरणार्पणं ॥ पापाचारोपदेशश्च । प्रमादपरिषेवणं ॥ ८९ ॥ सर्वोऽप्यनर्थदंडोऽयं । वृथा कल्मषकारणात् ॥ अपा-

करणमस्य स्या—च्चार्त्तिर्यीकं गुणव्रतं ॥ ९० ॥ युग्मं ॥ अनिष्टवस्तुसंयोगा—दिष्टवस्तुव्ययादपि
॥ मस्तकोपाञ्चिदानाच्च । चतुर्धार्त्तं प्रकीर्तितं ॥ ९१ ॥ यदग्न्यस्त्रविषव्याघ्र—द्विपदैत्यपन्नगादिभिः ॥
अनिष्टं कष्टमार्त्तं तत् । स्यादनिष्टार्थयोगजं ॥ ९२ ॥ स्त्रीपुत्रपितृमात्राद्यै—रर्थराज्यसुखैरपि ॥ वि·
नेष्टैरद्द हृदार्त्तं स्या—त्तदिष्टार्थव्ययोद्भवं ॥ ९३ ॥ वातपित्तमरुत्कुष्ट—काशश्वासज्वरादिभिः ॥ ह·
दि यो मेदुरः खेद—स्तद्रोगार्त्तं निवेदितं ॥ ९४ ॥ राज्यं श्राज्यं शुभा भोगाः । प्रीताः पत्न्यो
धनं घनं ॥ कथं स्यादिति धीः शश्व—न्निदानार्त्तं श्रुते श्रुतं ॥ ९५ ॥ हिंस्रमार्गोपदेशेन । कूट·
कल्पनयापि च ॥ जनवंचनया हर्षो । मृषारौद्रं व्यवस्थितं ॥ ९६ ॥ चौर्येण्वा चौर्यमाचर्य । प्रमोद·
स्तदुपार्जितैः ॥ धनैश्चेतसि संतोष—श्चौर्यरौद्रमुदीरितं ॥ ९७ ॥ शितैः शस्त्रैर्विदार्यारीन् । लंकत्वा ग्रा·
मपुराणि च ॥ रक्षणं संचितार्थानां । तुर्यं रौद्रं प्रकाशितं ॥ ९८ ॥ अपध्यानद्वयमिदं । मंदिरं
सर्वपाप्मनां ॥ दूरं शल्यवदुत्सार्यं । नरकक्लेशभीरुणा ॥ ९९ ॥ विहाय स्नेहविषयं । नार्पणीयं वि·
वेकिना ॥ मुशलोदूखलहल—यंत्रशस्त्रानलादिकं ॥ १०० ॥ वनं छिंधि कुरु क्षेत्रं । वृषान् दम्ये·
ण वाहय ॥ इत्यादि पापशिक्षा न । प्रीतेरन्यत्र युज्यते ॥ ३ ॥

द्यूतमाध्वीकमेषादि—योधनांदोलनादिकं ॥ भक्तादिविकथागीत—प्रेक्षणाद्यतिवीक्षणं ॥ ४ ॥
चैत्ये चतुर्विधाहारो । निद्रा निष्ठीवनं कलिः ॥ वाणिज्यादिकथेत्यादि । प्रमादं दूरयेत्कृती ॥ ५ ॥
युग्मं ॥ त्यक्तदुर्ध्यानसावद्य—कर्तव्यस्य शुभात्मनः ॥ समत्वं यन्मुहूर्तं स्या—त्तत्सामायिकमुच्यते
॥ ६ ॥ अनेहसा घनेनापि । तपोभिरपि दुस्तपैः ॥ न तत्कर्म क्षिपत्यंगी । यत्सामायिकमाचरन् ॥
॥ ७ ॥ दिग्व्रतप्रमितेरह्नि । निशि यच्चाल्पनं पुनः ॥ देशावकाशिकं तत्स्याद् । व्रतं सुकृतकारणं
॥ ८ ॥ सर्वाहारांगसत्कारा—ब्रह्मव्यापारवर्जनं ॥ चतुष्पर्व्यां भवगद—स्यौषधं पौषधं स्मृतं ॥ ९ ॥
यावान् प्रयाति विधिव—त्पौषधव्रतसेवने ॥ कालस्तावान् सचारित्र । इव मान्यो मनीषिणा ॥१०॥
अतिथिभ्योऽशनपाना—वासपात्रादिवस्तुनः ॥ यत्प्रदानं तदतिथि—संविभागव्रतं भवेत ॥ ११ ॥
चित्तं वित्तं च पात्रं च । रत्नत्रितयवच्छुभं ॥ प्राप्य ये ददते दानं । तेषां श्रीरनपायिनी ॥ १२ ॥
एवं सम्यक्त्वमूलोऽसौ । श्राद्धधर्मोऽतिनिर्मलः ॥ शिवाप्तये भवत्येव । भव्यानां यतिधर्मवत ॥ १३ ॥
निरतीचारमेतं यः । प्रतिपालयते कृती ॥ इहापि निर्वृतेः पात्रं । स स्याद्भीमकुमारवत ॥ १४ ॥
अस्यैव जंबूद्वीपस्य । भरते शुभवैभवे ॥ पुरं बभूव कमल—पुरं परमसौख्यभृत् ॥ १५ ॥

यत्रार्हत्सु चैत्येषु । चला रेजुर्ध्वजांचलाः ॥ आह्वयंत इव श्राद्धान् । जिनवंदनहेतवे ॥ १६ ॥ त-
न्नामे तत्र क्ष्मीशो । हरिवद्धरिवाहनः ॥ यश्चित्रं दानवारित्वं । न दधार कदाचन ॥ १७ ॥ खड्ग-
कृत्तारितरुणीनयनोरुनीरैः । प्राप्तोदयः प्रसृमरो भुवनेऽन्चितोऽपि ॥ सेवापरेतरविनिर्मितशैत्यतापो ।
यस्य प्रतापदहनः स्फुरतिस्म नव्यः ॥ १८ ॥ तत्पत्नी मालतीत्यासी—न्मालतीव सुकोमला ॥ सा
रंभारत्यशालिन्यां । यस्यां लीनोऽलिवत्प्रियः ॥ १९ ॥ मंत्री विमलबोधोऽभू—त्तस्यास्तिकशिरोम-
णिः ॥ नापश्यत्समतां मत्या । वाक्पतिर्नास्तिकत्वतः ॥ २० ॥ हरिवाहनभूपस्य । सिंहस्वप्नेन सूचि-
तः ॥ मालतीकुक्षिमाणिक्यं । तनयः समजायत ॥ २१ ॥ पुरा भवत्यजय्योऽयं । भीमवद्बलशालि-
नां ॥ इतीव तं पिता भीम । इत्याह्वासीन्महोत्सवात् ॥ २२ ॥ तदा मंत्रिगृहेऽप्यासी—त्तनुजो म-
तिसागरः ॥ स्वामिसेवकयोः पूर्वा—पर्याद्वृद्धिः क्रमो ह्ययं ॥ २३ ॥ गुणैः सत्त्वमहत्त्वाद्यैः । सा
म्यमाशिश्रियाणयोः ॥ कुमारयोरभूत्प्रेम । रामलक्ष्मणयोरिव ॥ २४ ॥ एकत्राशनपानादि—कर्मक-
र्मठचेतसोः ॥ अवर्धिष्ट तयोः प्रीतिः । समानोदर्ययोरिव ॥ २५ ॥ कुमारयोरतिस्फारं । शास्त्रं ह-
द्धाभियोगतः ॥ तत्स्पर्धयेव पुस्फोर । शस्त्रं मात्राधिकं ध्रुवं ॥ २६ ॥ ततस्तौ यौवनारंभ—सुभगं

भावुकौ श्रिया ॥ कंदर्पमपि निःसर्पद्—दूरदर्पं वितेनतु. ॥ २७ ॥ नासत्यावपि ना सत्या—विव तौ मिलितौ मिथः ॥ द्वेधापि स्वस्वरूपेण । कं नरं जयतःस्म न ॥ २८ ॥

अन्यदा प्रातरास्थान्या—मासनस्थं महीपतिं ॥ नमस्कर्तुं समायातौ । तौ श्रीमतिसागरौ ॥ ॥ २९ ॥ उभावपि नृपं नत्वा । तत्पादौ पाणिपंकजे ॥ प्राप्य राजहंसत्व—मुपासांचक्रतुश्चिरं ॥ ॥ ३० ॥ पुत्रयोः प्रेक्ष्य तादृक्षां । भक्तिं मुदितमानसौ ॥ पुत्रिणां धुरि मेनाते । स्वात्मानं नृपमंत्रिणौ ॥ ३१ ॥ मंत्री विमलबोधोऽथा—वदद्वत्सौ युवां स्वयं ॥ सर्वं यद्यपि जानीथः । स्नेहाद्वच्मि तथाप्यहं ॥ ३२ ॥ गौरवं स्याद्गुणैरेव । न महत्त्वेन कर्हिचित् ॥ रत्नं लघ्वप्यनर्घ्यं हि। महीयांसोऽपि नोपलाः ॥ ३३ ॥ हारो मौक्तिकसारोऽपि। गुणत्यागेन तत्क्षणं ॥ हृदयाडुत्सरत्येव। तद्विधेयो गुणाग्रहः ॥ ३४ ॥ किंचेदं यौवनं नृणां । मद्यपानादृते मदः ॥ अदृष्टिपटलं चांध्यं । विना मूर्छामचेतना ॥ ३५ ॥ अत एव न जानंति । कृत्याकृत्यकथामपि ॥ अपथा संचरंत्येव । यौवनोन्मादिनो जनाः ॥ ३६ ॥ एतत्तारुण्यमेवैकं । नानानर्थनिबंधनं ॥ अस्मिन्नैश्वर्ययोगोऽय—मनलानिलसंगमः ॥ ३७ ॥ परस्त्रीपरिहारोच्चैः—पादपाशनिवेशनात ॥ वारणीया विकुर्वाणाः । पंचेंद्रियह-

या स्यात् ॥ ३८ ॥ अत्यंतं न प्रसक्तव्यं । विषयेषु विषेष्विव ॥ अत्यासक्तिर्यदेतेषां । नाशयत्येव जीवितं ॥ ३९ ॥ श्रीरियं वशयत्येव । वेश्येव चतुरानपि ॥ पुण्ययोगेन यस्त्वेनां । वशयेत्स विशारदः ॥ ४० ॥ विषमाः कामकोपाद्या । अंतरंगारयः स्मृताः ॥ अकीलिता ध्रुवं काल—व्यालवत्ते विकुर्वते ॥ ४१ ॥ अजित्वैतान् बहिः शत्रून् । जयन्नपि न विक्रमी ॥ पराजयेत्ततो धीमान् । कामादीन् मोहराड्भटान् ॥ ४२ ॥ क्रीडां पीडामिवापास्य । स्मर्त्तव्याः सकलाः कलाः ॥ राजनीतिरहस्यं च । निश्चेयं निजनामवत् ॥ ४३ ॥

साधुत्राणं खलोच्छेदो । नयः प्रकृतिरंजनं ॥ कोशस्य वर्धनं चेति । मूलं राज्यमहीरुहः ॥ ॥ ४४ ॥ स्थाने वासो महोत्साह—श्चातुरी वृद्धसन्निधिः ॥ स्वच्छवृत्तिः शुभेच्छा च । श्रीमेदस्करकारणं ॥ ४५ ॥ कारुण्यं व्यसनत्यागो । विवेकः पात्रसंग्रहः ॥ दानं सत्योपकारौ च । नित्यकार्याणि भूभृतां ॥ ४६ ॥ श्रव्यं षड्दर्शनीदेव—धर्मतत्वाद्यमन्वहं ॥ आत्मनीनं च कर्तव्यं । मतमार्हतमर्हतः ॥ ४७ ॥ किं बहूक्त्या तथाचर्यं । युष्मद्भ्यां निजकर्मसु ॥ यथात्र युवयोः ख्याति—र्भवेल्लोकोत्तरैर्गुणैः ॥ ४८ ॥ मंत्रिवाक्यमिदं ताभ्यां । न्यस्तं हृदि रहस्यवत् ॥ हितं चाप्तोपदिष्टं च

। को न स्वीकुरुते कृती ॥ ४ए ॥ आरामिकस्तदागत्य । नरनाथं व्यजिज्ञपत् ॥ वर्द्धसे देव संप्रा-
प्त—स्तवोद्यानेऽस्ति सद्गुरुः ॥ ५० ॥ दानेनानंद्य तं पर्य—दन्वीतो हरिवाहनः ॥ पद्मवद्विकसद्व-
क्त्र—स्तं नंतुं प्राप्तवान् वनं ॥ ५१ ॥ पंचधाभिगमं कृत्वा । प्रविष्टोंतर्वणं नृपः ॥ अभिनंदप्रभुं धर्म-
—निधानमिव दृष्टवान् ॥ ५२ ॥ भक्त्या परीय त्रीन् वारान् । प्रणम्य च तदंतिके ॥ जिनाग्रे श-
क्रवद्भूमान् । सपुत्रोऽपि निषेदिवान् ॥ ५३ ॥ पुण्यामृतप्रसविनीं । कलां चांद्रमसीमिव ॥ देशनां
कर्तुमारेभे । गुरुरागमपारगः ॥ ५४ ॥ कल्पद्रुमो यथा भूमौ । मेरौ दुग्धोदधिर्यथा ॥ तथा भवे-
ऽतिदुर्लभः । प्राप्तोऽयं मानवो भवः ॥ ५५ ॥ तं प्राप्य व्रतमादृत्यं । तच्चेद्दुश्चरमुच्चकैः ॥ श्राद्धध-
र्मस्तदा सेव्यः । सम्यक्त्वव्रतजीवितः ॥ ५६ ॥ देवो जिनो गुरुः साधु—र्धर्मः कारुण्यवानिदं ॥
सद्दर्शनं व्रतानि स्यु—रहिंसाप्रभृतीनि च ॥ ५७ ॥ मिथ्यात्वगरलग्रस्ता—श्चेतनाढ्याः कथं जनाः
॥ यदि सम्यक्त्वपीयूषं । न पिबेरन् यदृच्छया ॥ ५ठ ॥ भवदावानलप्लुष्टाः । प्राप्नुयुर्निर्वृतिं कथं ॥
चिरं चेन्नावगाहेरन् । जिनधर्मामृतांबुधौ ॥ ५ए ॥ ईषदासदमेवान्य—द्राज्याद्यं दुर्गतिप्रदं ॥ दुरा-
सदं तु सद्धर्म—रत्नं मुक्त्येककारणं ॥ ६० ॥

श्रुत्वेति प्रतिबुद्धात्मा । भीमोऽमात्यसुतान्वितः ॥ श्राद्धधर्मं ससम्यक्त्व—माददे मुक्तिबीजव-
न् ॥ ६१ ॥ शंकादिदोषनिर्मुक्तं । पालयेतं युवामिमं ॥ शंकीयमानो मंत्रादि—रपि यन्न फलेग्रहिः
॥ ६२ ॥ गुरोः शिक्षामिमां पुत्रे । समित्रेऽभ्युपगत्वरे ॥ तं वंदित्वा नृपो धाम । जगाम सपरिच्छदः
॥ ६३ ॥ युग्मं ॥ भीमस्य नरीनर्त्ति स । कीर्तिः सच्चरितैस्ततः ॥ उद्यानस्य यथा लक्ष्मीः । सो-
ल्लासैः पल्लवादिभिः ॥ ६४ ॥ कर्हिचिन्निजसद्मस्थं । हरिवाहननंदनं ॥ प्राप कापालिकः कोऽपि ।
कलाम्यूह इवांगवान् ॥ ६५ ॥ कलां सौम्यां मुखे पुष्यन् । जटाजूटस्फुरच्छिराः ॥ हस्तन्यस्तत्रिशू-
लाग्र—ज्योतिर्ज्वालजटालितः ॥ ६६ ॥ विरूपाक्ष इवाध्यक्षो । दत्वाशीर्वादमादरात ॥ कुमारदृष्टि-
निर्दिष्टे । विष्टरे स निविष्टवान् ॥ ६७ ॥ युग्मं ॥ तानवीमिव कौमारीं । प्रज्ञां वीक्ष्यातिशायिनीं ॥
ससात्मेवाद्भुतां बोधा—वाचष्ट स्पष्टगीः स तं ॥ ६८ ॥ स्फारोपकारपटहै—स्त्वं दविष्टोऽपि नः स्फुटः
॥ चंपकद्रुरिवोदार—सौरभैरवभः कृतिन् ॥ ६९ ॥ कति नाम न कीटाभा । जायंते हंत जंतवः ॥
संजातः कथ्यते यस्यो—पकृतौ क्रमते मतिः ॥ ७० ॥ गत्वांतर्दशनं तनोति शुचितां गव्यादिकु-
क्षिस्थितं । दुग्धीभूय जगद्धिनोति नयति ध्वंसं क्षुधां पाशवीं ॥ शीताद्यं विदलत्यवस्यरिगणात्मा-

णान् परार्थेष्विति । प्रौढं चेत्तृणमप्यहो ननु तदा वाच्यो महीयान् किमु ॥ ७१ ॥ परार्थे बद्धबुद्धि-
त्वां । निशम्य जनताननात् ॥ प्राप्तोऽस्मि स्वार्थसिद्ध्यर्थं । श्रूयतामवधाय सः ॥ ७२ ॥ भुवनक्षो-
भिणी नाम । विद्यैका गुरुणार्पिता ॥ मह्यं तस्या मया सर्वा । पूर्वसेवा व्यधीयत ॥ ७३ ॥ जाय-
मानाथ तत्सिद्धि—स्त्वत्सान्निध्यमपेक्षते ॥ धारालवारिभृत्सेकं । यथैवांकुरसंततिः ॥ ७४ ॥ एष्य-
त्कृष्णचतुर्दश्यां । त्वं चेदुत्तरसाधकः ॥ भवेर्विद्या तदा मे सा । सिद्ध्येत्सिद्धिरिवांगिनी ॥ ७५ ॥
सिद्धविद्योऽहमप्याशु । भवतो भवितोपकृत् ॥ कृते प्रत्युपकारे हि । कृतज्ञो नावतिष्ठति ॥ ७६ ॥
स्वीचकार कुमारस्त—त्स्फारदाक्षिण्यपुण्यधीः ॥ कल्पद्रुवन्महांतो हि । नेहंते हंतुमर्थनां ॥ ७७ ॥
षुरर्वाक्कृष्णचतुर्दश्या । दशाहीं मनसा मृशन् ॥ कापालिकोऽपि तत्पार्श्वे । तस्थौ तदंजनाचिकी-
॥ ७८ ॥ कथाः प्रथावतीस्तास्ता । मंत्रयंत्रकलामयीः ॥ कुर्वन् भीमं स मायीव । पर्यमोहयतान्वहं
॥ ७९ ॥ तत्संपर्कं शुभोदर्क—वितर्कविरसं भृशं ॥ विमृश्याथ क्षमानाथ—पुत्रं मंत्रिसुतोऽभ्यधात्
॥ ८० ॥ तवोज्ज्वलस्य नो योग्यो । योगोऽस्य मलिनात्मनः ॥ कीदृशः सहवासो हि । तेजस-
स्तमसोऽपि च ॥ ८१ ॥ अहो शिष्टोऽपि दुष्टात्मा । भवेद्दुष्टप्रसंगतः ॥ जलं विमलमप्युच्चै—र्जं-

किंच पाखंडिसंपर्का—त्सम्यक्त्वमपि नश्यते ॥ विनश्यति हि पीयूष-
चालादाविलं यतः ॥ ८२ ॥ जीमोऽन्यथादसाध्यं त—द्यत्कुसंगात्सुधीः कुधीः ॥ न मणिर्विषदोपा-
माग्नात्वनिवेशन ॥ ८३ ॥ स्यात्साधुरितरो वापि । प्रकृत्यैव न योगतः ॥ एकांचलेऽपि वि-
क्षः । स्फुरेद्विषधराश्रयात् ॥ ८४ ॥ सम्यक्त्वमपि तत्कीदृ—ग्यत्कुसंगेन नश्यति ॥ अहो त-
न्यन्नौ । किं ममौ मणिकर्कशै ॥ ८५ ॥
दपि किं तेज—स्तमसा यत्प्रलीयते ॥ ८६ ॥

वयस्यस्तं विहस्योचे । प्रतिवंदी तवाद्भुता ॥ परं स्फटिकवज्जीवो । विद्वद्भिरिह तु स्मृतः ॥
॥ ८७ ॥ यथैव स्फटिकस्तैस्तै—र्वर्णैः संयुज्यते जवात ॥ तथैवात्मेत्यसौ दुष्ट—स्त्याज्यो जीमोऽव-
गंम्न तत् ॥ ८८ ॥ ततो निशि चतुर्दश्यां । तीक्ष्णं कौक्षेयकं वहन् ॥ तेन पाखंडिना साकं । जी-
मः प्रेतवनं ययौ ॥ ८९ ॥ अखंडं मंडलं तत्र । विरचय्यार्चनां च सः ॥ शिखाबंधचिकीर्षीम—
मूर्ध्नि हस्तं न्यधत्त सः ॥ ९० ॥ जीमोऽजीर्मोहमुक्तस्त—मूचे मंत्रनियंत्रणात ॥ कुरुष्व स्वांगिनीं
रक्षां । रक्षां न स्याद्यथा तव ॥ ९१ ॥ अंतः सत्वमयी मेऽस्ति । रक्षा शौर्यमयी बहिः ॥ मन्त्रक्षण-
वः परात् त्राणं । नेहंते हि मृगेंद्रकाः ॥ ९२ ॥ किंचाहं चेन्न शक्ष्यामि । स्वमपि त्रातुमातुरः ॥

तदा त्रास्ये कथंकारं । त्वामन्यस्माद्भयंकरात ॥ ९३ ॥ तदा कापालिकोऽभ्यासी—त्कालिकार्चाचिकीर्षया ॥ जिघृक्षितं मयास्यासी—च्छिखाबंधबलाच्छिरः ॥ ९४ ॥ तद्गृहीतुं मया नास्य । शेके निःशंकचेतसः ॥ ज्ञापयित्वा स्वशक्त्यैत—दहं गृह्णामि संप्रति ॥ ९५ ॥ ततः शैलोच्चशीर्षाग्रो । द्वारव्यात्ततराननः ॥ कूपनिम्नश्रवा गुंजा—पुंजारुणविलोचनः ॥ ९६ ॥ ध्वजायतस्फुरज्जिह्वो । हलाभकरयुग्मकः ॥ आलानोरुयुगः स्थूलो—दूखलप्रतिमक्रमः ॥ ९७ ॥ कर्त्तिकां नर्तयन् पाणौ । घनः सौदामिनीमिव ॥ निर्घातोग्रैः स्वनिर्घोषै—र्भीषयन् भीषणानपि ॥ ९८ ॥ कोपात्कापालिकः काल । इवातिप्रातिकूलिकः ॥ समेत्यांतिकमेतस्य । साक्षेपमिदमाख्यत ॥ ९९ ॥ चतुर्भिः कलापकं ॥ रेरेऽयं दंभसंरंभः । सर्वोऽप्यारंभि यन्मया ॥ द्वात्रिंशल्लक्षणाढ्यस्य । तत्ते शीर्षजिघृक्षया ॥ ॥ २०० ॥ तद्दातुं न त्वयादायि । कृपाण्या तीक्ष्णयानया ॥ छित्वाहं कदलीछेद—मिदानीं तदुपाददे ॥ १ ॥

स्मरेष्टं त्रायते यस्त्वां । मत्तो व्याघ्रात्कुरंगवत ॥ जल्पन्नेवेति निस्त्रिंशः । स तं हंतुं प्रचक्रमे ॥ २ ॥ अहो चेष्टातिदुष्टास्य । विमृश्येति नृपात्मजः ॥ कंपयन् खड्गमत्युग्रं । भृकुटीविकटं जगौ ॥

कुमार· ॥ ३ ॥ यथान्ये जघ्निरे क्लीवा—श्छद्मना छागवत्त्वया ॥ तथा मामपि रे वीरं । जिघांससि गजें·
चरित्रं द्रवत् ॥ ४ ॥ विश्वस्तघातनंजात—पातकैः पङ्क्तिमापदं ॥ हत्वा त्वामत्र तन्वेऽहं । विश्वमप्यकुतोभ·
३११ यं ॥ ५ ॥ छद्मयुक्त्या वंचयित्वा च । तद्घातं कपिवत्ततः ॥ उत्प्लुत्य स्कंधमारुह्य—त्तस्य शीर्षं चि·
कर्तिषुः ॥ ६ ॥ भीमः स्कंधस्थितो दध्यौ । दशार्हीं मद्गृहे स्थितः ॥ कलावांश्च न वध्योऽयं । म·
द्यापानकर्मजात् ॥ ७ ॥ आहत्य मुष्टिभिर्मत्त—मल्लवद्दशयाम्यमुं ॥ कदाचित्प्रतिबुद्धः सन् । स्वी·
कुर्यादार्हतं मतं ॥ ८ ॥ स मुष्टिभिर्वज्रकल्पै—स्तं तथा मूर्ध्नि जघ्निवान् ॥ हस्तिपो हस्तिनं ती·
क्ष्णाः । सृणिघातैर्यथा दृढैः ॥ ९ ॥ अरुंतुदैः प्रहारैस्तैः । क्षणं मूर्छितमानसः ॥ भीमं तमूर्ध्वं चि·
क्षेप । कोपात्कापालिकः क्षुरी ॥ १० ॥ तदैवोत्पन्नधीर्भीमः । सखड्गोऽप्यविशद् द्रुतं ॥ तत्कर्णे क्रू·
पदंशीये : गुहायां हरिणारिवत् ॥ ११ ॥ उत्कीर्णवांश्च कर्णस्य । मध्यं तीक्ष्णमुखैर्नखैः ॥ मर्मा·
विधां व्यथां कुर्वन् । कर्णखर्जूरकीटवत् ॥ १२ ॥ मयाहो पृथुकर्णत्वं । स्वस्यैवानर्थकृत्कृतं ॥ यदत्रैव
खनत्यंत—र्बिलमध्यस्थिताखुवत् ॥ १३ ॥ इति ध्यायन् व्यथाकीर्णः । कर्णादाकृष्य तं बलात् ॥ उ·
च्छाल्य कंदुकमिव । व्योम्नि चिक्षेप दुर्व्रती ॥ १४ ॥ युग्मं ॥ दूरमूर्ध्वं नभो गत्वा । यंत्रोच्छालित·

गोलवत् ॥ रथात्पतति मूर्छालः । क्ष्मापालसुतः क्षितौ ॥ १५ ॥ तावत्पतत्पतंगाभं । तं पतंतं न-
भस्तलात् ॥ निरीक्ष्य यक्षिणी काचि—द्दधार करसंपुटे ॥ १६ ॥ नीत्वा च सत्वरं स्वस्य । स्थान-
मास्थानवद् श्रियां ॥ शीतोपचारैः सा तस्य । तत्र मूर्छामतुच्छयत् ॥ १७ ॥ कुमारोऽथ समालोक्य ।
वेश्म तत्सुरवेश्मवत् ॥ अतीव विस्मितो जातो । नवोत्पन्न इव क्षितौ ॥ १८ ॥ स्वरेण मधुरेणाथ
। सुधाधारैकसारणिं ॥ कर्णयोः पूर्णयंतीव । यक्षिणी त्वीममाख्यत ॥ १९ ॥ देव विंध्यो गिरिरयं ।
कृताभ्रोल्लेखशृंगभृत् ॥ देवानां च प्रियः सेव्यो । नित्यं सप्रियनिर्जरैः ॥ २० ॥ अत्रेदं मंदिरं ल-
क्ष्मी—सुंदरं वैक्रियं मम ॥ रिरंसार्थं वसंतीह । कमलाख्यास्मि यक्षिणी ॥ २१ ॥ अधुना गगने
यांत्या । मया त्वं निपतन्नधः ॥ निजाब्ज पाणिपद्मेन । धृतो रत्नवदुत्तमः ॥ २२ ॥ त्वल्लावण्यमि-
वापातुं । देवीभिर्वेधसाग्रहात् ॥ कारयांचक्रिरे स्वीया । निर्निमेषा दृशो ध्रुवं ॥ २३ ॥ त्वद्रूपदर्श-
नादेव । मथिता मान्मथैः शरैः ॥ त्वां शरण्यं प्रपन्नास्मि । वीरकोटीर रक्ष मां ॥ २४ ॥ अन्या अ-
पि न कामिन्यः । प्रार्थयंते नरं किल ॥ विशिष्य प्रवरा देव्य—स्तन्मां मास्मावजीगणः ॥ २५ ॥
तत् श्रुत्वाचिंतयद्भीमो । धिक्कामस्य दुरात्मतां ॥ विडंबयति यो देवी—रपि मानवकाम्यया ॥ २६ ॥

अहो स्मरस्य माहात्म्यं । महांतोऽप्यधमा इव ॥ रज्यंत्यनुचिते स्थाने । युक्तायुक्तबहिर्मुखाः ॥२७॥
कापालिकं मे व्यसनं । शीलनाशादतूहरं ॥ न तु सौख्यमिदं तस्य । निर्मूलोन्मूलनोदयात् ॥
॥ २८ ॥ तावद्विशुद्धसंबोध—पीयूषरसपायनात् ॥ अस्याः स्मररसोत्सर्प—न्मूर्छामुत्सारयाम्यहं ॥२९॥
कुमारोऽथावदद्देवि । मत्प्राणपरिरक्षणात ॥ असि धर्मप्रिया प्राय—स्तेन त्वं तत्वमुच्यसे ॥ ३० ॥
कुमारोऽथावदद्देवि । मत्प्राणपरिरक्षणात ॥ असि धर्मप्रिया प्राय—स्तेन त्वं तत्वमुच्यसे ॥ ३० ॥
मया पुरा गुरोरग्रे । पारदार्यविवर्जनं ॥ दुर्गं मत्तगजेनेव । तत्तद्योगेन लंघ्यते ॥ ३१ ॥ खंडिते
न व्रतेऽजस्यं । नूनं नरकखेलनं ॥ कालकूटे कवलिते । न भवेन्मरणं किमु ॥ ३२ ॥ वरं मृत्यु
सुशीलानां । कुशीलानां न जीवितं ॥ दरिद्रता सतां श्लाघ्या । न तु द्रव्यं कुकर्मणा ॥ ३३ ॥ किं
चामी विषया वह्नि—शिखया समतायिताः ॥ अंगिनां स्वप्रसंगेन । शीलांगानि दहंति ये ॥ ३४ ॥
का नाम तस्य वैदग्धी । कश्च शौंडीरिमक्रमः ॥ मुष्णंति यस्य शीलस्वं । विषयाः परमोषिणः ॥
॥ ३५ ॥ क्व देवी दिव्यरूपा त्वं । मलिनोऽहं क्व मानवः ॥ स्तुल्यस्तन्नावयोर्योगः । कस्तूरीपंकयो-
रिव ॥ ३६ ॥

तस्माद्दूरं परित्यज्य । रिरंसां हिंस्रतामिव ॥ दयाद्भुतामिवाधत्स्व । शीललीलां सुरोत्तमे ॥

॥ ३७ ॥ सम्यक्त्वं च अय श्रेयः—संगसंवननौषधं ॥ यत्रार्हद्धर्मसाम्राज्य—लक्ष्मीर्लीलायते स्वयं ॥ ३८ ॥ इति तद्वाक्सुधासेका—त्स्वांतशांतस्मरज्वरा ॥ आलपन्मालतीपुत्रं । यक्षिणी शीलरक्षिणी ॥ ३९ ॥ यौवनेऽप्यतुलं शीलं । यतिवद्बिभ्रता त्वया ॥ नवरं पातकात् स्वात्मा । ममात्मापि च रक्षितः ॥ ४० ॥ गुरुस्त्वमेव मे गौर—गुण सम्यक्प्रबोधनात ॥ उक्त्वेत्यलंकारमिव । सम्यक्त्वं सा ततोऽग्रहीत् ॥ ४१ ॥ निशीथे च निशम्याथ । कुतोऽपि मधुरध्वनिं ॥ किमिदमिति सोऽप्राक्षी—त्कमलाममलाशयः ॥ ४२ ॥ सा स्माह साहसनिधे । ज्येष्ठकल्पमधिष्टिताः ॥ साधवोऽत्रासते तेषां । स्वाध्यायध्वनिरेषकः ॥ ४३ ॥ हृष्टोऽन्नाषिष्ट तां नीमो । धर्मज्ञा त्वमपि ध्रुवं ॥ नवरोगागदंकारा । यदुपज्ञे महर्षयः ॥ ४४ ॥ पुण्यैकाश्रयवत्साधू—पाश्रयं मे प्रदर्शय ॥ यथा निशीथिनीं शेषां । धर्मध्यानमयीं नये ॥ ४५ ॥ निशायां न विशंत्यंत—र्वनिता देवता इति ॥ दवीयस्येव सा द्वारा—द्दर्शयामास तस्य तं ॥ ४६ ॥ निशीथेऽतिशुभध्यानो—त्सर्गाद्यैरप्रमद्वरान् ॥ दृष्ट्वा महर्षीन् हर्षाश्रु—मिश्रो भीमः परामृशत ॥ ४७ ॥ उपस्कृत्य स्वांतं चिरमुचितमैत्र्यादिघटना—द्विशुद्धामध्यात्मोपनिषदमधिष्टाय तदनु ॥ निलीनाः स्वच्छंदंदु स्फुरदुचिदानंदजलधौ । परब्रह्मण्येते विदधति

निजं जन्म मफलं ॥ ४८ ॥ वयं तु विषयहृद—विषावेशवशंवदाः ॥ हहा स्वं न विजानीमः ।
पतंतं पंकसंकटे ॥ ४९ ॥ कुट्टाकं भवकोटीनां । कुंचकं शिवसंपदां ॥ वचोऽमीषां महर्षीणां । तत
शृणोमि किमप्यहं ॥ ५१ ॥ ततः कृपाणं पाणयथा—च्छित्वा नत्वा च तान्मुनीन् ॥ भीमस्तदाशी-
स्तुशल्मा । पुरस्तेषां निविष्टवान् ॥ ५२ ॥ गवलश्यामला तावद्—वेणीव गगनश्रियः ॥ अवातारी-
दुपरिनो । द्राघिष्टिका तदा भुजा ॥ ५३ ॥ केयं किमिता किं कर्त्री । ध्यायतीहं नृपोद्वहे ॥ तत्कौ-
क्षेयकमाकृष्य । सा भुजा प्रस्थितांबरे ॥ ५४ ॥

एषा मत्खड्गमादाय । क्व यातीति बुभुत्सया ॥ कुमारोऽपि समारोह—त्तामुत्प्लुत्य प्लवंगवत् ॥
॥ ५५ ॥ शैवलालिरिवाभाति । विपुले व्योमवारिधौ ॥ वात्येव त्वरितं यांती । तदा सा महती भु-
जा ॥ ५६ ॥ राहुस्वासितना सापि । दीर्घा श्यामा च दिद्युते ॥ स्वर्धुनीस्पर्धया यांती । कालिंदी-
व नभस्तलं ॥ ५६ ॥ नृपांगजो भुजारूढो । विमानस्थ इवामरः ॥ धात्रीं चित्रमयीं पश्यन् । वि-
स्मयाय स्वमार्पयत् ॥ ५७ ॥ कियद्व्योम समुल्लंघ्य । भुजायां क्वापि पर्वते ॥ कालिकामठमासायां ।
ततो भीमोऽवतीर्णवान् ॥ ५८ ॥ महामहास्थिकुड्याढ्यं । करोटिकपिशीर्षकं ॥ जंघास्थिस्थपुटद्वारं

। द्विपदंतोच्चतोरणं ॥ ५९ ॥ मृतवेणिध्वजश्लिष्ट—मजाजिनवितानितं ॥ घनासृग्मिश्रभूमीकं । मठं दृष्ट्वा ममर्श सः ॥ ६० ॥ युग्मं ॥ जुगुप्सायाः किमागारं । किं क्रीडापर्वतो श्रियां ॥ किं मृत्यो राजधानी वा । किमिदं पदमापदां ॥ ६१ ॥ तत्रातिभीषणाकारां । कालरात्रिमिवांगिनीं ॥ कपालमालाभारेण । भारिणीं कालिकां सुरीं ॥ ६२ ॥ तदर्चाचरणव्यग्रं । तं च कापालिकं पुरः ॥ तदुपांते नरं चैकं । दीनं भीमो न्यभालयत् ॥ ६३ ॥ युग्मं ॥ किमेतदिति विस्मेरे । हरिवाहननंदने ॥ कापालिकाय दत्वासिं । तत्तनौ सा भुजाविशत् ॥ ६४ ॥ पाखंडी नैष सामान्यः । किं कर्ता चासिना मम ॥ पश्यामि गुप्तो ध्यात्वेति । स कोणे तत्र तस्थिवान् ॥ ६५ ॥ अर्चित्वा कालिकां सोऽथ । भीमासिं कलयन् करे ॥ केशैः कृष्ट्वा स्वनेदिष्टं । नरमित्यब्रवीद्रुषा ॥ ६६ ॥ रेरे स्मरेष्टमात्मीयं । दिष्ट्यांतस्तेऽधुनागमत् ॥ छित्वा यत्ते शिरःपद्म—मर्चयिष्यामि देवतां ॥ ६७ ॥ स जगाद जिनेंद्रोऽस्तु । शरण्यः शरणं मम ॥ तद्भक्तश्च प्रभुर्भीम—श्चंडपाखंडिशासनः ॥ ६८ ॥ यो वारितोऽपि नैवास्था—त्त्वया दुष्टेन संसजन् ॥ यदि स स्यादिहासन्न । तर्हि त्वां चूरयेद्द्रयात् ॥६९॥ पाखंडी भीमनाम्नापि । ज्वलन्नाचष्ट दुष्ट रे ॥ भीममूर्ध्नैव देव्यार्चा । मयासीत्प्राक्चिकीर्षिता ॥७०॥

स कीचकपुरं नष्ट—स्त्वयानीतोऽस्मि तत्पदे ॥ सोऽपि विंध्ये मुनिपार्श्वे—ऽस्तीति देव्योदितं मम
॥ ७१ ॥ अयं तस्यैव रे सूनो । जीवितव्यमिवौजसः ॥ आनायितो मयास्तीह । त्वच्छिरश्छेदका
म्यया ॥ ७२ ॥ किंच यः शरणीचक्रे । जिनो भीमोऽपि च त्वया ॥ न त्वां त्रातुमलं कृष्णा । तौ
मेघ मयि देववत् ॥ ७३ ॥ यच्चैषा कालिकादेवी । त्वया शरणयिष्यते ॥ अत्रास्यथास्त्वमेतर्हि ।
कदाचिदनया तदा ॥ ७४ ॥

इत्याक्षिप्य स तं हंतुं । यावदुद्यच्छतेऽधम. ॥ तावद्भीमोऽतिभीमौजा—स्तमधिक्षिप्तवानिति ॥
॥ ७५ ॥ रेरेऽधम किमाचक्ष्वे । यद्भीमो नेशिवानिति ॥ स तवाहं पुरोऽस्मीह । प्रहरस्व बलं य·
दि ॥ ७६ ॥ वेद्मि शक्तिं तवाहं चे—द्बलिनं हंसि कंचन ॥ परं सर्वो बलिं दत्ते । पशुभिर्द्वीपि·
भिर्न हि ॥ ७७ ॥ मयि प्रहरति त्वं क—स्तव देव्यपि न क्षमा ॥ मृगं निघ्नति शार्दूले । त्राण·
शौंडो हि को भवेत ॥ ७८ ॥ इत्युक्त्वा तत्कराचासिं । पातयित्वा प्रहारतः ॥ मल्लवत्प्रौढमल्लेन ।
तेन सार्धमयुद्ध सः ॥ ७९ ॥ अवेपत व्यथार्त्तेव । तत्पादप्रहतावनिः ॥ तत्क्ष्वेडितप्रतिध्वानै—र्म·
त्रः पूत्कृतवानिव ॥ ८० ॥ तत्पाददर्दरैर्वन्याः । सिंहाद्याश्च जजागरुः ॥ मृगाद्याश्चापलायंत । कां·

दिशीकाश्चतुर्दिशं ॥ ८१ ॥ चिरप्रसृमरोद्दाम—संग्रामव्यक्तधामभिः ॥ असामान्यत्वमन्योन्यं । त-
दा ताभ्यां स्फुटीकृतं ॥ ८२ ॥ सुचिरं योधयित्वाथ । भीमो भूमौ निपात्य तं ॥ दत्वा हृदि पदं ख-
ड्गं । भयार्थमुदपीपदत ॥ ८३ ॥ अभाषिष्ट च रे दुष्ट । गर्जितं क्व तवोर्जितं ॥ क्व च सा कालि-
का काला—न्मत्तस्त्वां त्रायतेऽत्र या ॥ ८४ ॥ तदा तं पतितं वीक्ष्य । पशुवत्प्राणसंकटे ॥ कालि-
का प्रकटीभूय । भूपांगजमभाषत ॥ ८५ ॥ वत्स मास्मवधीरेनं । ममास्त्येष प्रियंकरः ॥ नरोत्तम-
शिरःपद्म—परिपूजनयान्वहं ॥ ८६ ॥ अद्य मह्यं नरस्यास्य । शिरोबलिनिवेदनात ॥ अष्टोत्तरशत-
शिरः—पूजा पूर्तिमवाप्नुयात् ॥ ८७ ॥ ततः कापालिकस्यास्य । सिद्धास्यां सर्वकार्यकृत् ॥ परमेत
दभाग्येन । त्वं प्रत्यूह इवापतः ॥ ८८ ॥ त्वं कोऽपि वीरकोटीरो । यन्मदग्रे मदर्चकं ॥ हंतुमिच्छसि
सत्वेन । देववद्भीपराङ्मुखः ॥८९॥ त्वत्सत्वेन प्रसन्नास्मि । वरं वृणु यथेप्सितं ॥ जीवंतं च विमु-
चैनं । न संतो ह्यल्पघातिनः ॥ ९० ॥ भीमस्तां स्माह यद्येवं । तर्हि जीववधं त्यज ॥ लोकशा-
स्त्रविरुद्धोऽयं । तव देवि न युज्यते ॥ ९१ ॥ उत्तमा त्वादृशी देवी । किं भवेज्जंतुघातिनी ॥
शिशिरा हि शशिज्योत्स्ना । न तापपरिवर्धनी ॥ ९२ ॥

घातयंतो परं जंतू—स्त्वमेव वत्सकाधिका ॥ ७३ ॥
इयच्चिरमहं वेद्मि । यावंमी वधको ह्ययं ॥ यतोऽत्र जगति भूयो । जनैस्स्वामिवशंवदः ॥
त्वत्कृते प्राणिनो हंति । नूनं कापालिको ह्ययं ॥ किमालंजयसे जंतू—न्निर्मंतून् कीम्यया
॥ ७४ ॥ कवलाहाररहित्या—त्वं नाश्नासि फलं ध्रुवं ॥ त्रैलोक्यत्राणशौंडानां । किं पुनर्म·
ननः ॥ ७५ ॥ सामान्यस्यापि जीवस्य । वधोऽनर्थसमर्थकः ॥ पापं तनोपि यद्देवि । विवेकः
हतामय ॥ ७६ ॥ किंच पुण्यफलं साक्षा—द्देवी त्वं कलयंत्यपि ॥ कारुण्यं क्रियतां पुण्य—प्रका·
कीदृशस्तव ॥ ७७ ॥ तस्माज्जंतुवधं त्यक्त्वा । पापध्वांतकुहुनिशं ॥ कापालिकं च निर्मोच्य ।
शैकदिनोदयः ॥ ७८ ॥ इति प्रबोधिना तेन । देवी स्वीकृत्य तद्वचः ॥ कथं मां शिक्षयन्नस्य ।
स्वं पदं प्रत्यपद्यत ॥ ७९ ॥ भीमोऽथ पृष्टवानम्रं । स्वमित्रं मतिसागरं ॥ तत्प्रिया त्वामपश्यं·
पाशे त्वं पतितो वद ॥ ३०० ॥ स तं व्यजिज्ञपद्देव । सायं प्राप्ता त्वदालयं ॥ प्राप्य चैनन्यमाक्रंदे·
नी । मुष्टेवाक्रंददुच्चकैः ॥ १ ॥ श्रुत्वा तत्क्रंदितं माता—पितरौ ते मुमूर्छतुः ॥ किं केनापि हृतः
। शब्दाद्वैतं च तेनतुः ॥ २ ॥ ततो मां भूभृदप्राक्षी—द्भीमस्तेऽतिप्रियः सुहृद् ॥ तत्राद्य प्रक·
किं वा । स्वयं क्वापि गतो वद ॥ ३ ॥ यावत्किंचिदहं वच्मि । तावत्ते कुलदेवता ॥

तोऽद्भुतं ॥ व्यदीधपत्स्वदेवीभि—र्यक्षिणी प्रेक्षणक्षणं ॥ २७ ॥ तेन नाट्यविनोदेन । विहायःसं-
चरिष्णवः ॥ उत्ताला अपि सिद्धाद्याः । स्थिरतामभजन् क्षणं ॥ २८ ॥

एवं व्योम समुल्लंघ्य । हरिवाहननृपनृः ॥ समागात् स्वपुरासन्नो—द्यानप्रासादसन्निधिं ॥२९॥
तत्रार्चित्वा जिनेंद्रार्चां । स यक्षिण्याऽतिहृष्टया ॥ कारयामासिवान् स्फीतं । संगीतं सुरनाथवत् ॥
॥ ३० ॥ संगीतध्वनिमाकर्ण्य । पृष्टवान् हरिवाहनः ॥ मंत्रिन् कौतस्कुतोऽयं मे । कर्णे नादो विगा-
हते ॥ ३१ ॥ तदैवारामिको नत्वा—वदद्देव सुतस्तव ॥ विमानमंडितक्षोणिः । संप्रत्युद्यानमासदत्
॥ ३२ ॥ तच्चैत्ये कार्यमाणस्य । तेन नाट्यस्य सर्वतः ॥ ध्वानोऽयं प्रसरीसर्ति । त्वां सुतं ज्ञापय-
न्निव ॥ ३३ ॥ तन्निशम्य प्रमोदेन । सोंतर्ङगममानिव ॥ सांतःपुरः सपौरश्च । निर्गतः सुतसन्मुखं
॥ ३४ ॥ निशम्य तातमायांतं । यक्षेण ऽग्व्यचीकरत् ॥ भीमस्तुरंगमातंग—रथपत्त्याकुलं बलं ॥
॥ ३५ ॥ दृष्ट्वा च तातं तत्पाद—पद्मन्यस्तशिरोंबुजः ॥ श्रियं पद्मोर्ध्वपद्मस्थां । तन्वन् पुत्रः प्रणे-
मिवान् ॥ ३६ ॥ पितापि तं समुत्थाप्य । क्षिपन्निव हृदंतरे ॥ परिरभ्य भृशं मूर्ध्नि । चुंबतिस्म मुहु-
र्मुहुः ॥ ३७ ॥ पुत्रालोकोद्वलत्स्तन्य—व्रजात्प्रीतिरसं हृदः ॥ दर्शयंतीमिवातुल्यं । भीमो मातरमा-

नमन ॥ ३७ ॥ उपायनपरान् पौरान् । वियोगग्रीष्मतापितान् ॥ प्रियालापसुधासारैः । स स्वयं सि-
ञ्चवान् मुहुः ॥ ३९ ॥ ततो व्योम विमानौघैः । सैन्यैर्भूमिं च भूषयन् ॥ प्रौढं करींद्रमारूढः । श्रि-
या शक्र इवापरः ॥ ४० ॥ स्फुरत्तूर्यरवाहूत—पौरपौरीव्रजस्तुतः ॥ विश्राण्यमानस्वर्णौघश्च । श्रीपती-
कृतमार्गणः ॥ ४१ ॥ विलोकयन् पताकाभि—र्निर्गतार्ककरं पुरं ॥ जनकेन समं भीमो । निजा-
वासं समासदत् ॥ ४२ ॥ त्रिभिर्विशेषकं ॥ श्रुत्वा यक्षादितश्चित्रं । चरित्रं पुत्रकर्तृकं ॥ तदैव मु-
दितो नृप—स्तं स्वराज्ये न्यवीविशत ॥ ४३ ॥ स्वयं च संयमोद्दाम—सैन्येन स्ववशीकृतं ॥ मु
क्तिराज्यमलंचक्रे । शाश्वतश्रीविनृपितं ॥ ४४ ॥ मंत्रिणं मतिमंतं स्वं । निर्माय मतिसागरं ॥ तान्
विसृज्य च यक्षादीन् । भीमो राज्यमपालयत ॥ ४५ ॥ सांयुगीनं धनुर्विन्न—ल्लीलयैव स नृपतिः
॥ संपराये पराजिग्ये । परान् दैत्यानिवाच्युतः ॥ ४७ ॥ चतुरंगापि सेना तु—त्तस्यामंबरहेतवे ॥
नृचक्रं तु वशीचक्रे । स स्वस्थाम्नैव केवलं ॥ ४८ ॥ तद्राज्ये नैव दुर्भिक्षं । नेतयो नाप्यनीतयः ॥
न चौर्यं न परद्रोहो । नासूया जातु जज्ञिरे ॥ ४९ ॥ प्राच्यपुण्यफलं राज्यं । मत्वा तत्वाहृतस्थि-
तिः ॥ तदेवाराधयामास । भीमः सत्कृत्यसेवनात् ॥ ५० ॥ धारयन् हृदि सम्यक्त्वं । चारयन् सुकृतैः

टीभूता । स्वयमेव प्रभावभूः ॥ ४ ॥ अवादीच्च नरेंद्र त्वं । पुत्रार्थं मास्म खिद्यथाः ॥ पार्श्वम्निना हृतः सोऽभू—त्कालिकापूजनेछया ॥ ५ ॥ तं विधूयाधुना पुत्र—स्तवास्ते यक्षिणीगृहे ॥ कियद्दिनावसाने च । समेष्यति महर्द्धिभाक् ॥ ६ ॥ आर्त्तो नृपस्तया देवी—वाचा स्वस्थोऽभवन्मनाक् ॥ यथा प्रसृतया वृष्ट्या । दवदग्धो महीरुहः ॥ ७ ॥ गते देव्यवतारेऽथ । सत्यैषा वाकिमन्यथा ॥ इत्युपश्रुतिमानेतुं । त्वत्तात. प्रजिघाय मां ॥ ८ ॥ तन्निशम्य निवृत्तोऽहं । यावत्तावत्कुतोऽप्यभूत ॥ वात्यावर्त्तो रज.पूरैः । पूरयन्निव रोदसीं ॥ ९ ॥ निशीथे रेणुपूरोऽसौ । तथावन्यां व्यजृंभत ॥ यथाहं दिव्यनेत्रोऽपि । जनुषांध इवाभवं ॥ १० ॥ तदंतरे समेत्याशु । कापाल्येष पिशाचवत् ॥ स्तनंधयमिवोत्पाट्य । मां व्योम्नेह समानयत ॥ ११ ॥ अंतर्दुर्वृत्तमेतस्य । प्रेक्ष्य प्रक्षुभितोऽधिकं ॥ पुरापि त्वद्वियोगार्त्तो । मृतदेश्य इवाभवं ॥ १२ ॥ यावच्चिकर्त्तिषामास । मच्छिरोऽसौ दुराशयः ॥ तावन्मगोत्रदेव्येव । समाकृष्टस्त्वमागमः ॥ १३ ॥ अहितोऽपि हितः सोऽय—मावयोर्योजनादभूत् ॥ जातुचिद्दैवयोगेन । विषमप्यमृतायते ॥ १४ ॥

मित्रवृत्तमिति श्रुत्वा । पित्रोराधिं विमृश्य च ॥ दुःखदावानलप्लुष्टो । म्लीमस्तरुरिवाभवत् ॥

॥ १५ ॥ घृणीयमानो हृदये । तेन स्वेन कुकर्मणा ॥ अथ कापालिकोऽभ्येत्य । नेमिवान्नृपनं-
दनं ॥ १६ ॥ जचिवांश्च त्वयैकेन । रत्नगर्भास्ति नूरियं ॥ यस्येदृग्दीप्यते लोको—त्तरं सत्वमयं
मन्तः ॥ १७ ॥ पुरा केनाप्यनम्रोऽपि । नम्रोऽहं भवताधुना ॥ वार्धिः परैरपीतोऽपि । किं न पीतो
ऽगस्तिना ॥ १८ ॥ त्वया दामोदरेणेव । करुणारससिंधुना ॥ अज्ञानपंकमग्नोऽहं । गोमंमलवदु
द्धृतः ॥ १९ ॥ इत्युक्त्वा क्षमयामास । कापालिको गलन्मदः ॥ गृहीत्वा शुद्धसम्यक्त्वं । निजं
स्थानं ययौ क्षणात् ॥ २० ॥ यक्षिणी कमला साथ । मुनिपार्श्वे समाययौ ॥ प्रातः परं न तत्रापि
। भीमं साथ व्यलोकयत् ॥ २१ ॥ प्रणम्य विस्मितापृछ—द्यक्षिणी सा मुनीनपति ॥ क कुमारोऽ-
धुनास्तीति । परं ते नोत्तरं ददुः ॥ २२ ॥ ततस्त्वामिह विज्ञाय । ज्ञानेन प्रस्थिता द्रुतं ॥ मार्गे
कियान विलंबोऽभू—त्संप्रत्यस्मि समेयुषी ॥ २३ ॥ यक्षिणीनिर्मिते दिव्ये । विमानेऽतिमनोहरे ॥
समित्रोऽपि समारोह—द्भीमोऽथ गमनोत्सुकः ॥ २४ ॥ विमानस्थैः समस्तैश्च । यक्षाद्यैः सहितस्त-
तः ॥ व्योम्ना प्रस्थितवान् भीम—स्त्रिदिवादिव देवराट् ॥ २५ ॥ संचरद्भिर्विमानैस्तै—र्ज्योतिर्मंम-
लमंमितैः ॥ तदा लोको व्यलोकिष्ट । शतसूर्यमिवांबरं ॥ २६ ॥ गगने व्रजतस्तस्य । भीमस्य पुर-

तोऽद्भुतं ॥ व्यदीधपत्स्वदेवीभि—र्यक्षिणी प्रेक्षणक्षणं ॥ २७ ॥ तेन नाट्यविनोदेन । विहायःसं-
चरिष्णवः ॥ उत्ताला अपि सिद्धाद्याः । स्थिरतामभजन् क्षणं ॥ २८ ॥

एवं व्योम समुल्लंघ्य । हरिवाहननृपनूः ॥ समागात् स्वपुरासन्नो—द्यानप्रासादसन्निधिं ॥२९॥
तत्रार्चित्वा जिनेंद्रार्चा । स यक्षिण्याऽतिहृष्टया ॥ कारयामासिवान् स्फीतं । संगीतं सुरनाथवत् ॥
॥ ३० ॥ संगीतध्वनिमाकर्ण्य । पृष्टवान् हरिवाहनः ॥ मंत्रिन् कौतस्कुतोऽयं मे । कर्णे नादो निगा-
हते ॥ ३१ ॥ तदैवारामिको नत्वा—वदद्देव सुतस्तव ॥ विमानमंडितक्षोणिः । संप्रत्युद्यानमासदत्
॥ ३२ ॥ तच्चैत्ये कार्यमाणस्य । तेन नाट्यस्य सर्वतः ॥ ध्वानोऽयं प्रसरीसर्ति । त्वां सुतं ज्ञापय-
न्निव ॥ ३३ ॥ तन्निशम्य प्रमोदेन । सोंतरंगममानिव ॥ सांतःपुरः सपौरश्च । निर्गतः सुतसन्मुखं
॥ ३४ ॥ निशम्य तातमायांतं । यक्षेण डाग्व्यचीकरत् ॥ नीमस्तुरंगमातंग—रथपत्त्याकुलं बलं ॥
॥ ३५ ॥ दृष्ट्वा च तातं तत्पाद—पद्मन्यस्तशिरोंबुजः ॥ श्रियं पद्मोर्ध्वपद्मस्थां । तन्वन् पुत्रः प्रणे-
मिवान् ॥ ३६ ॥ पितापि तं समुत्थाप्य । क्षिपन्निव हृदंतरे ॥ परिरभ्य भृशं मूर्ध्नि । चुंबतिस्म मुहु
र्मुहुः ॥ ३७ ॥ पुत्रालोकोच्छलत्स्तन्य—च्छलात्प्रीतिरसं हृदः ॥ दर्शयंतीमिवातुल्यं । नीमो मातरमा-

नमत् ॥ ३७ ॥ उपायनपरान् पौरान् । वियोगग्रीष्मतापितान् ॥ प्रियालापसुधासारैः । स स्वयं सि-
क्तवान् मुहुः ॥ ३९ ॥ ततो व्योम विमानौघैः । सैन्यैर्भूमिं च भूषयन् ॥ प्रौढं करींद्रमारूढः । श्रि-
या शक्र इवापरः ॥ ४० ॥ स्फुरत्तूर्यरवाहूत—पौरपौरीव्रजस्तुतः ॥ विश्राण्यमानस्वर्णौघ । श्रीपती-
कृतमार्गणः ॥ ४१ ॥ विलोकयन् पताकाभि—र्निर्गतार्ककरं पुरं ॥ जनकेन समं भीमो । निजा-
वासं समासदत् ॥ ४२ ॥ त्रिभिर्विशेषकं ॥ श्रुत्वा यशादितश्चित्रं । चरित्रं पुत्रकर्तृकं ॥ तदैव मु-
दितो नृप—स्तं स्वराज्ये न्यवीविशत् ॥ ४३ ॥ स्वयं च संयमोद्दाम—सैन्येन स्ववशीकृतं ॥ मु-
क्तिराज्यमलंचक्रे । शाश्वतश्रीविभूषितं ॥ ४४ ॥ मंत्रिणं मतिमंतं स्वं । निर्माय मतिसागरं ॥ तान्
विसृज्य च यशादीन् । भीमो राज्यमपालयत् ॥ ४५ ॥ सांयुगीनं धनुर्विद्य—ल्लीलयैव स नृपतिः
॥ संपराये पराजिग्ये । परान् दैत्यानिवाच्युतः ॥ ४७ ॥ चतुरंगापि सेना तु—स्तस्यामंबरहेतवे ॥
नृचक्रं तु वशीचक्रे । स स्वस्थाम्नैव केवलं ॥ ४८ ॥ तद्राज्ये नैव दुर्भिक्षं । नेतयो नाप्यनीतयः ॥
न चौर्यं न परद्रोहो । नासूया जातु जज्ञिरे ॥ ४९ ॥ प्राच्यपुण्यफलं राज्यं । मत्वा तत्त्वाहृतस्थि-
तिः ॥ तद्देवाराधयामास । भीमः सत्कृत्यसेवनात् ॥ ५० ॥ धारयन् हृदि सम्यक्त्वं । चारयन् सुकृतैः

प्रजाः ॥ प्रभावयन्मतं जैनं । चिरं भीमोऽन्वशान्महीं ॥ ५१ ॥ वृद्धत्वेऽथ निशम्य सद्गुरुगिरं नि
र्वेदमेदस्करीं । राज्ये स्वं विनिवेश्य पुत्रमुदयाधारं चरित्रैर्निजैः ॥ प्रव्रज्यां प्रतिपद्य रम्यतपसा सं-
शोषयन् गात्रकं । श्रित्वा केवलमुज्ज्वलं स भगवान् भीमोऽभ्यगान्निर्वृतिं ॥ ५२ ॥

एवं धर्मामृतं वृष्ट्वा । गुरौ घन इव स्थिते ॥ हृष्टः केकीव चौलुक्य—भूधवो मधुरं जगौ ॥
॥ ५३ ॥ प्रभो मिथ्यात्वधत्तूर—स्वादभ्रांततया मया ॥ लेष्टु हेमेव बुद्धं प्रा—गतत्वमपि तत्ववत्
॥ ५४ ॥ अधुना तु भवद्वाणी—सुधापानगतभ्रमः ॥ धर्मादितत्वं निःशेषं । जानानोऽस्मि यथा-
स्थितं ॥ ५५ ॥ अज्ञानपटलं दूरी—कृत्य बोधशलाकया ॥ मम ज्ञानमयं नेत्रं । त्वयैव प्रकटीकृतं
॥ ५६ ॥ तर्जितानल्पकल्पद्रु—चिंतारत्नादिवैभवं ॥ प्रसद्य भगवन् श्राद्ध—धर्मं मयि निवेशय
॥ ५७ ॥ ततः स्फुरति सल्लग्ने । स्वच्छंदे च महोत्सवे ॥ संघं चतुर्विधं साक्षी—कृत्य सत्कृत्यतत्परः
॥ ५८ ॥ विश्वैश्वर्यमिव श्राद्ध—धर्मं सम्यक्त्वभूषितं ॥ न्यास्थच्चौलुक्यभूपाले । विधिना हेमसूरि-
राट् ॥ ५९ ॥ युग्मं ॥ धर्मलक्ष्मीं पुरस्कृत्य । वधूं वर इवाशुभत् ॥ भ्राम्यन् समवसरणं । पावकं प-
रितो नृपः ॥ ६० ॥ चौलुक्ये साधुनिक्षिप्तैः । क्षोदैः श्रीखंडजैस्ततः ॥ अकालेऽपि तदा लेभे ।

क्रीडा वासंतिकी जनैः ॥ ६१ ॥ अदाना रेजिरे शुद्धाः । संघदिक्षा नृपंप्रति ॥ रक्तसुणरमामुक्ताः
' ज्वाका इव लक्षशः ॥ ६२ ॥ नृपः प्राप्यार्हतां धर्म—मत्रापि परमां मुदं ॥ पुरोभाविमहानंद—
वर्णिकामिव लब्धवान् ॥ ६३ ॥ तदादितस्तदादेशा—त्तद्देशे निखिले जने ॥ दानशीलतपोभावा
। व्यलमंताश्च सर्वतः ॥ ६४ ॥ वर्णयन् भाग्यदाक्ष्यादीन् । गुणान् गूर्जरभूभुजः ॥ तदीयस्तुतिवा
चालो । मत्तानपि न कोऽजनि ॥ ६५ ॥ आरोपितस्य धर्मस्य । रक्षणे यामिकीमिव ॥ अनुशिष्टि-
मिमामूचे । हेमाचार्यो नृपंप्रति ॥ ६६ ॥

कोशाद्विश्वपतेर्विकृष्य गुरुणा श्राद्धव्रतानृपणं । स्फूर्जन्मौक्तिकदामविस्तृतगुणं सम्यक्त्वसन्ना-
यकं ॥ तुभ्यं दत्तमिदं महीधव वदन् हृद्यन्वहं जीवव—त्वं सौभाग्यभरेण मुक्तियुवतेर्भावी प्रियो
भावुकः ॥ ६७ ॥ तदा संघात्स धर्मात्मा । राजर्षिरिति चापरं ॥ नामद्वयं सुदुःप्राप । प्रसादमिव
लब्धवान् ॥ ६८ ॥ ततोऽन्यदेवतास्त्यक्त्वा । हृदये सदनेऽपि च ॥ आर्हतीः प्रतिमा न्यास्थ—न्नृ-
पः सद्गुरूपास्यतः ॥ ६९ ॥ त्रिकालमर्चयित्वा ताः । कर्पूरकुसुमादिभिः ॥ स स्वं सुरभयामास ।
मुक्तामोदसंपदा ॥ ७० ॥ नृपोऽष्टम्यादिघस्रेषु । पूजयाष्टप्रकारया ॥ पूजयित्वा जिनानष्ट—कर्मी

निर्मितवान् श्लथां ॥ ७१ ॥ द्वादशव्रतसम्यक्त्व—ज्ञानादीनां नरेश्वरः ॥ ज्ञात्वा तत्वं क्रमात्तेषा—मतीचारानप्यवर्जयत ॥ ७२ ॥ किंचिद्गुरुमुखांभोजात । किंचिद्वाग्भटमंत्रिणः ॥ शृण्वानो ज्ञातवान् सर्वं । श्राद्धाचारं स चारुधीः ॥ ७३ ॥ एवं सम्यग्परिज्ञात—धर्मश्चौलुक्यभूधवः ॥ दयां तत्साधनीं विश्व—मप्रवर्तयितुमैहत ॥ ७४ ॥ ततश्चतुर्षु वर्णेषु । स्वस्य चान्यस्य हेतवे ॥ हंता यः कोऽपि पापीयान् । जीवांश्छागमृगादिकान् ॥ ७५ ॥ स राजद्रोहीत्युद्घोष्य । पटहं पत्तने नृपः ॥ अमारिं कारयामास । जीवातुमिव देहिनां ॥ ७६ ॥ युग्मं ॥ व्याधशौनिककैवर्ता—नप्यन्यशुभकर्मसु ॥ विनियोज्याथ तेभ्योऽपि । करुणां प्रत्यपालयत् ॥ ७७ ॥ यथार्हत्केषु सत्या वाग् । यथा दुष्टेषु शिष्टता ॥ तथासीद्धौनिकाद्येषु । विस्मयाढ्या दया तदा ॥ ७८ ॥ गजाश्वमहिषादीनां । तदा नागलितं जलं ॥ पाययामासिवान् कोऽपि । चौलुक्यनृपशासनात ॥ ७९ ॥ ततः स्वदेशे स्ववश—महीशविषयेष्वपि ॥ प्रजिघाय निजानाप्तान् । मारिं वारयितुं नृपः ॥ ८० ॥ सुराष्ट्रपाटरीस्तंभ—तीर्थवार्धितटादिषु ॥ लाटमालवकाश्मीर—मेदपाटमरुष्वपि ॥ ८१ ॥ सपादलक्षदेशेऽपि । निजशक्तिधनादिभिः ॥ ते मारिं वारयामासुः । पापव्याधिमिवाभितः ॥ ८२ ॥ युग्मं ॥

द्यूतादीनपि हिंसायाः । कारणानीति नृपतिः ॥ पटहोद्घोषणापूर्वं । निषिध्य निखिले जने
॥ ७३ ॥ मृन्मयानि नृरूपाणि । मषीश्याममुखानि च ॥ आरोप्य तानि सप्तापि । व्यसनान्यधिरा-
सभं ॥ ७४ ॥ भ्रमयित्वा प्रतिपथं । हन्यमानानि यष्टिभिः ॥ पत्तनान्निजदेशाच्च । सर्वथा निरवा
सयत ॥ ७५ ॥ त्रिभिर्विशेषकं ॥ ततश्चौलुक्यभूमीभु—ग्विष्वग् प्रैषीन्निजांश्चरान् ॥ जंतून् हिन
स्ति किं कोऽपि । न वेत्यवलोकितुं ॥ ७६ ॥ चंक्रम्यमाणास्तेऽजस्रं । प्रेक्ष्यमाणाश्च हिंसकान् ॥
सपादलक्षदेशीयं । कंचिद्ग्राममुपागमन् ॥ ७७ ॥ माहेश्वरो वणिक्तत्र । वेणीविवरणे तदा ॥ त
त्रीर्वांश्रियया दत्तां । यूकामेकां न्यपातयत ॥ ७८ ॥ लक्षयित्वातिदाक्ष्येण । दूरस्थैरपि तच्चरैः ॥ द-
ध्रे स चौरवत्सार्धं । तया व्यापन्नयूकया ॥ ७९ ॥ ततः स पत्तनं नीत—स्तथैव पृथिवीभुजा ॥
ज्ञाततदुष्टचेष्टेन । यताषे पक्षाहरं ॥ ८० ॥ विज्ञायापि त्वया विष्वग् । निषिद्धं प्राणिनां वधं
॥ रेरे निःशूक यूकेयं । हन्यतेस्म त्वया कुतः ॥ ८१ ॥ सोऽवदद्देव मन्मूर्ध—मध्ये मार्गं विधाय
मे ॥ कौणपीव पिबत्येषा । रक्तं व्यापादिता ततः ॥ ८२ ॥ जगौ स्वामीयमेवास्याः । स्थितिस्तां
नन्वनी यदि ॥ घात्येयं तर्हि सर्वेऽपि । घात्याः स्वस्वस्थितिस्थिताः ॥ ८३ ॥ पशुप्रायश्च कस्त्वं रे ।

मानुषैः ॥ १५ ॥ जीवंत एव स्थास्यंति । निशि ते पशवोऽखिलाः ॥ प्रातस्तद्विक्रयाद्भोगं । देवता
नां विधापयेः ॥ १७ ॥ जननीमिव जीवानां । श्रुत्वा तां गौरवीं गिरं ॥ सर्वं पूर्वोक्तयुक्त्या त—न्न-
रेंद्रोऽपि न्यवीवृतत ॥ १८ ॥ भ्रातानिव प्रभातेऽति—कूर्दमानान् विलोक्य तान् ॥ देवीशुश्रूषकाने-
वं । राजर्षिर्निजगाद गाः ॥ १९ ॥ रेरे दुष्टा मया ज्ञाता । यूयमेव पलेप्सया ॥ शौनिका इव नि-
स्त्रिंशा । घातयध्वे पशूनिमान् ॥ २० ॥ यदि मांसेन देवीनां । संपद्येत प्रयोजनं ॥ तदा हन्युः
स्वयं नैताः । कथमेतान् बलीकृतान् ॥ २१ ॥ स्वयं नष्टाः परान् केऽपि । नाशयंतीति लोकवाक् ॥
भवद्भिरेव पापिष्ठैः । सार्थकीक्रियते ननु ॥ २२ ॥ वंचयित्वा पुरा रे मां । तत्त्वज्ञमधुना कथं ॥
वंचयध्वेऽपनिद्रं हि । न मुष्णंति मलिम्लुचाः ॥ २३ ॥ ततः पशून् स विक्रीय । तत्कालं सकला-
नपि ॥ तद्द्रव्यैः कुलदेवीनां । भोगान्भोगान् व्यदीधपत् ॥ २४ ॥ कृतोपवासः स्वावासे । दशमी-
निशि भूपतिः ॥ जिनेश्वरं स्मरंश्चित्ते । ध्यानं दध्रे मुनींद्रवत् ॥ २५ ॥

तदा विदधती दीप्त्या । सदीपमिव मंदिरं ॥ त्रिशूलव्यग्रहस्ताग्रा । देवी काचिद्दिवागमत् ॥
॥ २६ ॥ ऊचे च नृपतिं पश्य । समुन्मीलय लोचने ॥ अहं कंटेश्वरीत्यस्मि । प्राप्ता त्वत्कुलदेव-

ना ॥ २७ ॥ राजन् मह्यं ददे पूर्वं—स्त्वयाप्येतद्दिनावधि ॥ तद्देयमिव पश्चाद्यं । कथं नात्र प्रदीय-
ते ॥ २८ ॥ लुप्त्वा कुलक्रमं गोत्र—देवतां योऽवमन्यते ॥ प्रक्षीयते स तत्कोपा—द्रक्षशापादि-
वाचिरं ॥ २९ ॥ यदि कामयसे श्रेय—स्तर्हि स्वागमां प्रसादय ॥ नो चेत्त्वां त्रासयिष्यामि । तृण-
वत्कोपवह्निना ॥ ३० ॥ तन्निशम्य दृढीकृत—दयाधर्मैकमानसः ॥ नृपो जगाद तां देवीं । नत्वा
विनयवामनः ॥ ३१ ॥ मातस्त्वं सर्वदा सर्व—प्राणिरक्षणतत्परा ॥ अतो जीववधो योग्यो । मात-
स्तेऽपि न ते भवेत ॥ ३२ ॥ यद्यादिशसि मां मात—स्त्वत्कृते पायसं वरं ॥ मोदकादिमनोज्ञान्नं ।
प्रगुणीकारयाम्यहं ॥ ३३ ॥ देव्युवाच न तुष्यामि । पायसादिभिरन्वहं ॥ ततो राजन् द्रुतं यच्छ ।
मह्यं त्वं कांक्षितं पलं ॥ ३४ ॥ नृपोऽवोचन्मया मात—र्जिनधर्मः स्वीकृतोऽस्ति तत् ॥ हिंसां नैव
विधास्यामि । व्रतभंगभयादहं ॥ ३५ ॥ तत श्रुत्वा कुपिता देवी । नृपं कुष्ठविमंडितं ॥ कृत्वा ति-
रोदधे तूर्णं । पूतिदुर्गंधदेहिनं ॥ ३६ ॥

नृपोऽथ विह्वलीभूतो । व्याधिनातीवपीडितः ॥ मंत्रिणोदयनेनाथा—कारयामास वैद्यकान् ॥
॥ ३७ ॥ तेऽथ देवकृतं वीक्ष्य । नृपरोगं विचक्षणाः ॥ औषधासाध्यतां तत्र । मत्वैवं जगदुर्नृपं ॥

नृपचक्रधरेष्वपि ॥ एवं दुश्चेष्टते यूका । स्ववृत्ति· खलु दुस्त्यजा ॥ ९४ ॥ पीडामात्रं वितन्वाना ।
त्वयेयं निहता यदि ॥ प्राणानपि हरन्नस्याः । कथं त्वं नैव हन्यसे ॥ ९५ ॥ जानन् स्वस्येव सर्व
स्य। सुखं दुःखं हिताहितं ॥ प्राणापहरणाद्दुःखं । परस्य कुरुषे कथं ॥ ९६॥ कल्मषाद्यदि नात्रै
षी—र्यूकां हिंसन् विनिर्घृण ॥ मत्तस्त्वं किं न मत्तोऽपि । हिंसकैकविनाशकात् ॥ ९७ ॥ राज्ञामा
ज्ञाविलोपो हि । विना शस्त्रं वधः स्मृतः ॥ तत्कुर्वाणोऽधुना मूस्त्वं । हंतव्यो जनमध्यगः ॥ ९८ ॥
परं यूकाकृतेऽप्येवं । कुप्यंस्त्वां घातये कथं ॥ तेन सर्वस्वदंडेन । त्वां निगृह्णामि दुष्टवत् ॥ ९९ ॥
ततस्त्वं गृहसर्वस्वं । व्ययीकृत्यात्र पत्तने ॥ कारयस्व स्यात्तस्याः । श्रेयसे चैत्यमुत्तमं ॥ १०० ॥ य
थैतद्वृत्तमाकर्ण्य । यूकाचैत्यं विलोक्य च ॥ निर्दयोऽपि न कोऽप्यन्यो । हन्यात्त्वद्वपुष्मतः ॥ १ ॥
इत्यादिष्टो नरेंद्रेण । स व्ययित्वा घनं धनं ॥ पत्तनेऽकारयद्यूका—विहारं हारवद्भुवः ॥ २ ॥ एवं
चरत्सु चौलुक्य—चरेषु क्वापि जंतवः ॥ न निश्यपि न गेहेऽपि । न केनापि निपातिताः ॥ ३ ॥
ततो यथा जिनेंद्रस्य । तीर्थे ववृधिरे नराः ॥ तथा चौलुक्यराज्येऽपि । जलस्थलखचारिणः ॥ ४ ॥
व्याधान् वीक्ष्य विहारिणः शिशुमृगाः स्वोक्त्या पितॄनूचिरे । यामः सांऽप्रतांतरेष्विह न चेदेते

ह्निष्यंति नः ॥ ते तानभ्यवदन् विभीथ किमितो वत्साः सुखं तिष्ठत । श्रीचौलुक्यक्षिया निरी-
क्षितुमपि क्षोदा न युष्मानमी ॥ ५ ॥ अमारिकरणं तस्य । वर्ण्यते किमत परं ॥ यूतेऽपि कोऽपि
यन्नोचे । मारिरित्यक्षरद्वय ॥ ६ ॥ नवरात्रेष्वथैतेषु । निस्त्रिंशा देवतार्चकाः ॥ गुरोः पुरःस्थं चौ-
लुक्य— नृपमेवं व्यजिज्ञपन् ॥ ७ ॥ संति कंटेश्वरीमुख्या । देवतास्तव गोत्रजाः ॥ तासां पूजाकृ-
ते राजन् । सप्तम्यादिदिनत्रये ॥ ८ ॥ अजाः शतानि सप्ताष्ट । नव सैरभका अपि ॥ सप्ताष्टनवसं-
ख्याका । वितीर्यंतेऽनुवत्सरं ॥ ९ ॥ युग्मं ॥ वितीर्यंतामभी सर्वे । पूज्यंते देवता यथा ॥ न चे-
त्कोप्स्यंति ता विघ्नं । करिष्यंति च तत्क्षणं ॥ १० ॥ महीपतिस्तदाकर्ण्य । कर्णान्यर्णमुपेत्य च ॥
अधुना किं करोमीति । पृष्टवान् गुरुकुंजरं ॥ ११ ॥ किंचिद्व्यात्वावदत्सूरि—र्न जंतून् घ्नंति देवताः
॥ न मांसमपि चाश्नंति । जिनवाणीप्रमाणतः ॥ १२ ॥ किंतु केलिकिलत्वेन । मार्यमाणान् पशून्
पुरः ॥ दृष्ट्वा काश्चन तुष्यंति । शाकिन्य इव निःकृपाः ॥ १३ ॥

एते देव्यर्चका एव । देवीपूजनकैतवात् ॥ हत्वा जंतून् स्वदंते हा । स्वार्थायेयं तदर्थना ॥
॥ १४ ॥ ततः ससैरभांश्छागान् । देयान् क्षिप्त्वा सुरीमठे ॥ तालयित्वा च तद्द्वारं । रक्षयेथाः स्व-

मानुषैः ॥ १५ ॥ जीवंत एव स्थास्यंति । निशि ते पशवोऽखिलाः ॥ प्रातस्तद्विक्रयाद्भोगं । देवतानां विधापयेः ॥ १७ ॥ जननीमिव जीवानां । श्रुत्वा तां गौरवीं गिरं ॥ सर्वं पूर्वोक्तयुक्त्या त—न्नरेंद्रोऽपि न्यवीवृतत ॥ १८ ॥ प्रातानिव प्रजातेऽति—कूर्दमानान् विलोक्य तान् ॥ देवीशुश्रूषकानेवं । राजर्षिर्निजगाद गाः ॥ १९ ॥ रेरे दुष्टा मया ज्ञाता । यूयमेव पलेप्सया ॥ शौनिका इव निस्त्रिंशा । घातयध्वे पशूनिमान् ॥ २० ॥ यदि मांसेन देवीनां । संपद्येत प्रयोजनं ॥ तदा हन्युः स्वयं नैताः । कथमेतान् बलीकृतान् ॥ २१ ॥ स्वयं नष्टाः परान् केऽपि । नाशयंतीति लोकवाक् ॥ भवद्भिरेव पापिष्ठैः । सार्थकीक्रियते ननु ॥ २२ ॥ वंचयित्वा पुरा रे मां । तत्वङ्गमधुना कथं ॥ वंचयध्वेऽपनिङ्कं हि । न मुष्णंति मलिम्लुचाः ॥ २३ ॥ ततः पशून् स विक्रीय । तत्कालं सकलानपि ॥ तद्द्रव्यैः कुलदेवीनां । भोगान्भोगान् व्यदीधपत् ॥ २४ ॥ कृतोपवासः स्वावासे । दशमीनिशि भूपतिः ॥ जिनेश्वरं स्मरंश्चित्ते । ध्यानं दध्रे मुनींद्रवत् ॥ २५ ॥

तदा विदधती दीप्त्या । सदीपमिव मंदिरं ॥ त्रिशूलव्यग्रहस्ताग्रा । देवी काचिद्दिवागमत् ॥ ॥ २६ ॥ ऊचे च नृपतिं पश्य । समुन्मीलय लोचने ॥ अहं कंटेश्वरीत्यस्मि । प्राप्ता त्वत्कुलदेव

ना ॥ २७ ॥ राजन् मह्यं ददे पूर्वं—स्त्वयाप्येनद्दिनावधि ॥ तद्देयमिव पश्चाद्यं । कथं नात्र प्रदीय-
ते ॥ २८ ॥ श्रुत्वा कुलक्रमं गोत्र—देवतां योऽवमन्यते ॥ प्रक्षीयते स तत्कोपा—द्ब्रह्मशापादि-
वाग्निं ॥ २९ ॥ यदि कामयसे श्रेय—स्तर्हि त्वं मां प्रसादय ॥ नो चेत्त्वां भस्मयिष्यामि । तृण-
वत्कोपवह्निना ॥ ३० ॥ तन्निशम्य दृढीभूत—दयाधर्मैकमानसः ॥ नृपो जगाद तां देवीं । नत्वा
विनयवामनः ॥ ३१ ॥ मातस्त्वं सर्वदा सर्व—प्राणिरक्षणतत्परा ॥ अतो जीववधो योग्यो । मान-
सेऽपि न ते भवेत ॥ ३२ ॥ यद्यादिशसि मां मात—स्त्वत्कृते पायसं वरं ॥ मोदकादिमनोज्ञान्नं ।
प्रगुणीकारयाम्यहं ॥ ३३ ॥ देव्युवाच न तुष्यामि । पायसादिभिरन्वहं ॥ ततो राजन् द्रुतं यच्छ ।
मह्यं त्वं कांक्षितं पलं ॥ ३४ ॥ नृपोऽवोचन्मया मात—र्जिनधर्मः स्वीकृतोऽस्ति तत् ॥ हिंसां नैव
विधास्यामि । व्रतभंगभयादहं ॥ ३५ ॥ तत श्रुत्वा कुपिता देवी । नृपं कुष्ठविडंबितं ॥ कृत्वा ति-
रोदधे तूर्णं । पूतिदुर्गंधदेहिनं ॥ ३६ ॥

नृपोऽथ विह्वलीभूतो । व्याधिनातीवपीडितः ॥ मंत्रिणोदयनेनाथा—कारयामास वैद्यकान् ॥
॥ ३७ ॥ तेऽथ देवकृतं वीक्ष्य । नृपरोगं विचक्षणाः ॥ औषधासाध्यतां तत्र । मत्वैवं जगदुर्नृपं ॥

॥ ३८ ॥ अस्मद्दैवतसूर्यादि—स्तुत्या कुष्टादयो रुजः ॥ प्रलीयंतेतमामर्ह—त्सेवया तूल्लसंति ताः
॥ ३९ ॥ तान् विसृज्य नृपेणोक्तं । मंत्रिणे धर्मलाघवात् ॥ अहं गत्वा बहिर्वह्नौ । तृणयिष्यामि
जीवितं ॥ ४० ॥ जगादोदयनः स्वामिन् । केयं मृत्युकथा वृथा ॥ देवी प्रसाद्यतां सद्यः । सर्वं द-
त्वा तदीप्सितं ॥ ४१ ॥ भ्रूनां व्योमवत्स्थान । प्राणानां वपुरुच्यते ॥ तस्मिन्नश्यति दक्षोऽपि ।
नियमं कोऽभिकांक्षति ॥ ४२ ॥ सर्वत्र संयमं रक्षे—त्तस्मादात्मानमेव च ॥ सति स्वास्थ्ये पुनर्वि-
द्वान् । प्रायश्चित्तं समाचरेत् ॥ ४३ ॥ इति सर्वज्ञवाक्येन । संप्राप्ते प्राणसंकटे ॥ चारित्रिणोऽपि
चारित्रं । हित्वात्मानमवंति हि ॥ ५४ ॥ नियमोऽपि तवास्त्येष । षडाकारयुतः खलु ॥ स हिंसया-
पि नो याति । देवतादेशकुसया ॥ ५५ ॥ त्वयि जीवति धात्रीयं । राजन्वती भविष्यति ॥ नंदिष्यं-
ति जनास्तस्मा—द्रक्षात्मानं यथातथा ॥ ५६ ॥ राजर्षिस्तं पुनः प्रोचे । किमेतत्सचिवोच्यते ॥
कुर्वे जीववधं नाहं । कल्पांतेऽपि कथंचन ॥ ५७ ॥ हिंसाकलंकितो देहो—ऽनंतसंसारकारकः ॥
इदं च सर्ववित्प्रोक्तं । मुक्तिकारि कृपाव्रतं ॥ ५८ ॥ यदीदृशेन देहेन । पुण्यमुर्जितमर्ज्यते ॥ द-
षत्खंडेन तद्भूरि । कांचनं परिगृह्यते ॥ ५९ ॥

सर्वतश्चपलो वायु—र्जीवितव्यं तदात्मकं ॥ तत्तस्य चपलस्यार्थे । कथं मुंचे स्थिरां कृपां ॥
॥ ६० ॥ किंच त्रसति पापीयान् । कालधर्मान्नि पुण्यवान् ॥ संचितोल्बणपुण्यस्य । कीदृशं मम त-
द्भयं ॥ ६१ ॥ आराधितो जिनो देवो । हेमसूरिर्गुरुर्मतः ॥ निर्मितश्च दयाधर्मो । न्यूनमद्यापि किं
मम ॥ ६२ ॥ तत्त्वरस्व कुरुष्व त्वं । चितां दारुवरांचितां ॥ गमिष्यति न चेद्रात्रि—र्गुप्तकर्मैककाम-
धुक् ॥ ६३ ॥ तन्निश्चयं परिज्ञाय । तदा प्राज्ञः स मंत्रिराट् ॥ आसाद्य वसतिं सद्य—स्तत्सर्वं गुरु-
वे जगौ ॥ ६४ ॥ विद्यानिधिः प्रभुः प्रोचे । पर्याप्तं मृत्युवार्तया ॥ समानय पयः शुद्धं । परिजप्य
ददे यथा ॥ ६५ ॥ तत्संस्पर्शनमात्रेण । कुष्ठव्याधिर्नृपांगतः ॥ रविप्रकाशलेशेन । विष्टपाद् ध्वांत-
वन्नमी ॥ ६६ ॥ श्रुत्वा तत्तेन हृष्टेन । तत्क्षणादाहृतं पयः ॥ मंत्रिणे सूरिर्मंत्रेण—भिमंत्र्य स्वय-
मार्पयत् ॥ ६७ ॥ पीयूषस्येव दायादं । तदादाय स यत्नतः ॥ प्रभुप्रेषितमस्त्येत—दित्युवाच नृपा-
ग्रतः ॥ ६८ ॥ तेन मिष्टरसेनेव । देहमभ्यज्य सोऽन्वितः ॥ निनाय लोहवत्तस्य । वर्णनीयां सुव-
र्णतां ॥ ६९ ॥ पूर्वतोऽप्यधिकं प्रेक्ष्य । वपुस्तज्ज्वलयोगतः ॥ हर्षाश्चर्यादिभावानां । पदमासादय-
न्नृपः ॥ ७० ॥ अमात्यमिदमूचे च । कटरे प्राभवं प्रभोः ॥ ईदृक्षमपि यः कष्टं । धन्वंतरिरिवाहृ-

॥ ३८ ॥ अस्मद्दैवतसूर्यादि—स्तुत्या कुष्टादयो रुजः ॥ प्रलीयंतेतमामर्हं—त्सेवया तूच्छसंति नाः
॥ ३९ ॥ तान् विसृज्य नृपेणोक्तं । मंत्रिणे धर्मलाघवात् ॥ अहं गत्वा बहिर्वह्नौ । तृणयिष्यामि
जीवितं ॥ ४० ॥ जगादोदयनः स्वामिन् । केयं मृत्युकथा वृथा ॥ देवी प्रसाद्यतां सद्यः । सर्वं द-
त्वा तदीप्सितं ॥ ४१ ॥ जतूनां व्योमवत्स्थानं । प्राणानां वपुरुच्यते ॥ तस्मिन्नश्यति दक्षोऽपि ।
नियमं कोऽत्रिकांक्षति ॥ ४२ ॥ सर्वत्र संयमं रक्षे—त्तस्मादात्मानमेव च ॥ सति स्वास्थ्ये पुनर्वि-
द्वान् । प्रायश्चित्तं समाचरेत् ॥ ४३ ॥ इति सर्वज्ञवाक्येन । संप्राप्ते प्राणसंकटे ॥ चारित्रिणोऽपि
चारित्रं । हित्वात्मानमवंति हि ॥ ५४ ॥ नियमोऽपि तवास्त्येष । षडाकारयुतः खलु ॥ स हिंसया-
पि नो याति । दैवतादेशकृत्सया ॥ ५५ ॥ त्वयि जीवति धात्रीयं । राजन्वती भविष्यति ॥ नंदिष्यं
ति जनास्तस्मा—द्रक्षात्मानं यथातथा ॥ ५६ ॥ राजर्षिस्तं पुनः प्रोचे । किमेतत्सचिवोच्यते ॥
कुर्वे जीववधं नाहं । कल्पांतेऽपि कथंचन ॥ ५७ ॥ हिंसाकलंकितो देहो—ऽनंतसंसारकारकः ॥
इदं च सर्ववित्प्रोक्तं । मुक्तिकारि कृपाव्रतं ॥ ५८ ॥ यदीदृशेन देहेन । पुण्यमुर्जितमर्ज्यते ॥ दृ-
षत्खंडेन तद्भूरि । कांचनं परिगृह्यते ॥ ५९ ॥

सर्वतश्चपलो वायु—र्जीवितव्यं तदात्मकं ॥ तत्तस्य चपलस्यार्थे । कथं मुंचे स्थिरां कृपां ॥
॥ ६० ॥ किंच व्रजति पापीयान् । कालधर्मान्न पुण्यवान् ॥ संचितोच्चणपुण्यस्य । कीदृशं मम त
द्भयं ॥ ६१ ॥ आराधितो जिनो देवो । हेमसूरिर्गुरुर्नतः ॥ निर्मितश्च दयाधर्मो । न्यूनमत्रापि किं
मम ॥ ६२ ॥ तत्त्वरस्व कुरुष्व त्वं । चितां दारुवरांचितां ॥ गमिष्यति न चेद्रात्रि—र्गुप्तकर्मैककाम
धुक् ॥ ६३ ॥ तन्निश्चयं परिज्ञाय । तदा प्राज्ञः स मंत्रिराट् ॥ आसाद्य वसतिं सद्य—स्तत्सर्वं गुर
वे जगौ ॥ ६४ ॥ विद्यानिधिः प्रभुः प्रोचे । पर्याप्तं मृत्युवार्तया ॥ समानय पयः शुद्धं । परिजाप्य
ददे यथा ॥ ६५ ॥ तत्संस्पर्शनमात्रेण । कुष्ठव्याधिर्नृपांगतः ॥ रविप्रकाशलेशेन । विष्टपाद्ध्वांत
वन्नमी ॥ ६६ ॥ श्रुत्वा तत्तेन हृष्टेन । तत्क्षणादाहृतं पयः ॥ मंत्रिणे सूरिर्मंत्रेणा—भिमंत्र्य स्वय
मार्पयत् ॥ ६७ ॥ पीयूषस्येव दायादं । तदादाय स यत्नतः ॥ प्रभुप्रेषितमस्त्येत—दित्युवाच नृपा
ग्रतः ॥ ६७ ॥ तेन सिक्तरसेनेव । देहमभ्यज्य सोऽन्वितः ॥ निनाय लोहवत्तस्य । वर्णनीयां सुव
र्णतां ॥ ६८ ॥ पूर्वतोऽप्यधिकं प्रेक्ष्य । वपुस्तज्जलयोगतः ॥ हर्षाश्चर्यादिभावानां । पदमासादय
न्नृपः ॥ ६९ ॥ अमात्यमिदमूचे च । कटरे प्राभवं प्रभोः ॥ ईदृक्षमपि यः कष्टं । धन्वंतरिरिवाहृ

रत् ॥ ७० ॥ देवीनामपि कोपाग्नि—स्तावदेव ज्वलत्ययं ॥ गुरुर्न वीक्षते यावद् । दृष्ट्या मेघायमानया ॥ ७१ ॥ अहो लोकोत्तरा काचि—त्प्रभोर्मयि कृपालुता ॥ ययाहं मृत्युतो मुक्तो । व्याघ्राद् वृक इवानिशं ॥ ७२ ॥

एवमुर्वीपतौ गुर्वी । कुर्वाणे गौरवीं स्तुतिं ॥ दुःक्षपापि क्षपा प्राप । पापश्रेणिरिव क्षयं ॥७३॥ प्राभातिकीं क्रियां कृत्वा । नृपो मंत्र्यादिभिर्वृतः ॥ वंदित्वा चरणद्वंद्वं । मुदितो गुरुमूचिवान् ॥७४॥ त्वत्प्रतापं कियत् स्तौमि । भगवन् जिह्वयैकया ॥ योऽगस्त्य इव कष्टाब्धिं । मम पेपीयते मुहुः ॥७६॥ त्वत्प्राच्योपक्रियाणाम—प्यासीत्कोऽपि न निष्क्रयः ॥ अद्यतन्याः पुनस्तस्याः । कतमोऽस्तु स वस्तुतः ॥ ७७ ॥ सीमा सर्वोपकारेषु । यत्प्राणपरिरक्षणं ॥ चूलेव तस्योपर्येषा । यन्मे सद्धर्मबोधनं ॥ ७८ ॥ प्रक्षाल्याक्षतशीतरश्मिसुधया गोशीर्षगाढद्रवै—र्लिप्त्वा सौरभसारभासुरसुमैः संपूजयित्वा सदा ॥ त्वत्पादौ यदि वावहामि शिरसा त्वत्कर्तृकोपक्रिया—प्राग्भारात्तदपि श्रयामि भगवान्नापर्णतां कर्हिचित ॥ ७९ ॥ तत्कृतज्ञतया प्रीत—स्तंप्रति प्रभुरभ्यधात् ॥ का नामोपक्रिया चक्रे । मया यत्त्वं वदस्यदः ॥ ८० ॥ अत्येषि व्यसनं यत्त्वं । तत्तु त्वत्पुण्यवैभवं ॥ ध्वांतं निहंति यद्दीप—स्त-

त्वामन्तर्हि वल्गितं ॥ ८१ ॥ पुण्यप्रद्योतनो यस्य । पार्श्वे प्रद्योततेऽनिशं ॥ नेदीयसी हि किं त
स्य । स्फुरत्यापत्तमस्विनी ॥ ८२ ॥ अमारिमस्मद्वाक्येन । सर्वतः कुर्वता त्वया ॥ अस्मदुपक्रियाणां
हि । चक्रे को नैव निःक्रयः ॥ ८३ ॥ दक्षा नयज्ञाः सधनाः । शूराश्च कति नासते ॥ आर्त्ताः प
रार्त्तिनिर्घ्ने तु । विरलाः कुत्रापि ते नराः ॥ ८४ ॥ अस्मिन् शुभंगिले काले । प्राणिनां प्राणरक्षणं
॥ कुर्वतेह त्वया नृप । भूरि पुण्यमुपार्जितं ॥ ८५ ॥ विश्राणनस्य दारिद्र्यं । विक्रमस्य महाहवः ॥
व्रतस्य प्राणसंदेहः । परीक्षाकषपट्टकः ॥ ८६ ॥ त्वमीदृशापि कष्टेन । न भ्रष्टः स्वव्रतात्ततः ॥ पर
मार्हतनिविरुदं । तुभ्यं यच्छाम्यहं मुदा ॥ ८७ ॥ ततस्तद्विरुदं प्राप्य । दुःप्रापं त्रिदशैरपि ॥ कृतार्थं
मन्यमानः स्वं । धर्मात्मा सौधमासदत् ॥ ८८ ॥ तदा च काशीविषये । वाणारस्यां महीश्वरः ॥ ज
यंतचंद्रनामास्ति । पूर्णिमाचंद्रकांतिरुक् ॥ ८९ ॥ यत्प्रतापतपनातितापितः । शंकरः सुरधुनीं शिर
स्यधात ॥ नीरधौ निविशतेस्म केशवः । पंकजासनमशिश्रियद्विधिः ॥ ९० ॥ स सप्तयोजनशत–
प्रमितक्षितिनाथनां ॥ वहन्नन्यान्महीनाथान् । मेने स्वान् किंकरानिव ॥ ९१ ॥ अनेकमत्तहस्त्य
श्व—रथपत्तिमयं बलं ॥ तस्य प्रेक्ष्य जनो वव्रे । चक्रभृत्कटकभ्रमं ॥ ९२ ॥ मीनाशनतया तस्य ।

स्थाने हिंसां महीयसीं ॥ श्रुत्वा तद्वारणाहेतो । राजर्षिर्ध्यातवान् धियं ॥ ७४ ॥ ततश्च चित्रयित्वो- च्चै—श्चारुभिः कारुभिः पटे ॥ मूर्तिं श्रीहेमसूरीयां । तत्पुरःस्थां निजामपि ॥ ७५ ॥ तं पटं हेम कोट्यौ द्वे । द्वौ सहस्रौ हयोत्तमान् ॥ दत्वा च शिक्षयित्वा च । काशीं प्रैषीत् स्वमंत्रिणः ॥ ७६ ॥ युग्मं ॥ तां समासाद्य ते दध्यु—रियं मुक्तिपुरी श्रुता ॥ एतदीया जनास्त्वेते । सर्वेऽपि पललाशनाः ॥ ७७ ॥ समुद्रस्य श्रवंत्याश्च । तटाधिष्ठायके पुरे ॥ प्रायो मत्स्याशनत्वेन । लोको भवति निःकृपः ॥ ७८ ॥ पुरेऽत्राबालगोपालं । करुणाप्रतिपालनं ॥ दुःकरं ज्ञाति दुर्वाते । दीपोद्दीपनवद् ध्रुवं ॥ ७९ ॥ ततः प्रकृतयो ह्यस्य । नृपस्य सकला अपि ॥ यथाकामितहेमादि—दानैस्तोष्याः प्रयत्नतः ॥ १०० ॥ यथा विज्ञप्तिमास्माकीं । ते न घ्नंति नृपाग्रतः ॥ बुद्ध्येति सचिवाश्चक्र—स्तथैव निजकौशलात् ॥ १ ॥

जयंतचंद्रं दृष्ट्वा च । तत्पुरस्ते न्यवीविशन् ॥ हेमादिप्राभृतं सर्वं । पश्चाच्चित्रपटं च तं ॥ २ ॥ पृष्ट्वा चौलुक्यनृपस्य । काशीशः कुशलादिकं ॥ कृत्वा च तं पटं हस्ते । किमेतदिति पृष्टवान् ॥ ३ ॥ अवोचन् सचिवाः स्वामि—न्नस्ति राजगुरोरियं ॥ मूर्तिः श्रीहेमसूरींदो—रियं चास्मन्महीशितुः ॥

॥ ४ ॥ अनन्तत्योपदीकृत्य । स्वं स्वतोऽप्यधिकामिमां ॥ गुरुमूर्तिं च चौलुक्य—नृपो विज्ञपयन्नदः
॥ ५ ॥ हेमाचार्यो गुरुर्मेऽस्ति । सर्वविद्याब्धिपारगः ॥ ज्ञानवानिव नित्यं यो । नृवि बोधयते ज-
नं ॥ ६ ॥ आकलय्य गुरोस्तस्मा—ज्ज्ञानधर्मं कृपामयं ॥ स्वदेशे परदेशे च । हिंसां वारयति नृ-
पः ॥ ७ ॥ त्वत्पुरे श्रुता सोच्चै—र्मार्गदेष्ट्रीव दुर्गतेः ॥ ततो वयं प्रहिताः स्म । तन्निषेधाय धी-
मता. ॥ ८ ॥ अंतर्दृष्ट्या विमृश्योच्चैः । करुणां पुण्यकारणं ॥ सर्वथा जीवहिंसां तां । दुर्नीतमिव
दूरय ॥ ९ ॥ इति मंत्रिगिरा चित्र—कारिचित्रकयापि च ॥ तुष्टो जयंतचंद्रो राट् । सदःप्रत्यक्ष-
माख्यत ॥ १० ॥ युक्तं गूर्जरदेशोऽयं । विवेकेन बृहस्पतिः ॥ कथ्यते सकलैर्यस्मि—न्नीदृग्नृप-
कृपामयः ॥ ११ ॥ क्रियानुपायः कृतोऽस्ति । जीवरक्षाप्रवर्तने ॥ तमेव धन्यं मन्येऽहं । पुण्ये यस्यो-
द्यतं मनः ॥ १२ ॥ स स्वयं कारयन्नस्ति । कृपां तत्प्रेरितोऽप्यहं ॥ न कारयेयं यद्येनां । मतिर्मे त-
र्हि कीदृशी ॥ १३ ॥ चतुर्भिः कलापकं ॥ ततः स नृपतिर्देशा—त्पुराच्चानाय्य सर्वतः ॥ जालका-
नि च मत्स्यानां । सहस्राशीतिसंख्यया ॥ १४ ॥ अन्यान्यपि च हिंस्रोप—करणानि सहस्रशः ॥
चौलुक्यसचिवाध्यक्षं । वह्निदानादजीज्वलत् ॥ १५ ॥ हिंसा दग्धेति पटहे—रुद्घोष्य परितः पुरे

॥ आदिकजालिकादीनां । जालादेरपुनःकृतिं ॥ १६ ॥ चौलुक्यदत्ताद् द्विगुणं । दत्वा प्राभृतमद्-
भुतं ॥ काशीशेन विसृष्टास्ते—ऽमात्याः स्वपुरमागमन् ॥ १७ ॥

नत्वा च हेमाचार्याग्र—स्थितं चौलुक्यनायकं ॥ उपदादानपूर्वं त—त्सर्वं वृतं न्यवेदयन् ॥
॥ १८ ॥ तेनाद्भुतेन कृत्येन । नृपतेर्हर्षिणो गुरुः ॥ उपश्लोकयतिस्मैवं । धर्मोत्साहविधित्सया ॥
॥ १९ ॥ भूयांसो भरतादयः क्षितिधवास्ते धार्मिका जज्ञिरे । नो भूतो भविता भवत्यपि च न
चौलुक्य कल्पस्तव ॥ शक्त्या कापि धिया क्वचिद् घनधनस्वर्णादिदत्त्या क्वचि—द्देशे स्वस्य परस्य
च प्रकृतवान् जीवावनं यद्भवान् ॥ २० ॥ ततश्चौलुक्यमालोक्य । करुणारसलालसं ॥ असूयामासु-
षी हिंसा । सपत्नीव स्वचेतसि ॥ २१ ॥ नृपस्य हृदये गेहे । पुरे जनपदे भुवि ॥ क्वाप्यनाप्नुवती
वासं । तातमोहांतिकं ययौ ॥ २२ ॥ तदा सभास्थितो मोह—महींद्रः स्वसुतामितां ॥ अलक्षयन्
विलक्षत्व—योगादित्यनुयुक्तवान् ॥ २३ ॥ का त्वं सुंदरि मारिरस्मि तनया ते तात मोहप्रिया ।
किं दीनेव पराभवेन स कुतः किं कथ्यतां कथ्यतां ॥ हेमाचार्यगिरा दयैकरसिको हृद्वक्रहस्तोदरा-
न्मां निष्कास्य कुमारपालनृपतिः पृथ्वीतलादाकृषत् ॥ २४ ॥ तन्निशम्य ज्वलत्कोप—विदग्धोऽथ स

तामवक् ॥ वत्सेऽत्र मास्मरोदीस्त्वं । रोदयिष्यामि ते द्विषः ॥ २५ ॥ संप्रत्यसौ नृपो वाक्यै—र्विप्रतारकलिंगिनां ॥ विरक्तस्त्वय्यनृद्धर्मे—स्तेन त्वां निरवासयत ॥ २६ ॥ मामपि मन्यते नैष । हेमाचार्यप्रतारकः ॥ क्रमात स्वशक्त्या संदेहे । पातयिष्ये शनैरमुं ॥ २७ ॥ अतः परं करिष्यामि । नं कंचन वरं तव ॥ यत्त्वदेकातपत्रत्वं । पूर्ववत्सुलयिष्यति ॥ २८ ॥ इत्यादिवचसाश्वास्य । कथंचिन्निजनंदिनीं ॥ हिंसामस्थापयत्स्वीय—पार्श्वे मोहमहीपतिः ॥ २९ ॥ इत्युद्दामदयासुधारसभरैर्जीवान् समुज्जीवयं—स्तज्जाशीर्वचनैरिव प्रतिदिनं सर्वर्द्धिनिर्वर्धयन् ॥ हेमाचार्यशुभोपदेशविलसत्तत्वप्रकाशोदयः । प्राणित्राणपरायणैकमुकुटश्चौलुक्यचंद्रोऽजनि ॥ ३० ॥ इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालचरित्रे महाकाव्ये श्राद्धधर्मस्थापनो नाम सप्तमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथाष्टमः सर्गः प्रारभ्यते ॥

चौलुक्यनृपवोऽन्येद्यु—र्हेमसूरिसमाग्रतः ॥ खेलंतीं कांचनोत्कृष्टां । कनीं दृष्ट्वा विस्मितवान् ॥

॥ १ ॥ मृदिमनिचितमूर्तिः स्फूर्तिमुच्चैर्वहंती । जगदपि मदयंति स्नेहसांडस्वभावः ॥ गुणगरिमनिधानं दूषणानामभूमिः । स्फुरति रतिकरी मे देवकन्येव केयं ॥ २ ॥ तत्पुण्यमपि मन्येऽहं । नृणामत्यंतदुर्लभं ॥ येनैषा दृश्यते दृग्भ्यां । स्वछंदानंदकंदली ॥ ३ ॥ ततः पप्रछ पृथ्वींद्रः । सूरींद्रं प्रणिगद्यतां ॥ द्वारि केयं कनी कस्मात । प्रीणाति च मदाशयं ॥ ४ ॥ रागातिशयमालोक्य । नरेंद्रस्य कनींप्रति ॥ हेमाचार्यस्तदुत्पत्तिं । मूलाद्वक्तुं प्रचक्रमे ॥ ५ ॥ आस्ते विमलचित्ताख्यं । पुरं सद्गुणमंदिरं ॥ यत्रोच्चैर्विनयः शालो । मर्यादा परिखापि च ॥ ६ ॥ तत्रार्हद्धर्मनामास्ति । महीशो यस्य शासनं ॥ सुरासुरनरेंद्राणां । मौलौ माल्यमिव स्थितं ॥ ७ ॥ स्वसेवारसिकं लोकं । लोकोत्तरसुखार्पणात् ॥ सुस्वामीति प्रसिद्धिं यो । लोकेषु कलयत्यलं ॥ ८ ॥ तस्यास्ति विरतिः पत्नी । निर्दोषत्वैकमंदिरं ॥ ख्याताः सौम्यतया विश्वे । शमाद्याश्च तनूरुहाः ॥ ९ ॥ मंत्री धर्मनरेंद्रस्य । । सिद्धांतः शुद्धबुद्धिदः ॥ कदापि नैव भेत्तुं यः । शक्यो हि दुर्नयैः परैः ॥ १० ॥ शुभध्यानं च सेनानी—र्विपक्षक्षोददीक्षितः ॥ सम्यक्त्वप्रमुखाः सैन्याः । सद्यः सिद्धिविधायिनः ॥ ११ ॥ विश्वं निवेश्य स्वाज्ञायां । सुखं धर्मे च तिष्ठति ॥ विरत्यां तनया प्रौढि—कारणं करुणाभवत् ॥ १२ ॥

तौ पुत्रीजन्मना वीक्ष्य । पितरौ खेदमेदुरौ ॥ सुतापितामहोऽवादीद् । विश्ववेदी जिनेश्वरः ॥ १३ ॥
सुता जातेति किं खेदं । वहेथे हृदये युवां ॥ इयं पुत्रादपि स्तुत्या । जनित्री विश्वजीवनात् ॥१४॥
पुत्रार्थे खिद्यते लोको । वृथा यत्तपनानलौ ॥ स्वपुत्रमंदधुमान्यां । तापं नाद्यापि मुंचतः ॥ १५ ॥
यथा ब्राह्मी निजं तातं । लोकंपृणादिभिर्गुणैः ॥ ख्यातिं नीतवती नेत्री । तथैवेयं युवामपि ॥
॥ १६ ॥ नविष्यति च यत्पाणि—गृहितीयं तमप्यलं ॥ प्रतिष्ठां नेष्यति श्रेष्ठां । कमलेव सुरद्विषं
॥ १७ ॥ निशम्य तादृशीं स्फूर्तिं । पितृभ्यां वर्धिता कृपा ॥ कला चांद्रीव तच्चित्त—प्रमोदाब्धिम·
वीवृधत ॥ १८ ॥
इत. ममलचित्ताख्यं । पुरमस्ति यदंतिके ॥ शालोऽस्ति दुर्नयो दुष्ट—सेवा च परिखान्वितः
॥ १९ ॥ तस्मिन् मोहमहींद्रोऽस्ति । दुराशयशिरोमणिः ॥ यमस्येव भयात्तस्य । कंपते सकलं ज
गत् ॥ २० ॥ तस्याविरतिलोलाक्षी—कुक्षिजा विश्वदुर्जयाः ॥ नंदनाः संति कोपाद्या । हिंसाना·
म्नी च कन्यका ॥ २१ ॥ तस्य मिथ्याश्रुतं मंत्री । दुर्ध्यानं दंडनायकः ॥ मिथ्यात्वाद्याश्च दुर्वार—
वीर्याः स्फूर्जंति सैनिकाः ॥ २२ ॥ मत्तेन मोहनृपेन । वर्षीयस्त्वात्स धर्मराट् ॥ विजित्य मकुटंचोऽ·

पि । स्वस्थानान्निरकाश्यत ॥ २३ ॥ भ्राम्यन्नितस्ततो धर्मः । सोऽत्र दृष्ट्वा तवोदयं ॥ अस्मदाश्रममाश्रित्य । सुखं वसति संप्रति ॥ २४ ॥ सा कृपा नंदिनी चास्य । योग्यपत्यनवासितः ॥ अनूढैव स्थिता देव । दृष्टा द्वारि त्वयाधुना ॥ २५ ॥ अस्याः सौंदर्यसंपत्तिः । स्तूयते किमतःपरं ॥ यया मोहनवल्ल्येव । महात्मानोऽपि मोहिताः ॥ २६ ॥ लभते योग्यवानेव । प्रियां कर्तुमिमां कृपां ॥ स्वसात्करोति सामान्यः । कल्पवल्लीं कदापि किं ॥ २७ ॥ एवं निशम्य निःसीमां । तस्याः प्रौढिं गुरोर्मुखात् ॥ अन्वरज्यतमां राजा । कः सद्वस्तुनि निःस्पृहः ॥ २८ ॥ सोऽथ तद्विरहव्याप्ति—व्याकुलः करुणांप्रति ॥ प्राहिणोत्सुमतिं नाम । दूतीं तत्प्रार्थनाकृते ॥ २९ ॥ तस्याः समीपमागत्य । दूती विरचितांजलिः ॥ सप्रगल्भमिदं प्रोचे । शर्करासेकिमं वचः ॥ ३० ॥ चौलुक्यकुलपाथोधि—कौस्तुभोऽस्त्यत्र पत्तने ॥ श्रीमान् कुमारपालाख्यो । गूर्जरक्षितिवल्लभः ॥ ३१ ॥ एकोऽपि यः क्षितिं भ्रांत्वा । कलावानवनीपतिः ॥ कलाकलापमासाद्य । पूर्णेंदुरिव दीप्यते ॥ ३२ ॥ इयं गूर्जरराज्यश्री—र्वशीभूतेव सद्गुणैः ॥ स्वयमेव समागत्य । समालिंग्य स्थितास्ति यं ॥ ३३ ॥ येन दिग्विजये रेमे । दोष्मतारिविभेदिना ॥ वश्यतारोपितैर्भूपैः । शारैरिव दुरोदरे ॥ ३४ ॥ सम्यक्त्वं ह

दये विव्रन् । य. कारुण्यैकनीरधीः ॥ जेगीयतेऽत्र परमा—र्हत इत्यनिशं वुधैः ॥ ३५ ॥ विवेक·
शीलविद्याद्यै—र्गुणैर्वीरशिरोमणिः ॥ पाणिग्रहार्थमत्यर्थं । त्वां नृपोऽर्थयतेऽत्र सः ॥ ३६ ॥ तद्वदे
परिणीयामु । राजानं विश्वरंजनं ॥ रमताव्याहतस्वेच्छं । कौमुदीवत्त्वमुन्मदा ॥ ३७ ॥ नक्रस्य वक्री
करणा—त्स्वीयारोचकतामथ ॥ प्रकाशयंती चौलुक्ये । करुणा प्राह तांप्रति ॥ ३८ ॥ स्तुत्वा नृप·
मिमं त्वं मां । विप्रलंभयसे किमु ॥ न हि स्त्रीणां महीशेन । विवाहः स्यात्सुखावहः ॥ ३९ ॥
परिणीय वहुस्त्रीषु । रतः प्रायेण कामिनीं ॥ न पश्यति पुनः पूर्व—भववैरीव नृपतिः ॥ ४० ॥ कु·
मार्येव वरं नारी । वरं श्रामण्यशालिनी ॥ न पुनर्वहुसापत्न्य—दुःखिता नृपतेः प्रिया ॥ ४१ ॥ म·
द्वीपमेव मे कामं । कामयेन्मे मनस्तदा ॥ कुतः मुंचामि शक्रादीं—स्त्रैलोक्यप्रकटश्रियः ॥ ४२ ॥
तन्मे पतिः स एव स्या—द्यः सत्यादिगुणाकरः ॥ सर्वथा जीवहिंसां च । व्यसनानि च वर्जयेत्
॥ ४३ ॥ ततः पल्लवितप्रायां । नृपाशां विदुषी हृदि ॥ अन्यथत्त पुनर्दूती । तांप्रति प्रीतिधारिणी ॥
॥ ४४ ॥ भद्रे सिद्धमिदं कार्यं । यदसौ नरनायकः ॥ नवैवास्त्युचितः प्रेयां—स्त्वदुक्तगुणयोगतः
॥ ४५ ॥ किंचाजन्मभयं त्यक्त्वा । त्वत्प्रीत्यर्थमिव ध्रुवं ॥ स्वदेशे परदेशे च । हिंसादिकमवारयत

द्नृपः । कदाचन मुमोच न ॥ ६७ ॥ अतिप्रीतं प्रियं मत्वा—त्रिदधे धर्मनंदिनी ॥ मोहं जित्वा
पुनः स्वामिन् । स्थाप्यतां जनको मम ॥ ६८ ॥ विमृश्य धर्मनृपेन । समं तत्क्षणमेव सः ॥ स-
द्ध्यानसेनानाथेन । तत्सैन्यान्निरवासयत् ॥ ६९ ॥ भगिनीपतिसाहाय्या—त्क्षमाद्या धर्मनंदनाः ॥
प्रगल्भ्यांचक्रिरे ग्रीष्म—योगादर्ककरा इव ॥ ७० ॥ समताछत्रभृन्न्याय—सदाचारोरुचामरः ॥ स
त्यसन्नाहसम्यग्ज्ञान—तपःप्रभृतिकायुधः ॥ ७१ ॥ विपक्षक्षेपसापेक्ष—शमाद्युरुपरिच्छदः ॥ अध्यासा-
मासिवान् धर्म—नृभृदास्तिक्यसिंधुरं ॥ ७२ ॥ युग्मं ॥
अथ योगेन गुप्तांगो । जिनाज्ञाकृतशीर्षकः ॥ सत्वकौक्षेयकः शुद्ध—ब्रह्मास्त्रविलसद्द्युतिः ॥
॥ ७३ ॥ विवेकोहंमकोदंडो । मूलोत्तरगुणाशुगः ॥ भावनाद्भुतशस्त्रीको । माध्यस्थ्यवरकुंतभृत् ॥
॥ ७४ ॥ गुरुक्रमशिखाबंधो । दत्ताशीः सर्वसाधुभिः ॥ वैराग्यगजमारुढ—न्नृपो देहीव विक्रमः ॥
॥ ७५ ॥ त्रिभिर्विशेषकं ॥ सद्दिने धर्मनाथेन । ससैन्येन समन्वितः ॥ मोहराजं पराजेतुं । प्रत-
स्थे मनसाथ सः ॥ ७६ ॥ मार्दवार्जवसौम्यत्व—विनयाभिग्रहादयः ॥ बिभरांचक्रिरे तस्य । तदा
नासीरवीरतां ॥ ७७ ॥ स्थित्वा मोहपुरासन्ने । क्वापि तंप्रति नृपतिः ॥ ज्ञानादर्शाह्वयं दूतं । निस-

क्षार्थं विमृष्टवान् ॥ ७८ ॥ स राजद्वारमापन्नो । दुर्ज्ञानाख्येन वेत्रिणा ॥ पुरस्कृत्य स्वयं नीतो । मो-
हपृथ्वींद्रपर्षदं ॥ ७९ ॥ तत्रोग्रक्रामदुर्धर्षं । प्रासमायादिवैनतं ॥ दुरतोऽपि दुरालोकं । दुष्टहृग्विप
मर्पवत् ॥ ८० ॥ जगज्ज्ञानजयोन्मत्तैः । क्रोधाद्यैस्तनुजैर्वृतं ॥ क्रोधमिथ्यात्वलोभाद्यै—श्चेटोत्तंसत्र-
जैर्युतं ॥ ८१ ॥ मनसाप्यपराजय्यं । परिवासमिवांगिनं ॥ मोहराजं महाराजं । ज्ञानादर्शो ददर्श
सः ॥ ८२ ॥ त्रिचि.विशेषकं ॥ ततोऽदृश्यं निरीक्ष्यापि । तं नयभ्रांतमानसः ॥ दूतो निजोचितं
वाक्यं । जगादैवं तदग्रतः ॥ ८३ ॥ रे मोह त्वं ससैन्योऽपि । पुरा येन व्यजीयथाः ॥ तस्य श्री
हेमसूरींदोः । पादपद्मैकपट्पदः ॥ ८४ ॥ पराजिगीषमाणस्त्वां । संप्राप्तस्त्वत्पुरांतिकं ॥ क्ष्मापः कुमा-
रपालोऽयं । प्रहिणोन्निस्म मामिह ॥ ८५ ॥ युग्मं ॥ विश्वमाक्रममाणेन । त्वया चात्युन्मदिष्णुना
॥ निष्काशितो निजस्थाना—द्धर्मनामा महीपतिः ॥ ८६ ॥ आश्रमं हेमसूरीयं । संश्रितस्तद्गिरा
सुतां ॥ निजां कृपाख्यां चौलुक्य—क्ष्मभृता पर्यणाययत् ॥ ८७ ॥ अभिषेक्तुं पुना राज्ये । श्वशुरं
स कृतज्ञधीः ॥ व्यवस्यति सतामेवं । रीतिर्हि प्रीतिवृद्धये ॥ ८८ ॥ ससैन्यो धर्मनाथोऽपि । तत्पा-
र्श्वे वर्तते जयी ॥ तदागत्य तदाज्ञां त्वं । शीर्षे शेषात्वमापय ॥ ८९ ॥ अन्यथा खलु चौलुक्य—

॥ ४६ ॥ तं मत्वा स्वोचितं ह्रीणा । हृष्टा च करुणावदत् ॥ एतत्किंचिन्न जानेऽहं । तातो जानाति मेऽखिलं ॥ ४७ ॥

ततो निवृत्य दूत्यास्मिन् । वृत्तांते गदिते सति ॥ प्राप्तस्वर्ग इव स्वांते । गूर्जरेंद्रो मुदं ययौ ॥ ४८ ॥ तेनाथ ज्ञापितस्तस्या—स्तद्वृत्तं हेमसूरिराट् ॥ प्रबोध्य धर्मधात्रींद्रं । कृपां तस्मै व्यतीतरत ॥ ४९ ॥ अथ लग्ने शुभे भाव—वारिणा विहितप्लवः ॥ अभिग्रहकृतानल्प—कल्पः सत्कीर्तिचंदनः ॥ ५१ ॥ सदाचारमयछत्रो । हृदि सम्यक्त्वरत्नभृत् ॥ दानकंकणरोचिष्णु—स्संवेगगजमाश्रितः ॥ ५२ ॥ व्रतभंगकभूयिष्ट—जन्यलोकपुरस्कृतः ॥ भावनादुद्भुतनारीभिः । कृतोरुधवलध्वनिः ॥ ५३ ॥ क्षमाभगिन्या प्रारब्ध—लवणोत्तारणक्रियः ॥ निर्गत्य भूपतिर्गेहा—त्पौषधागारमागमत् ॥ ५४ ॥ चतुर्भिः कलापकं ॥ आगत्य विरतिश्वश्रा । कृतमांगलिकस्थितिः ॥ शमाद्यगुणवर्यैर्युक्तः । सोऽविशद्धर्ममंडपं ॥ ५५ ॥ स्नातां मार्दवनीरेण । शीलश्रीवरचीवरां ॥ सत्यकंचुकशृंगारां । ध्यानद्वितयकुंडलां ॥ ५६ ॥ स्फुरन्नवपदीहारां । तपोभेदोरुमुद्रिकां ॥ आनाययत्स्वतनयां । तत्र श्रीधर्मभूपतिः ॥ ५६ ॥ युग्मं ॥ ततोऽर्हद्देवताध्यक्षं । करुणापाणिपंकजं ॥ ललौ चौलुक्यभूपालो । नि

मेर्यादिमुदंबुधिः ॥ ५७ ॥
कृपया पाणिपद्मेन । स्पृश्यमानं निजं करं ॥ दृष्ट्वा तं मानयन् धन्य—मेवमूचे नृपो हृदा ॥
॥ ५८ ॥ पाणे त्यक्तान्यकृत्येन । यदपूजि जिनस्त्वया ॥ तत्प्रभावाद्वधूवास्याः । कराश्लेषस्तव ध्रुवं
॥ ५९ ॥ अनीपल्लवमन्येन । धर्मपुत्रीकरांबुजं ॥ आसाद्य दक्षिणत्वं स्वं । त्वया द्वेधापि दर्शितं
॥ ६० ॥ श्रुतोदितश्राद्धगुण—प्रशस्यकलशावलिं ॥ कृत्वा श्रद्धामयीं वेदीं । दानादिशुभतोरणां
॥ ६१ ॥ उद्दीप्य च प्रबोधाग्निं । तर्पितं तत्त्वसर्पिषा ॥ तं प्रदक्षिणयामास । सवधूकं नृपं गुरुः ॥
॥ ६२ ॥ युग्मं ॥ जामात्रे ददिवान् धर्मः । पाणिमोचनकर्मणि ॥ सौभाग्यारोग्यचह्वायु—र्बलसौ·
ख्यान्यनेकधा ॥ ६३ ॥ एवं महेन संवृत्ते । पाणिग्रहणमंगले ॥ प्रणेमिवांसं राजानं । गुरुराजोऽ·
न्वशादिति ॥ ६४ ॥ या प्रापे न पुरा निरीक्षितुमपि श्रीश्रेणिकाद्यैर्नृपैः । कन्यां तां परिणायितोऽ·
सि नृपते त्वं धर्मभूमीशितुः ॥ अस्यां प्रेममहद्विधेयमनिशं खंड्यं च नैतद्वचो । यस्मादेतदुरुप्रसं·
गवशतो भावी भृशं निर्वृतः ॥ ६५ ॥ ततः स्वसदनं प्राप्य । तदैव धरणीधवः ॥ विधिना करुणा·
देव्याः । पट्टबंधविधिं व्यधात ॥ ६६ ॥ सर्वोत्कृष्टैर्गुणैर्दृष्ट्वा । तां चेतःप्रीतिकारिणीं ॥ निजप्रकृतिव·

द्भूपः । कदाचन मुमोच न ॥ ६७ ॥ अतिप्रीतं प्रियं मत्वा—न्निदधे धर्मनंदिनी ॥ मोहं जित्वा पुनः स्वामिन् । स्थाप्यतां जनको मम ॥ ६८ ॥ विमृश्य धर्मभूपेन । समं तत्क्षणमेव सः ॥ सध्यानसेनानाथेन । तत्सैन्यान्निरवासयत् ॥ ६९ ॥ भगिनीपतिसाहाय्या—त्क्षमाद्या धर्मनंदनाः ॥ प्रगल्भ्यांचक्रिरे ग्रीष्म—योगादर्ककरा इव ॥ ७० ॥ समताछत्रभृन्न्याय—सदाचारोरुचामरः ॥ सत्यसन्नाहसम्यग्ज्ञान—तपःप्रभृतिकायुधः ॥ ७१ ॥ विपक्षक्षेपसापेक्ष—शमाद्युरुपरिच्छदः ॥ अध्यासामासिवान् धर्म—भूभृदास्तिक्यसिंधुरं ॥ ७२ ॥ युग्मं ॥

अथ योगेन गुप्तांगो । जिनाज्ञाकृतशीर्षकः ॥ सत्वकौक्षेयकः शुद्ध—ब्रह्मास्त्रविलसद्द्युतिः ॥ ॥ ७३ ॥ विवेकोद्दंमकोदंडो । मूलोत्तरगुणाशुगः ॥ भावनाद्भुतशस्त्रीको । माध्यस्थ्यवरकुंतभृत् ॥ ॥ ७४ ॥ गुरुक्लृप्तशिखाबंधो । दत्ताशीः सर्वसाधुभिः ॥ वैराग्यगजमारूढ—न्नृपो देहीव विक्रमः ॥ ॥ ७५ ॥ त्रिभिर्विशेषकं ॥ सद्दिने धर्मनाथेन । ससैन्येन समन्वितः ॥ मोहराजं पराजेतुं । प्रतस्थे मनसाथ सः ॥ ७६ ॥ मार्दवार्जवसौम्यत्व—विनयाभिग्रहादयः ॥ बिभरांचक्रिरे तस्य । तदानासीरवीरतां ॥ ७७ ॥ स्थित्वा मोहपुरासन्ने । क्वापि तंप्रति भूपतिः ॥ ज्ञानादर्शाह्वयं दूतं । निसृ-

र्थं विमृश्यान ॥ ७८ ॥ स राजद्वारमापन्नो । दुर्ज्ञानाख्येन वेत्रिणा ॥ पुरस्कृत्य स्वयं नीतो । मो-
हपृथ्वींद्रपर्षदं ॥ ७९ ॥ तत्रोग्रकामदुर्धर्षं । प्रासमायादिवेत्रं ॥ दूरतोऽपि दुरालोकं । दुष्टद्विप-
सर्पवत् ॥ ८० ॥ जगज्ज्ञानजयोन्मत्तैः । क्रोधाद्यैस्तनुजैर्वृतं ॥ क्रोधमिथ्यात्वलोभाद्यै—र्दुष्टोत्तमव-
र्जैर्युतं ॥ ८१ ॥ मनमाप्यपराजय्यं । परिवारमित्रांगिनं ॥ मोहराजं महाराजं । ज्ञानादर्शो ददर्श
सः ॥ ८२ ॥ त्रिभिर्विशेषकं ॥ ततोऽदृश्यं निरीक्ष्यापि । तं जयभ्रांतमानसः ॥ दूतो निजोचितं
वाक्यं । जगादैवं तदग्रतः ॥ ८३ ॥ रे मोह त्वं ससैन्योऽपि । पुरा येन व्यजीयथाः ॥ तस्य श्री
हेमसूरींद्रो- । पादपद्मैकषट्पदः ॥ ८४ ॥ पराजिगीषमाणस्त्वां । संप्राप्तस्त्वत्पुरांतिकं ॥ भूपः कुमा-
रपालोऽयं । प्रहिणोतिस्म मामिह ॥ ८५ ॥ युग्मं ॥ विश्वमाक्रममाणेन । त्वया चात्युन्मदिष्णुना
॥ निष्काशितो निजस्थाना—द्धर्मनामा महीपतिः ॥ ८६ ॥ आश्रमं हेमसूरीयं । संश्रितस्तद्गिरा
सुतां ॥ निजां कृपाख्यां चौलुक्य—प्रभुना पर्यणाययत् ॥ ८७ ॥ अभिषेक्तुं पुना राज्ये । श्वशुरं
स कृतकृधीः ॥ व्यवस्यति सतामेवं । रीतिर्हि प्रीतिवृद्धये ॥ ८८ ॥ ससैन्यो धर्मनायोऽपि । तत्पा-
र्श्वे वर्तते जयी ॥ तदागत्य तदाज्ञां त्वं । शीर्षे शेषात्वमापय ॥ ८९ ॥ अन्यथा खलु चौलुक्य—

स्त्वां ससैन्यमपि क्षणात् ॥ ध्वंसिष्यते यथा हस्ती । समूलमपि पादपं ॥ ९० ॥ श्रुत्वा तत्सा सभा भेजे । मथ्यमानाब्धितुल्यतां ॥ अधंनविष्णवः स्फूर्त्या । कोपाद्याश्चैवमूचिरे ॥ ९१ ॥ रे रे कोकूयते कोऽयं । खरवन्मुखरः पुरः ॥ हन्यतां दासवद्गाढं । गले धृत्वावकृष्यतां ॥ ९२ ॥ हंतुमुत्तिष्टमानेषु । मिथ्यात्वादिभटेष्वथ ॥ निवार्य तानवार्यश्री—र्मोहस्तं दूतमूचिवान् ॥ ९३ ॥ रे रे मयि जगज्जैत्रे । वज्रिणीवात्र दीव्यति ॥ हेमाचार्येण को मोहः । पराजिग्ये निगद्यतां ॥ ९४ ॥ संग्रामयितुकामोऽयं । चौलुक्यो यदुपागमत ॥ न वेत्ति किंत्वयं मूढो । महोर्बलमनर्गलं ॥ ९५ ॥ असौ धर्मः परं केन । मुखेन प्रासवानिह ॥ यो मया क्लीववच्चक्रे । स्थानभ्रष्टो निजौजसा ॥ ९६ ॥ वर्षीयस्त्वात्पुरा जीवन् । मुक्तोऽयं सांप्रतं मया ॥ करिष्यते रणमखे । निश्चितं प्रथमाहुतिः ॥ ९७ ॥ युक्तं धर्मोऽतिवृद्धत्वा—ज्जज्ञे मरणसंमुखः ॥ परं परार्थी त्वद्रूपः । किं मुमूर्षति मूर्खवत् ॥ ९८ ॥ हुं ज्ञातं धर्मनंदिन्या । प्रेरितोऽयं हि तत्कृते ॥ म्रियते च हहा योषि—दस्थानां कियती हि धीः ॥ ९९ ॥ मर्तव्यं मत्करेणैव—ममीभिरिति वेधसीं ॥ लिपिं स्वां सूनृतीकर्तुं । युक्तमत्रापतन्निमे ॥ ॥ १०० ॥ अहमायात एवायं । त्वत्पृष्ठे रे युयुत्सया ॥ त्वमपि तं रणोत्संगे । दर्शय स्वामिनं निजं

॥ १ ॥ ततस्तस्मिन् गते दूते । मोहो भृकुटिभीषणः ॥ सैन्यं दुर्ध्यानसेनान्या । तत्क्षणं समवर्म-
यत् ॥ २ ॥ धारयन् कवचं काये । स्फूर्जन्मात्सर्यवर्मितः ॥ परस्त्रीहादिदुष्कर्म—निशितास्त्रातिभा-
सुरः ॥ ३ ॥ नास्तिक्यद्विपमास्थाय । मोहभूपो रिपुंप्रति ॥ चचालान्यायवाचाल—कुशास्त्रसचिवा-
दियुक् ॥ ४ ॥ युग्मं ॥

स्तब्धत्वानार्जवचौर्य—विगानव्यसनादयः ॥ बहवस्तत्र वल्गंतो । ववृधुस्तत्पुरस्सराः ॥ ५ ॥
अन्वेनं प्रस्थिरे तस्य । क्रोधाद्यास्तनया घनाः ॥ मिथ्यात्वाद्याश्च योद्धारो । वैरिग्रासैकलालसाः
॥ ६ ॥ अर्वाक् चौलुक्यसेनाया । निवेश्य स्ववरूथिनीं ॥ आहूयामात्यपुत्रादीन् । व्याजहारेति
मोहराट् ॥ ७ ॥ अहो चित्रं च जीवद्भि—र्युष्माभिः किं न वीक्ष्यते ॥ पुंस्पशुः कोऽपि चौलुक्यो
। यन्मामपि जिगीषति ॥ ८ ॥ शक्रादयोऽपि यद्दासाः । सह तेन हहाधुना ॥ उत्तिष्ठते युधे म-
र्त्यः । कृत्यं दैवस्य पश्यत ॥ ९ ॥ ममेयमेव चिंतोच्चै—र्यदिमौ मत्कुजौ कथं ॥ त्रैलोक्यबलखुंटा-
कौ । नृकीटं निहनिष्यतः ॥ १० ॥ इत्यवज्ञापरं वीक्ष्य । चौलुक्येशे महीश्वरे ॥ मंत्री मिथ्याश्रुतं
नाम । नमन्नूचे समयोचितं ॥ ११ ॥ नृकीट इति देव त्वं । राजर्षिं मावजीगणः ॥ लोकान्मया श्रु-

तं कोऽपि । परात्मांश इवास्त्ययं ॥ १२ ॥ विदन्नपि तव प्रौढिं । यः सह त्वदरातिना ॥ आनिषेण-
यतिस्म त्वां । स सामान्यो भवेत्किमु ॥ १३ ॥ निर्वासितस्त्वया स्वामिन् । धर्मोऽयं च तदाश्रितः
॥ तव भूतादिमित्राणां । यच्चक्रे तत्किमुच्यते ॥ १४ ॥ गुरौ चैतस्य पृष्टस्थे । प्रतिदैव इव स्वयं ॥
अलंभूष्णुर्न देवोऽपि । किं वक्तव्यः परः पुनः ॥ १५ ॥ बलेनास्यैव धर्मोऽपि । वैरप्रतिचिकीर्षया ॥
प्राप्तोऽस्ति समये कार्यं । न साधयति कः सुधीः ॥ १६ ॥ तदयं समरारंभः । स्वामिंश्चित्योऽस्ति व
स्तुतः ॥ अमात्ये निगदत्येवं । चुकुपुर्मोहनंदनाः ॥ १७ ॥ ततः क्रोधोऽभ्यधात्केयं । भीतिः कथय
मे यथा ॥ वडवाग्निरिवाशेषं । शोषये द्विड्बलोदधिं ॥ १८ ॥ ऊचे मानोऽभिमानोग्रो । लुप्त्वा-
चारविलोचनं ॥ विश्वमप्यंधयाम्येतत् । कोऽस्त्ययं हतको नरः ॥ १९ ॥ दंभोऽवदत्ससंरंभो । देवा-
नामपि वंचके ॥ मयि तिष्ठति सैन्येऽत्र । जयः सांशयिकः किमु ॥ २० ॥ निःक्षोभः प्रोचिवान्
लोभ—स्तृष्णापूरे निमज्जयन् ॥ जगत्पयोधिवत्सर्वं । निरुध्ये विधिनापि न ॥ २१ ॥ तावत्काम-
भटो बभाण कटकाटोपो वृथायं भटाः । दृश्यंते किमिहोद्भटा मम विभो क्षिप्रं समादिश्यतां ॥ ए
कोऽपि प्रधनं विनैव चलदृक्चंचत्कटाक्षोत्कटैः । पाशैर्वैरिकुलं नियम्य सकलं मुंचे यथा ते पुरः ॥

॥ २२ ॥ सुभटानां निभाल्योच्चै—रित्याघ्रात्वटीं पटुं ॥ जितकामीव मोहेंद्रः । प्रधनावनिमानशे ॥
॥ २३ ॥ तावद्दूतोऽपि सद्ज्ञाना—दर्शोऽभ्येत्य निजं प्रभुं ॥ विज्ञापयामूलचूलं तं । वृत्तांतं सर्वमू
चिवान् ॥ २४ ॥
तन्निशम्यानिशं शांता । अपि ते प्रशमादयः ॥ वैरप्रबोधदुर्धर्षा । दर्पिता प्रजमूचिरे ॥ २५ ॥
अहो दृष्टानिशांतात्मः । परेऽमी प्रजगद्भिरे ॥ दीपे मंदायमाने हि । स्फुरंति तिमिरोर्मयः ॥२६॥
कोऽस्ति मोहो वराकोऽयं । तस्य पुत्रा भटाश्च के ॥ दलयामोऽधुनैवैतान् । कणवत् स्वामिशासना·
त ॥ २७ ॥ अस्माकं क्रामतां शत्रून् । समुद्राणां बलोर्मिभिः ॥ वेलायते तवाज्ञैव । दैवेनापि दु·
रासदा ॥ २८ ॥ नवतु ज्ञास्यते सर्वं । रणमीमीत्युदीरयन् ॥ धर्मेंद्रो गूर्जरेंद्रश्च । युद्धार्थमुदपिष्टतां
॥ २९ ॥ विधाय धर्मनाथं तं । ससैन्यं पृष्ठरक्षिणं ॥ अलंचकार चौलुक्य· ; क्षेत्रं द्विषदधिष्ठितं ॥
॥ ३० ॥ दृष्ट्वा च मोहं दर्पिष्ठं । नृपोऽवोचत्समेहि भोः ॥ आवामेव रणक्रीमां । तन्वहे मंतु सै·
निकाः ॥ ३१ ॥ वपुष्मदिव सत्त्वं तं । दृष्ट्वा चौलुक्यमग्रतः ॥ धूमायितक्रोधाग्निः । स्माह मोह·
मन्त्रीपतिः ॥ ३२ ॥ रे पुंस्कीट ममंतत्त्रिजगतीमाक्रम्य तैर्विक्रमैः । शक्राद्या अपि चक्रिरे किल

मया येन स्वदासा इव ॥ प्रत्यग्रस्फुरदुग्रविग्रहधिया मोहस्य तस्याग्रत—स्तिष्ठन् धाष्टर्यवशेन सांप्रतमसि त्वं कोऽपि वीरांकुरः ॥ ३३ ॥ चौलुक्योऽपि तमूचिवान् वदसि रे यत्त्वं निजं विक्रमं । त्रैलोक्याक्रमणादिकं तदखिलं जीर्णं ननु संप्रति ॥ स्थित्वोर्ध्वं समरे यदि क्षणमरे कंमूलमदोर्बल—क्रीडां सोढुमधीशिषे ननु तदा जाने तव स्फूर्जितं ॥ ३४ ॥ शृणु किंचित्प्रतिज्ञां मे । जित्वा त्वां प्रधनेऽधुना ॥ धर्मं चेत्स्थापये राज्ये । तदाहं वीरकुंजरः ॥ ३५ ॥ इत्युक्त्वा भूमिपालोऽथ । घातेनैकेन तत्क्षणं ॥ ससैन्यं मोहराजेंद्रं । चूर्णयामास सत्वयुक् ॥ ३६ ॥ राज्ये धर्ममहानृपं । स्थापयामास भक्तितः ॥ प्रीणयामास पत्नीं स्वां । दयां चापि नृपोऽन्वितः ॥ ३७ ॥ एवं मोहं विनिर्जित्य । जयलक्ष्म्यातिभासुरः ॥ नृपो गुरुवरं गत्वा । हेमाचार्यं ननाम च ॥ ३८ ॥ धर्मलाभं गुरुर्दत्वा । प्रमोदभरमेदुरः ॥ दानशीलतपोभाव—रूपं तं धर्ममादिशत् ॥ ३९ ॥ दानशीलतपोभावै । राजंस्त्वं सफलीकुरु ॥ निजं जन्मातिदुःप्रापं । श्रीविक्रमनरेंद्रवत् ॥ ४० ॥

तथाहि विक्रमाख्योऽभू—द्राजा शिवपुरे पुरे ॥ रत्नमंजरी तस्याभू—द्राज्ञी शीलैकभूषणा ॥ ४१ ॥ जिनधर्मरतो राजा । प्रजापालनतत्परः ॥ प्राप्यैकदा गुरोर्योगं । परस्त्रीनियमं ललौ ॥

॥ ४२ ॥ महात्मा निरतीचारं । पालयामास तद्व्रतं ॥ त्रिविधं त्रिविधेनैव । यथा मुनिमतल्लिकः ॥
॥ ४३ ॥ ज्ञानेनाथ समालोक्य । तं तथा व्रततत्परं ॥ सभास्थः प्रशशंसोच्चै—रेकदेशाननायकः
॥ ४४ ॥ अमन्यमाना देव्येका । वचस्तद्वज्रिणोदितं ॥ दिव्यरूपं निजं कृत्वा । परीक्षार्थमिहागम-
त् ॥ ४५ ॥ हयमेकं समादाय । वणिजीभूय सा सुरी ॥ नृपपार्श्वे समागत्य । दर्शयामास तं हयं
॥ ४६ ॥ शुभलक्षणसंयुक्तं । दृष्ट्वा तं हयमुत्तमं ॥ दत्वा तदिच्छितं द्रव्यं । जग्राह महीनायकः ॥
॥ ४७ ॥ अथैकदा समारुह्य । नृपस्तं हयनायकं ॥ जगाम बहिरुद्याने । परिवारसमन्वितः ॥४८॥
दिव्यप्रभावतो वाजी । गृहीत्वा तं पलायितः ॥ काननांतरथो दूरे । गत्वा श्रमयुतः स्थितः ॥४९॥
राजा क्षुधा तृषा खिन्नो । मूर्छितो न्यपतद् भुवि ॥ परिवारयुता प्राप्ता । तत्र सा च सुरी तदा ॥
॥ ५० ॥ शीतोपचारपवनैः । कृत्वा चेतनसंयुतं ॥ नृपं च तत्र स्वावासे । कृत्रिमे सा समानयत् ॥
॥ ५१ ॥ दिव्यभोजनपानैश्च । तोषयित्वा भृशं नृपं ॥ दिव्यशृंगारनेपथ्या । प्रार्थयामास सा ततः
॥ ५२ ॥ स्वामिन् मां कामसंतप्ता—मालिंग्यौष्ठरसामृतैः ॥ सिंचयस्वेति मे याचां । दास्यास्त्वं स
फलीकुरु ॥ ५३ ॥

इत्युक्त्वा सा कटाक्षौघै—स्ताडयामास तं तथा ॥ यथा मुनीश्वरोऽपि स्या—न्मन्मथव्याप्तमा·
नसः ॥ ५४ ॥ परं व्रतं निजं स्मृत्वा । परस्त्रीतः पराङ्मुखः ॥ नृपो मनागपि क्षुब्धो । नाभवन्म
नसापि सः ॥ ५५ ॥ विशेषतोऽथ सा देवी । हावभावादिचेष्टिनी ॥ आहस्म नाथ मे यांचां । ना·
फलीकर्तुमर्हसि ॥ ५६ ॥ विक्रमोऽवक्शुभे मेऽस्ति । नियमो गुरुणार्पितः ॥ परस्त्रीस्पर्शनेऽपि त—
न्मनो मे न प्रवर्तते ॥ ५७ ॥ तन्निशम्याथ सा देवी । भापनार्थमुवाच तं ॥ भंगतः प्रार्थनाया मे
। शिरश्छेत्स्यामि ते ध्रुवं ॥ ५८ ॥ विक्रमोऽवक्शुभे नाहं । बिभेमि खलु मृत्युतः ॥ व्रतभंगं परं
नाहं । करिष्यामि त्वदुक्तितः ॥ ५९ ॥ निश्चलं सा समालोक्य । भूमिपं तं निजे व्रते ॥ आविः·
कृत्य निजं रूपं । तं प्रशस्येत्युवाच सा ॥ ६० ॥ स्वप्नेऽपि कामिनीं वीक्ष्य । द्रुतं द्रवति मानवः ॥
किं पुनः सुरलोलाक्षीः । साक्षान्मोहनवल्लरीः ॥ ६१ ॥ ततस्तव परीक्षार्थं । स्वर्गादेत्य मया रयात
॥ अयं हयापहारादि—प्रपंचो रचितोऽखिलः ॥ ६२ ॥ त्वमेव धर्मवीरोऽसि । कोटीरः शीलशालि
नां ॥ आहत्यापि शिरश्छेद—मस्खलन्नियमान्न यः ॥ ६३ ॥ के शीलं परिशीलयंति न जनाः
स्वास्थ्ये व्रतस्थास्तु ये । ये नैव व्यसनेऽपि जीवितमिवोन्मुंचंति ते कर्हिचित् ॥ ग्रीष्मे शैवलिनीं

श्रोतोवेगयुतां नदीं घनऋतौ ये तां तरीतुं क्षमाः ॥ ३९ ॥ अ-
तरंति न कति स्युस्तारकास्ते परं । ज्योत्स्नारात्रिरुदीर्यते ॥ ४० ॥ ई
शशिनैव ह्यखंडेन । मृषा स्यान्न सतां हि गीः ॥
जिह्मब्रह्मणा देव । शुभ्रेयं भवतेव भूः ॥ तादृगेवान्वभाविष्ट । तरुं वृक्षानिपिं-
शानेशेन यादृक्त्व—मशंसिष्टाः स्वसंसदि ॥ तपनोऽपि समुत्ताप्य । चिकीर्षसि परं
॥ ४१ ॥ तद् ब्रूहि किं प्रियाकृत्य । प्रीणये त्वां कदर्थितं ॥ तत्त्वं कृतवती देवि । भूपयद्दि-
चति ॥ ४२ ॥ उवाच विक्रमोऽत्यंतं । प्रियं मे शीलपालनं ॥ सिंहासने च विन्यस्या— वृक्षा च । स्व-
किमु ॥ ४३ ॥ इत्युक्तिभाजं भूजानिं । नीत्वा शिवपुरं सुरी ॥ कादंबिनीव
स्यरूपणोः ॥ ४४ ॥ पौरेभ्यः प्रीतिगौरेभ्यः । क्ष्मापवृत्तं विवृत्य तत् ॥ निकामं धन्यमात्मानं
र्णौघं सा दिवं ययौ ॥ ४५ ॥ श्रुत्वा तच्चरितं चित्रं । नागरा हर्षसागराः ॥ भवतिस्म कुशी-
। तेन नाथेन मेनिरे ॥ ४६ ॥ नृपस्य शीलमाहात्म्यं । तज्ञाम्यद्भूतलेऽखिले ॥
लाना—मपि शीलस्पृहाकृते ॥ ४७ ॥
अथ विक्रमभूपस्य । फलं गार्हस्थ्यशाखिनः ॥ तनूजो रत्नमंजर्यां । रत्नसाराह्वयोऽभवत् ॥
॥ ४८ ॥ स वाङ्मयांबुधेः पारं—गमीभूयाभ्यजीवयत ॥ वैदुष्यं विनयेनैव । यौवनं निजवर्ष्मणा

॥ ४९ ॥ पुत्रं योग्यं ततो राजा । यौवराज्ये नियुज्य तं ॥ दानशीलमयं धर्मं । निर्ममे निर्मला-
शयः ॥ ५० ॥ आरामिकात्परिज्ञाय । समायातं शुभं गुरुं ॥ भूपः सपरिवारोऽपि । गत्वा तीर्थमि-
वानमत् ॥ ५१ ॥ भवदावाग्निसंतप्तान् । जनानुज्जीवयन्निव ॥ रसाढ्याभिः स्ववाणीभि—रभ्यधान्मु-
निपुंगवः ॥ ५२ ॥ धर्मसैन्ये चतुरंगे । बलिष्टं दानशीलतः ॥ तपस्तृतीयमंगं स्याद् । दुःकर्म द्वेषि
पेषकं ॥ ५३ ॥ परिग्रहत्यागसुनीरसिक्तो । निर्वेदमूलः शुचिशीलशाखः ॥ प्रभावपुष्पः शुभसत्फ-
लौघ—स्तपस्तरुः कस्य भवेन्न सेव्यः ॥ ५४ ॥ पाप्मनां विविधारंभ—संरंभप्राप्तजन्मनां ॥ क्षयाय
तप एव स्या—दुषर्बुध इवैधसां ॥ ५५ ॥ लब्धयोऽवधिमुख्यास्ताः । सिद्धयो ह्यणिमादयः ॥ वि
लसंति यदादेशा—त्तसव्यं तत्तपोऽनिशं ॥ ५६ ॥ बाह्याभ्यंतरभेदेन । तत्प्रोक्तं द्वादशात्मकं ॥ द्वा-
दशारं चक्रमिव । हंतुं कर्मरिपुं मुनेः ॥ ५७ ॥ अभुक्तिरूनोदरता । वृत्तिसंक्षिप्ततापि च ॥ रसत्या-
गो वपुःक्लेशो । लीनत्वं स्याद्बहिस्तपः ॥ ५८ ॥ प्रायश्चित्तं वैयावृत्त्यं । स्वाध्यायविनयावपि ॥ उ-
त्सर्गश्च शुक्लध्यान—मंतरंगं तपो भवेत् ॥ ५९ ॥ यतेरेवास्तसंगस्य । स्यादिदं सकलं तपः ॥ न
तु तत्तन्महारंभ—जृंभिणो गृहमेधिनः ॥ ६० ॥ संयमश्रीस्तपःश्रीश्च । नूनं प्रीते परस्परं ॥ यत्पूर्व-

स्याः समुल्लासा—त्पश्चिमापि स्फुरत्यलं ॥ ६१ ॥ इत्थं गुरुगिरा जातु—न्यासेवोद्बुद्धबोधदृक् ॥
विनीर्य सूनवे राज्यं । व्रतमादत्त विक्रमः ॥ ६२ ॥ सामाचारीं दशनयी—मभ्यस्यन् गुरुसन्निधौ ॥
स मासदपणाद्युग्रं । दुस्तपं तप्तवांस्तपः ॥ ६३ ॥ तत्तपस्यतिवृद्धत्वं । स्वीकुर्वाणेऽतिकौतुकं ॥ वली-
यांस्तत्प्रनावोऽभू—द्गीर्वाणाकर्षणक्षमः ॥ ६४ ॥ स कृती विकृतीर्हेतुं । विकृतीनां विदन् हृदि ॥ त-
प.कृशोऽप्यसेविष्ट । पारणेऽपि न जातु ताः ॥ ६५ ॥

अन्यदा विक्रममुनि—स्तपोराशिरिवांगवान् ॥ अगबल्लक्षणावत्यां । पुर्यां पारणहेतवे ॥६६॥ स
तत्र लक्ष्मणनृपस्य । चंद्रसेनाह्वयः सुतः ॥ पापः पापर्द्धये गच्छन् । पुरस्तं मुनिमैक्षत ॥ ६७ ॥
दुःशकुनबुद्ध्या तं । हंतुं धावन् शितासिना ॥ मयूरबंधं बद्धः स—न्निश्चेष्टो भूतलेऽपतत ॥ ६८ ॥
दृष्ट्वा महाशयस्यास्य । जातं किमिति चिंतयन् ॥ उत्कल्लोलदयावार्धि—स्तत्पार्श्वे तस्थिवान् मुनिः
॥ ६९ ॥ हाहारवपरैः पौरैः । शोकसक्तैश्च तज्जनैः ॥ चैतन्यं लंभ्यमानोऽपि । स ग्रावेव न लब्ध-
वान् ॥ ७० ॥ श्रुत्वा तत्तत्पिता दुःख—ज्वलितात्मेव तत्क्षणं ॥ धावित्वा सपरीवारः । सुतोपांतमु
पागमत ॥ ७१ ॥ यतिं जिघांसतः सूनो—रीदृग्व्यसनमागतं ॥ मत्वेति निपतन् पाद—पद्मेऽस्या-

दीन्मुनिं नृपः ॥ ७२ ॥ यौवनाद्यतिमत्तेन । मत्तनूजेन यन्मुने ॥ विराद्धं तत्क्षमस्वोच्चैः । साधवो हि सहिष्णवः ॥ ७३ ॥ तारुण्यं विभवः शौर्य । वैभवं विटसंगतिः ॥ अविचारज्ञता चेति । विना मद्यं मदोदयः ॥ ७४ ॥ किंचाज्ञानांधता यस्य । विश्वांधंकरणी हृदि ॥ अमार्गगमने तस्या—पराधः कस्तपोनिधे ॥ ७५ ॥ ततः प्रसद्य सद्यो मे । दययोज्जीवयात्मजं ॥ वज्रं विसृज्य मेघोऽपि । न प्रीणात्यमृतेन किं ॥ ७६ ॥ जगाद विक्रमः साधु—र्वेद्म्यहं नास्य किंचन ॥ किंतु राजन्नयं धावन् । स्वयमेवापतत् क्षितौ ॥ ७७ ॥ प्राणांतेऽपि न कीटेभ्यो—ऽप्यहो द्रुह्यंति जातु ये ॥ ते कथं कष्टमीदृक्षं । सुते तव वितन्वते ॥ ७८ ॥ श्रुत्वा तदतिदीनस्त—मूचे लक्ष्मणराट् पुनः ॥ भवतैव कृतं नो चे—ज्जज्ञे तर्ह्यस्य किं ननु ॥ ७९ ॥ यतिर्जगौ ममापि तत् । स्फूर्जत्याश्चर्यमूर्जितं ॥ नृपस्ततः सलोकोऽपि । जज्ञे मूढ इवोच्चकैः ॥ ८० ॥

अथादित्यमपि स्वांग—दीप्त्या निस्तेजयन्निव ॥ प्रादुर्भूय पुरः कोऽपि । वदतिस्म सुरोत्तमः ॥ ८१ ॥ नृपाधुना सुधर्मेंद्रो । नत्वा नंदीश्वरार्हतः ॥ त्वत्पुरोर्ध्वमने नैव । गच्छन् गगनवर्त्मना ॥ ॥ ८२ ॥ धावंतं यतिघाताय । त्वत्सुतं वीक्ष्य रोषणः ॥ प्रहिणोतिस्म मां देवं । जिनशासनवत्सलं

॥ ८३ ॥ युग्मं ॥ तनयो दुर्नयोऽयं ते । मयेदृग्विदधे क्रुधा ॥ सम्यग्दृशः महंते हि । मुनीनां
नापमाननां ॥ ८४ ॥ तदयं यदि सूनुस्ते । मुनीन् संमानयिष्यति ॥ भविष्यति तदा सज्जो ; ना·
न्यथा त्रिदशैरपि ॥ ८५ ॥ तदंगीकृत्य नृपेन । तस्य देवस्य शासनात ॥ मुनिक्रमांभसा सिक्तः ।
सद्यः सज्जः सुतोऽजनि ॥ ८६ ॥ चंद्रसेनं ततः प्रोचे । देवो रे दुष्टशेखर ॥ मुनिस्तवापशकुनं ।
वद कः शकुनं तदा ॥ ८७ ॥ किंच पापर्द्धिव्यापार—परस्य ते सुखं कुतः ॥ संमुखीना अपि ते
स्युः । पापा एव न धार्मिकाः ॥ ८८ ॥ तीर्थोपास्त्या तपस्या वा । व्यपास्यति चिरेण यां ॥ ताम·
हो दुरितश्रेणिं । मुनिदर्शनमात्रतः ॥ ८९ ॥ तपस्तांस्त्वमेतस्य । तुभ्यं दर्शितवान् स्वयं ॥ यन्म·
हिम्ना महेंद्रोऽपि । दासोऽस्य समजायत ॥ ९० ॥ एवमुक्त्वा मुनिं नत्वा । देवे त्रिदिवमीयुषि ॥
लज्जितश्चंडसेनोऽपि । क्षमयामास तं भृशं ॥ ९१ ॥ ततो लक्ष्मणनृपेन । विनम्रीभूय साग्रहं ॥
पृष्टो धर्मस्वरूपार्थ—मूचिवान् मुनिविक्रमः ॥ ९२ ॥ वात्यूर्ध्वं पवनो न यच्च ह्यनलस्तिर्यग्न जाज्व
ल्यते । वर्षत्यंबु यदंबुदो यदवनी तिष्ठत्यनालंबना ॥ सूर्यश्चापि शशी ध्रुवं यदुदितः श्रीर्यज्जडानां
गृहे । क्रियात्रुल्यनि यज्जनस्तदखिलं त्वं विद्धि धर्मोर्जितं ॥ ९३ ॥ धर्मो विश्वंजनीनोऽयं । जि

नेंद्रैर्गदितः स्वयं ॥ निर्भाग्यैरतिदुर्लभः । कामकुंभ इव ध्रुवं ॥ ९४ ॥ रत्नावल्यादिभेदैस्तै—स्त-
पोभिरथ दुश्चरैः ॥ चेक्लिश्यमानं तं दृष्ट्वा । मुनिचंद्रप्रभुर्जगौ ॥ ९५ ॥ त्वद्वपुस्तपसानेन । ग्रीष्मा-
र्केण तटाकवत ॥ शोषितं तदिदं त्यक्त्वा । मुने भावय भावनां ॥ ९६ ॥ अनया वात्ययेवोच्चैः ।
कर्मरेणुभरे हृते ॥ भजते विरजीभाव—मात्मा स्फटिकशैलवत् ॥ ९७ ॥ भावनाजलयोगेन । या-
वन्न क्षाल्यतेतमां ॥ पंकिलस्तावदात्मायं । कथं नैर्मल्यमश्नुते ॥ ९९ ॥ ततो भावनयात्मानं । भा-
वयन् स महामुनिः ॥ मुक्तिसद्मैकनिःश्रेणीं । क्षपकश्रेणिमाश्रयत् ॥ १०० ॥ निर्मूल्य सर्वकर्माणि
। कलयन् केवलश्रियं ॥ स विक्रममुनिः प्राप । महानंदमयं पदं ॥ १ ॥

कथामिमा विक्रमभूमिभर्तृ—र्दानादिकृत्येषु समाकलय्य ॥ कुमारपालक्षितिपाल तानि । से-
वस्व शश्वत्त्वमपि विशुद्ध्या ॥ २ ॥ ततः सत्पात्रदानादौ । प्रावर्तिष्ट स शिष्टधीः ॥ वृद्धोपदेशश्रवणं
। सद्भिर्नाचर्यते यतः ॥ ३ ॥ संघे चतुर्विधे जैने । चैत्ये बिंबे च पुस्तके ॥ सप्तक्षेत्र्यां निजं वित्तं
। बीजवद्वपतिस्म सः ॥ ४ ॥ अध्यूषिवांसमास्थानी—मथ चौलुक्यभूधवं ॥ किंचिन्म्लानमुखोऽभ्ये-
त्य । नमश्चक्रे महाजनः ॥ ५ ॥ तं वैलक्ष्यपदं वीक्ष्य । पराभूतमिवोच्चकैः ॥ चिंताचांततमस्वांतः ।

कुमार स जगाद विशारदः ॥ ६ ॥ कुतोऽप्युपद्रवः कश्चि—त्किमथ न्यायविप्लवः ॥ महाजनोऽतिविह्वलो ।
चरित्रं यत्मायंतनपज्ञयत् ॥ ७ ॥ ततस्ताहक्कृतप्रश्न—प्रीतिपल्लविताशयाः ॥ नृपं विज्ञपयामासु—र्महाज-
नपुरस्सराः ॥ ८ ॥ उपद्रवश्चेत्त्वद्राज्ये । रेणुरब्धौ तदा न किं ॥ अन्यायस्तु भवेत् कीदृ—ग्न
 स्वप्नेऽप्यन्वभूयत ॥ ९ ॥ मंमले तपनस्यापि । जातु संतमसं भवेत् ॥ न तु त्वदुदये स्वामिन् ।
किंचिदप्यसमंजसं ॥ १० ॥ किंतु श्रेष्ठी कुवेराख्यः । श्रिया हसितवासवः ॥ आगच्छंस्तुच्छभाग्यत्वा—
द्भग्ने पोते मृतोंबुधौ ॥ ११ ॥ ततोत्यमंदमाक्रंदं । निःपुत्रा श्रेष्ठिनः प्रिया ॥ तच्छनं गृह्यतां कुर्मो ।
यथा तस्योर्ध्वदेहिकं ॥ १२ ॥ कियत्तदिति पृष्टास्ते । वदंतिस्मातिपुष्कलं ॥ कौतुकेन ततो नृप
—स्तैः समं तद्गृहं ययौ ॥ १३ ॥ वीक्ष्य तत्र कुवेरस्य । कुटुंबं शोकसंकुलं ॥ एवं संबोधयामास
। सूक्तैर्वैराग्यनिर्भरैः ॥ १४ ॥ जीवितव्यं नृणां श्वासो । वायुप्रकृतितश्चलः ॥ निर्गच्छन् प्रविशन्नेव
। सोऽपि तिष्ठति संततं ॥ १५ ॥ यदेव दैवयोगेन । निर्गत्य प्रविशेन्न सः ॥ तदैव देहिनां मृत्युः
। स किं दूरेऽस्ति कुत्रचित ॥ १६ ॥ नवद्वारे शरीरेऽस्मिन् । श्वासवायुश्चलोऽप्यलं ॥ यत्तिष्ठति कि·
यत्कालं—मपि तत्किं न कौतुकं ॥ १७ ॥ विषूचिका विषं शूल—ज्वरानलजलादय· ॥ हरंति जी·

वित्तं सद्यो । वाताः पक्किमपत्रवत् ॥ १८ ॥ प्राणिनोऽन्यपथाध्वन्या । व्याघुटंति यदा तदा ॥ क-
ल्पांतेऽपि पुनर्नैव । कालधर्मपथं गताः ॥ १९ ॥ कोटिशोऽथ सुवर्णानि । कलधौतानि लक्षशः ॥
सहस्रशो मणीनुष्ट्र—गवाश्वादीननेकशः ॥ २० ॥ हस्तिनः कतिचिद्दास—वणिक्पुत्राननेकशः ॥
धान्यपूगांशुकक्षौम—चंदनादीनि राशिशः ॥ २१ ॥ गेहहट्टप्रवहण—शतांगादीनि भूरिशः ॥ कु-
बेरस्य गृहे दृष्ट्वा । विस्मेरः प्रोक्तवान्नृपः ॥ २२ ॥ त्रिभिर्विशेषकं ॥ देवः कुबेर एवात्र । कुबेरोऽ-
यमवातरत ॥ अन्यथा कथमेतस्य । लक्ष्मीरीदृक्समुल्लसेत् ॥ २३ ॥ गृह्यतां सर्वमप्येत—दित्युक्ते
व्यवहारिभिः ॥ किंचिन्म्लानमुखांभोजो । राजर्षिर्ध्यातवानिति ॥ २४ ॥ यमोऽपि हरति प्राणान् ।
न धनं तत्तदुज्झितं ॥ हरंतो भूभृतो नूनं । तस्मादप्यतिनिर्दयाः ॥ २५ ॥ नरकांतं भवेद्राज्य—मि-
त्यार्यैर्यदुदीर्यते ॥ तन्नूनं रुदतीवित्त—समाकर्षणपाप्मना ॥ २६ ॥ अनाथेभ्यो धनं दातुं । राज्ञां
प्रत्युत युज्यते ॥ प्रसह्य गृह्यते तेभ्य—स्तद्धंत किमियं स्थितिः ॥ २७ ॥ तत्तृतीयव्रतभ्रंशि । धनं
नैतन्ममोचितं ॥ निर्धार्येति स धर्मात्मा । महाजनमवोचत ॥ २८ ॥ मृते प्राणप्रियेऽपि स्यात् ।
स्पष्टं कष्टं तथा न हि ॥ निःपुत्राणां यथा भूपै—र्ग्राह्यमाणे बलाद्धने ॥ २९ ॥

द्रव्यं प्राप्नोति पुत्रश्च—द्रुदतीनां नृपास्तदा ॥ तद्गृह्णंतः कथं नाम । तत्पुत्रा न भवंति हि
॥ ३० ॥ मृतप्राया भवंत्येताः । प्रागपि स्वप्रियव्ययात् ॥ यदान्यो द्रविणादानं । तन्नूनं मृतमारणं
॥ ३१ ॥ विनयेन ततोऽनेन । कुबेरस्य परिच्छदः ॥ सुखं जीव्यादुदीर्येति । नृपस्तस्मै तमार्पयत ॥
॥ ३२ ॥ स विवेकलमच्चित्त—स्तत्रैवाकार्य सेवकैः ॥ ऊचे पंचकुलं स्वीयं । पश्यत्येव महाजने
॥ ३३ ॥ उत्पद्यते कियत्कृंत । प्रत्यब्दं रुदतीधनं ॥ लक्षद्वासप्ततिं तेऽपि । प्रोचिरे पत्रवाचनात् ॥
॥ ३४ ॥ तत्करात्पत्रमादाय । विपाट्य च चिरत्नवत ॥ अतः परं धनं नैतद् । ग्राह्यमित्यादिशन्नृपः
॥ ३५ ॥ ततः स सकलैर्लोकै—र्निःपुत्राशिश्च निर्भरं ॥ आशास्यमानो राजर्षि—र्गत्वा गुरुमवंदत
॥ ३६ ॥ तत्कर्तव्यं नृपोपज्ञं । विज्ञाय जनताननात् ॥ उच्चैश्चमत्कृतश्चित्ते । हेमाचार्यस्तमूचिवान्
॥ ३७ ॥ क्षुभ्यंति द्रविणं दृष्ट्वा । निर्लोभा अपि तत्क्षणं ॥ तदेवं तृणवद्देव । त्वत्तस्त्यजति कः प-
रः ॥ ३८ ॥ द्रव्यं गृह्णन्नपुत्राणां । नृपः स्यात्तावतां सुतः ॥ त्वं तु विश्राणयंस्तेषां । पिता भवसि
निश्चितं ॥ ३९ ॥ गुरुणा गौरवेणेत्थं । समुपश्लोकितो नृपः ॥ अमानिव प्रमोदेन । हृदि स्वास्प-
दमासदत् ॥ ४० ॥ अथ स्वपरयोः पुण्यं । चैत्यनिर्मापणाद्विदन् ॥ निर्मापयितुमारेभे । तानि नृ-

पतिरादरात् ॥ ४१ ॥ पत्तने श्रीत्रिभुवन—पालाख्यं चैत्यमद्भुतं ॥ पंचविंशतिहस्तोच्चं । कारयि· त्वा विमानवत् ॥ ४२ ॥ स्वपितृश्रेयसे तत्र । नेमिबिंबमतिष्टिपत ॥ पादान्वितं शतं माना—दंगु· लानि स पुण्यधीः ॥ ४३ ॥ प्राक्कृतपललास्वाद—द्वात्रिंशद्दंतशुद्धये ॥ एकवेद्यां गतावद्यान् । मं· डपादिपरिस्कृतान् ॥ ४४ ॥ नंदीश्वरस्फुरद्राज—धानीचैत्यानुजानिव ॥ प्रासादान् कारयामास । ता· वत्संख्यान् क्षमाधवः ॥ ४५ ॥ युग्मं ॥ गुरोरादेशतस्तत्र । द्वौ शितौ द्वौ सितद्युती ॥ द्वौ रक्तौ द्वौ च नीलांगौ । षोडश स्वर्णरोचिषः ॥ ४६ ॥ चतुर्विंशतिचैत्येषु । नाभेयप्रमुखान् जिनान् ॥ चतु· र्षु चतुरः सीमं—धरादीनुध्धृतेष्वथ ॥ ४७ ॥ रोहिणिं समवसृतिं । स्वगुरोः पादुकाद्वयं ॥ अशो· कद्रुं च विस्तीर्णं । स विधाप्य न्यवीविशत् ॥ ४८ ॥ त्रिभिर्विशेषकं ॥ दुःस्थत्वे भ्रमता पूर्वं । नि र्धनेन महीभृता ॥ हृतासु रूप्यमुद्रासु । यो मृतोऽभवदुंदिरः ॥ ४९ ॥

तदुब्धाकनिदाघस्य । संक्रयार्थमचीकरत ॥ स धारायंत्रवच्चारु । चैत्यमुंदिरसंज्ञकं ॥ ५० ॥ अ· विदुष्यापि नामाद्यं । यया देवश्रिया पुरा ॥ त्र्यहं बुभुक्षितो मार्गे । करंबं भोजितो नृपः ॥ ५१ ॥ कृतज्ञत्वेन तत्पुण्य—वृद्धये स्वार्थसिद्धये ॥ स करंभवसत्याख्यं । विहारं निरमापयत ॥ ५२ ॥ रा·

जगामान्यदा भ्राम—श्चैत्यं वाग्भटकारितं ॥ जिनाधीशं नमस्कर्तुं । तिरस्कर्तुं च कल्मषं ॥ ५३ ॥
तत्रागान्निस्म नेपाल—नृपप्रहितमद्भुतं ॥ प्राक्तनैः कथितं माना—दंगुलान्येकविंशतिं ॥ ५४ ॥
बिंबं श्रीपार्श्वनाथस्य । चंद्रकांतमणिमयं ॥ बाह्याभ्यंतरसंताप—नाशकं दर्शनादपि ॥ ५५ ॥ त-
द्बिंबं चंद्रबिंबाभं । पश्यंतो नृपतेर्मुहुः ॥ अमोदिपानामुचितं । कुमुदे इव लोचने ॥ ५६ ॥ तां मू-
र्तिं स्वकरे कृत्वा । भूपो वाग्भटमभ्यधात् ॥ देहि मह्यमिदं चैत्ये । यथैतां स्थापयाम्यहं ॥ ५७ ॥
हृष्टो व्यजिज्ञपत्सोऽपि । प्रसादोऽयं महान् मयि ॥ श्रीकुमारविहारोऽस्तु । चैत्यमेतदतःपरं ॥ ५८ ॥
उज्ज्वलीकार्यं तद् बिंबं । पटुवैकटिकव्रजैः ॥ स्वचित्त इव तत्रैव । चैत्ये ऽभूदतिदीपित् ॥ ५९ ॥
चैत्यस्य शुकनाशेव । कृते छिद्रेऽतिपुष्कले ॥ तस्य बिंबस्य संपन्नः । पूर्णेंदुकरसंगमः ॥ ६० ॥ श्र-
वतिस्म ततो बिंबा—च्चंद्रबिंबादिवोच्चकैः ॥ सुधारसः समस्ताधि—व्याधिध्वंसनिबंधनं ॥ ६१ ॥ ते-
न दिव्यौषधेनेव । दोषाः सर्वेऽपि चाक्षुषाः । तापाश्च विविधाः सद्यः । शांतिं यांतिस्म देहिनां ॥
॥ ६२ ॥ चिकारयिषितं पूर्व—मर्णोराजपराजये ॥ चतुर्विंशतिहस्तोच्चं । चैत्यं तारंगभूधरे ॥ ६३ ॥
द्वितीयाजितनाथस्य । बिंबमेकशतांगुलं ॥ नृपो निवेशयामास । मूर्तं धर्ममिवात्मन ॥ ६४ ॥ यु

गमं ॥ स्तंभतीर्थे प्रभोर्हेम—सूरेर्यत्राभवद् व्रतं ॥ श्रीआलिगाख्या वसतिः । सासीज्जीर्णतमा क्रमात ॥ ६५ ॥ गुरुस्नेहेन राजर्षि—स्तां नवीकार्य मूलतः ॥ अस्थापयद्रत्नमयं । बिंबमंत्यजिनेशितुः ॥ ६६ ॥ एषु सर्वेषु चैत्येषु । महामहिमपूर्वकं ॥ हेमाचार्यः स्वहस्तेन । प्रतिष्ठां विधिवद्व्यधात् ॥ ६७ ॥ अर्चार्थमेषां चैत्याना—मारामान् पुष्पसंकुलान् ॥ आदायानपि भोगाय । भूरिशो भूपतिर्ददौ ॥ ६८ ॥ ततोऽस्मद्देयदंडेन । युष्माभिर्निजनीवृति ॥ विहारा बहवः कार्याः । शिवशैलाग्रजा इव ॥ ६९ ॥ इति प्रधानैरादेश्य । विषयेषु परेष्वपि ॥ स तान् विधापयामास । नृपैराज्ञावशंवदैः ॥ ७० ॥ युग्मं ॥

गूर्जरो लाटसौराष्ट्र—भंभेरिकहसिंधवः ॥ उच्चाजालंधर. काशी । सपादलक्ष इत्यपि ॥७१॥ अंतर्वेदिर्मरुर्मेद—पाटो मालवकस्तथा ॥ आभीराख्यो महाराष्ट्रः । कर्णाटः कौंकणोऽपि च ॥७२॥ देशेष्वष्टादशस्वेषु । चौलुक्यनृपकारिताः ॥ विहारा रेजिरे मूर्ताः । प्रकरा इव सुकृतां ॥ ७३ ॥ त्रिभिर्विशेषकं ॥ समुत्तीर्णाः स्वर्गादिह किमु विमानाः स्वयममी । भुवं भित्वा प्रापुरुत भुवनपतिव्यंतरगृहाः ॥ अथाभूवन् रूप्यस्फटिकहिमशैलाः प्रकटिता । विहारा राजर्षेरिति कविभिरौह्यंत जग-

ति ॥ ७४ ॥ सुराष्ट्रास्वथ दर्पिष्ठो । राणः समरसिंहकः ॥ अंकुशं मत्तहस्तीव । चौलुक्याज्ञाममंस्त
न ॥ ७५ ॥ तन्निग्रहार्थमस्त्रैषी—न्मंडलाधीश्वरैः सह ॥ प्रैषीदुदयनामात्यं । सेनानीकृत्य भूमिभुक् ॥
॥ ७६ ॥ वर्द्धमानपुरं प्राप्य । तत्र सैन्यं निवेश्य च ॥ विमलाचलमारुह्य—न्मंत्री देवनमस्क्रियै ॥
॥ ७७ ॥ तत्र नत्वार्चयित्वा च । श्रीनाभेयं यथाविधि ॥ स मुनींद्रवदारब्ध । विधातुं चैत्यवंदनां
॥ ७८ ॥ तदा दीप्तां मुखे वर्त्तिं । दीपादादाय मूषकः ॥ काष्ठचैत्यबिले गछन् । कथंचिन्मोचितोऽ-
र्चकैः ॥ ७९ ॥ तद् दृष्ट्वा ध्यातवान्मंत्री । ज्वलद्वर्त्तिप्रसंगतः ॥ काष्ठचैत्ये ज्वलत्यस्मिन् । ध्रुवं ती-
र्थक्षयो भवेत् ॥ ८० ॥ धिगस्मान् क्षितिपापार—व्यापारैकपरायणान् ॥ जीर्णचैत्यमिदं ये न । प्रो-
द्धरामः क्षमा अपि ॥ ८१ ॥ विवृत्य सर्वतो रेणु—पूरं तन्मध्यतः शुभं ॥ रत्नाद्यमाददानास्ते ।
चतुरा धूलिधावकाः ॥ ८२ ॥ वयं पुनर्जडास्तत्र । प्रमादोग्ररजोभरैः ॥ गमयंतो निजं धर्म—रत्नं
हस्तोदरस्थितं ॥ ८३ ॥ तया श्रिया च किं क्ष्माप—पापव्यापारजातया ॥ कृतार्थ्यते न तीर्थादौ ।
या निवेश्याधिकारिभिः ॥ ८४ ॥ ईदृगुच्चैः पदं नीतः । श्रियाहमनया यदि ॥ तदा ममापि युक्तं
ता—मुन्नेतुं तीर्थरोपणात् ॥ ८५ ॥ यावत्कार्यं प्रभोः कृत्वा । चैत्यं नैवेदमुद्धिये ॥ ब्रह्मव्रतैकभ-

त्काद्या—स्तावन्मे संत्वन्निग्रहाः ॥ ८६ ॥ सप्तभिः कुलकं ॥

उत्तीर्योदयनस्तस्मा—त्ससैन्यः प्रास्थित द्रुतं ॥ मंदायंते न प्रज्ञा हि । भृत्याः स्वस्वामिशासने ॥ ८७ ॥ प्राप्य सोऽरिपुरोपांतं । तं दूतेनेत्यवीवदत् ॥ मन्यस्वाज्ञां मदीशस्य । युध्यस्वाथ बली यदि ॥ ८७ ॥ दूतवाचा तया क्रुद्धः । सुप्तोत्थापितसिंहवत् ॥ वैरी समरसस्तस्य । बभूवाभिमुखो युधे ॥ ८८ ॥ राजन्यैर्जन्यसंरब्धैः । स्फूर्त्तिमान् स रिपुर्बभौ ॥ दर्पादिभिः सहचरै—र्वीरो रसइवांगवान् ॥ ८९ ॥ आद्यं वैरं विवृण्वंतो । मिथश्चाथ यथोचितं ॥ सुभटाः प्रकटोत्साहा । योध्धुमारेभिरे भृशं ॥ ९० ॥ शस्त्रघाता लगंतोऽपि । नांगे विविदिरे भटैः ॥ निःशेषद्वेषिविध्वंस—ध्यानमग्नमनस्तया ॥ ९१ ॥ कातरत्वेन ये योध्धुं । पुरा न प्रजगल्भिरे ॥ हतान् स्वान् वीक्ष्य तेऽप्युच्चै—र्विक्रमं प्रतिपेदिरे ॥ ९२ ॥ खड्गाखड्गि कुंताकुंति । बाणाबाणि गदागदि ॥ केशाकेशि मुष्टामुष्टि । योधा युयुधिरे तदा ॥ ९३ ॥ अथ भग्ने निजानीके । प्रत्यनीकैः सविक्रमैः ॥ मंत्री योध्धुमढौकिष्ट । रुष्टः काल इव स्वयं ॥ ९४ ॥ प्रविष्टास्तध्दनुर्ध्वानाः । कर्णजापं विरोधिनां ॥ नश्यत द्रागमुना नो चे—दिति वक्तुमिव ध्रुवं ॥ ९५ ॥ संधायामात्यवीरेण । निजाश्चिक्षिपिरे शराः

सिंहवत्सुभटव्रजान् ॥
॥ परे पुनः पतंतिस्म । रणक्षेत्रेऽतिकौतुकं ॥ ९६ ॥ आहवे प्रहरत्यस्मिन् । सिंहवत्सुभटव्रजान् ॥
मृगा इव हताः के न । वैरिणोऽत्र मृताः खलु ॥ ९७ ॥ तेनोदयेन वीरेण । कृतांतेनेव सर्वतः
॥ मार्यमाणं बलं वीक्ष्य । क्रुद्धः समरसो भृशं ॥ ९८ ॥ ततः कटीस्फुरत्तूणः । पाणौ कार्मुकमा-
वहन् ॥ स्फारवीररसोत्सेका—दूर्ध्वीकृतकचोच्चयः ॥ ९९ ॥ सांयुगीनो हयारूढः । प्रौढविक्रमसं-
युतः ॥ रणे तस्य पुरः सोऽभू—द्धनुर्वेद इवांगवान् ॥ १०० ॥ युग्मं ॥ कृतार्थं मन्यमानौ स्वं ।
सद्भटसुभटसंगमात् ॥ गजाविव च गर्जंतौ । युयुधाते क्रुधाथ तौ ॥ १ ॥ तौ बाणं प्रतिमुंचंतौ ।
बाणं घ्नतौ परस्परं ॥ कृतप्रतिकृतौचित्यं । लुलुपाते न मित्रवत् ॥ २ ॥ प्रसरंतोऽतिवेगेन । स्खलं-
तोऽनर्ने सर्वथा ॥ सम्यक् सत्यापयामासु—स्तद्बाणा बाणतां निजां ॥ ३ ॥ सचिवो वंचयित्वाथ ।
क्षिपः कामं रणांगणे ॥ तद्धृदि न्यक्षिपद्बाणं । स्वविक्रममिवोच्चकैः ॥ ४ ॥ तत्प्रहारदरस्तः । सो-
ऽपि राजनको रुषा ॥ मंत्रिणं ताम्यामास । भाले तीक्ष्णेन पत्रिणा ॥ ५ ॥ रणे तौ रेजतुः शस्त्र
—दानदारदसृग्भरौ ॥ सगैरिकदरन्नीरौ । वर्षर्त्तौ पर्वताविव ॥ ६ ॥
द्वयोरंतर्जयः कस्ये—त्येवं चिंतापरे जने ॥ निशितेषु च बाणेषु । निपतत्सु निरंतरं ॥ ७ ॥

प्रहारजर्जरांगोऽपि । मंत्रीशो हस्तलाघवात् ॥ मर्मण्याहत्य बाणेन । द्विषं तमवधीद्युधि ॥ ८ ॥ यु·
ग्मं ॥ बभूवोदयनानीके । जितं जितमिति ध्वनिः ॥ स्फुरन्नूपुरझंकार । इवायांत्या जयश्रियः ॥
॥ ९ ॥ कीर्त्या सह द्विषल्लक्ष्मीं । समादाय तदंगजं ॥ तत्पदे न्यस्य मंत्रींद्रः । स्कंधावारोन्मुखोऽ·
भवत् ॥ १० ॥ अरुंतुदप्रहारोत्थ—छेदनामीलितेक्षणः ॥ अज्ञातुमिव तद्दुःखं । मूर्छामानर्छ सो·
ऽध्वनि ॥ ११ ॥ पवनाद्युपचारेण । कृच्छ्रात्प्रापय्य चेतनां ॥ तमुत्पाट्य च तद्भृत्या । निन्यिरे शि·
बिरांतरं ॥ १२ ॥ तत्र स्रस्तरविन्यस्त—देहः स्नेहपरैर्जनैः ॥ सम्यक्शुश्रूषमाणोऽपि । चक्रंद सचि·
वो मुहुः ॥ १३ ॥ ततस्तं प्रश्नयामासु—र्नैदिष्ठा मंडलाधिपाः ॥ कथ्यतां कारणात्कस्मा—देवं क्रं·
द्यते प्रभो ॥ १४ ॥ पुरापि चक्रिरेऽनेके । वैरिविद्रावणा रणाः ॥ प्रहाराश्च विलग्नास्ते । वीरश्रीमं·
डनोपमाः ॥ १५ ॥ परं नैवाधृतिर्दध्रे । महीभ्रस्थिर कर्हिचित् ॥ तस्मात्कथ्यं यदंतस्ते । तत्प्रसद्य
निगद्यतां ॥ १६ ॥ अथोदयनमंत्री ता—न्निजगाद सगद्गदं ॥ व्यथंते नैव मामेते । घाता दुर्विष·
हा अपि ॥ १७ ॥ ये स्वामिशासनात्प्राणां—स्तृणयंति रणानले ॥ तेषां वैरिकृता नूनं । प्रहाराः
सुखन्दिकाः ॥ १८ ॥

किंतु पूर्वं प्रतिज्ञाता । मया नियमपूर्वकं ॥ शत्रुंजयस्य शकुनी—चैत्यस्य च समुध्धृतिः ॥
॥ १९ ॥ अथैवं मरणे प्राप्ते । श्रेयःश्रेणिरिवोच्चकैः ॥ जज्यमाना प्रतिज्ञा सा । हृदि शल्यायते म-
म ॥ २० ॥ ऋणमन्यदपि प्रायो । नृणां दुःखाय जायते ॥ यद्देवस्य ऋणं तत्तु । महादुःखनिबंध-
नं ॥ २१ ॥ एकं देवर्णमन्यन्मे । संगरोऽपि च भंगुरः ॥ चिंतयन् द्वयमप्येत—त्क्रंदन्नस्म्यद्य मंद-
वत् ॥ २२ ॥ श्रुत्वा तन्मंडलाधीशाः । प्रोचिरेऽतिचमत्कृताः ॥ तव चित्तेऽपि तां चिंतां । स्वामि-
न्मात्र कृथा वृथा ॥ २३ ॥ ग्राहयित्वैकभक्तादीन् । निखिलांस्त्वदभिग्रहान् ॥ वाग्भटाम्रभटान्यां त्व-
त्पुत्राभ्यामचिरादपि ॥ २४ ॥ तीर्थावुद्धारयिष्यामो । द्वावपि त्वत्प्रतिश्रुतौ ॥ त्वत्सका वयमेव स्मः ।
कर्मण्यस्मिंस्त्वदुक्तवत् ॥ २५ ॥ युग्मं ॥ पितृभक्तिमुचौ तौ चे—च्चैत्ये नैवोद्धरिष्यतः ॥ वयं तदो-
द्धरिष्यामः । श्रेयः कस्य न हि प्रियं ॥ २६ ॥ तद्वाक्यामृतपानेन । सज्जितात्मेव धीसखः ॥ ज-
गादानीयतां साधुः । कोऽप्यंत्याराधनाकृते ॥ २७ ॥ मंडलेशैस्ततो ध्यातं । साधुरत्र न विद्यते ॥
समाधिभंगोऽमात्यस्य । माभूदिति मनीषया ॥ २८ ॥ वंठं कमप्यनुल्लंठं । शिक्षयित्वा मुनिक्रियां ॥
तद्वेषं कारयित्वा ते । समानैषुस्तदंतिके ॥ २९ ॥ युग्मं ॥ तं गौतममिवानम्य । क्षमयित्वा तथां-

गिनः ॥ निंदित्वा दुरितं पुण्य—मनुमोद्य च भावतः ॥ ३० ॥ सम्यक्त्वं पुनरुज्ज्वाल्य । तद्दोषो·न्मार्जनाजलैः ॥ भावनाद्भुतसौरभ्यै—रात्मानमधिवास्य च ॥ ३१ ॥ सध्यानरसवेधेन । कल्याणीकृतमानसः ॥ बभूवोदयनामात्यः । स्वर्गलक्ष्मीविशेषकः ॥ ३२ ॥ त्रिभिर्विशेषकं ॥ तस्यांत्यं कृत्यमातत्य । शोकसंकुलमानसाः ॥ ततश्चौलुक्यसामंताः । पत्तनंप्रत्यचालिषुः ॥ ३३ ॥

स वंठोऽथ मुनिवेष—मुन्नत्या किल मंत्रिणः ॥ वृष्ट्येवांकूरितोद्दाम—विवेकद्रुरचिंतयत् ॥ ॥ ३४ ॥ ईदृशं वंदयित्वैनं । मन्त्रिणं पुण्यपत्तनं ॥ यदि स्यां कर्मकृन्नूय—स्तदा मे का विदग्धता ॥ ३५ ॥ एवमेव धृते यत्रो—ज्जागरं गुरुगौरवं ॥ साधुवेषे श्रिते तस्मिं—स्तत्वतो भावि किं फलं ॥ ३६ ॥ तदनेनैव वेषेण । करोम्यामुष्मिकं हितं ॥ धर्मस्य च ममैतस्य । प्राप्तिः कौतस्कुती पुनः ॥ ३७ ॥ ध्यात्वेति रैवताख्याद्रि—मधिष्ठाय तथैव सः ॥ शुद्धानशननिःश्रेण्या—ध्यारुरोह सुरालयं ॥ ३८ ॥ इतो मांडलिकास्तेऽपि । त्वरया प्राप्य पत्तनं ॥ प्राभृतीचक्रिरे वैरि—लक्ष्मीं चौलुक्यभूभृतः ॥ ३९ ॥ व्यजिज्ञपंश्च युगप—त्तस्योदयनमंत्रिणः ॥ विक्रमं चावसानं च । मुक्त्वा·नंदैककारणं ॥ ४० ॥ कर्णयोः क्रकचाभं त—न्निशम्य वचनं नृपः ॥ आस्यान्निरस्य तांबूल—म·

न्यशेत स्वर्वंधुवत ॥ ४१ ॥ वाग्भटप्रमुखास्तेऽपि । मंत्रिपुत्राः पितुः कथां ॥ मत्वा वज्रानलप्लुष्टा । इव विव्यथिरेतमां ॥ ४२ ॥ नृधवः सौधमभ्येत्य । तत्परिच्छिदमादरात ॥ संबोध्य च महामात्य—पदे न्यास्थत वाग्भटं ॥ ४३ ॥ अथैत्य मंम्लाधीशा ; वाग्भटाग्रजतोप्रति ॥ आवेद्य मंत्रिणस्तीर्थो—द्धारसंगरमूचिरे ॥ ४४ ॥ युवां यदि पितुर्भक्तौ । धर्ममर्मविदावपि ॥ तद्धियेथां तदा तीर्थे । गृहीत्वा तदभिग्रहान् ॥ ४५ ॥ स्तुत्याः सुतास्त एव स्युः । पितरं मोचयेदृणात ॥ अस्मादेवऋणा त्तातं । मोचयेथां युवां ततः ॥ ४६ ॥

सुधावत्तद्गिरं पीत्वा । हृष्टावुदयनात्मजौ ॥ एकैकं तीर्थमुद्धर्तुं । व्रतं जग्रहतुर्मुदा ॥ ४७ ॥ तदर्थमथ विज्ञप्तो—ऽनुजो वाग्भटमूचिवान् ॥ कार्ये विश्वजनीनेऽस्मिन् । किं पृष्टव्योऽसि धीनिधे ॥ ४८ ॥ तीर्थं शत्रुंजयश्चैत्य—मुध्धृत्यं त्रिजगत्प्रभोः ॥ भवानुद्धारकस्तत्किं । येनैतन्नानुमन्यते ॥ ॥ ४९ ॥ ततोऽतिसत्कृतो राज्ञा । गुर्वाशीर्भिश्च वर्धितः ॥ महर्ध्या वाग्भटस्तीर्थे । प्रति प्रस्थितवान्मुदा ॥ ५० ॥ क्षिप्रं शत्रुंजयं गत्वा । नत्वा चादिजिनेश्वरं ॥ दत्वा गुरुनरावासान् । ससैन्योऽपि स तस्थिवान् ॥ ५१ ॥ मेलयामास सोत्सेकान् । सूत्रधारानन्नेकशः ॥ विश्वकर्मापि विज्ञानं । य-

त्पार्श्वेऽधिजिगासते ॥ ५३ ॥ तत्र चैत्योद्धृतिं श्रुत्वा । प्रासाः साधर्मिका घनाः ॥ स्वश्रीव्ययेन पु-
ण्यश्री—विन्नागमजिलिप्सवः ॥ ५४ ॥ तद्देश्यश्च वणिकोऽपि । भीमः षड्द्रम्मनीविकः ॥ वहन्
स्वमूर्ध्नि कुतुपं । कटकेऽभ्येत्य मंत्रिणः ॥ ५५ ॥ विक्रीय च घृतं सर्वं । व्यवहारविशुद्धितः ॥ रूप-
केणाधिकं द्रम्म—मेकं ह्येकतयार्जयत ॥ ५६ ॥ द्रम्मान् सप्तापि नीव्यर्थं । ग्रंथौ बध्वाग्रधार्मिकः ॥
कुसुमै रूपकक्रीतैः । स नाभेयं तदार्चयत् ॥ ५७ ॥

इतस्ततः परिभ्राम्यन् । कटकालोककौतुकात् ॥ भीमो गुरुतरद्वार—मागाद्वाग्भटमंत्रिणः ॥
॥ ५८ ॥ स चारकैर्मुहुर्दूरी—क्रियमाणोऽतिरंकवत् ॥ सोंतर्मंत्रिणमद्राक्षी—त्सदःस्थं दिव्यवैभवं ॥
॥ ५९ ॥ दध्यौ च पार्श्वे लोकोऽस्य । शृंगारैर्दिविषद्गणः ॥ मध्यस्थितः पुनरयं । लीलया नाकि-
नायकः ॥ ६० ॥ अहो मर्त्यतया तौल्य—मस्य मेऽपि गुणैः पुनः ॥ द्वयोरप्यंतरं रत्नो—पलयो-
रिव दृश्यते ॥ ६१ ॥ सेव्यतेऽयं गुणव्रातै—र्वशीभूतैरिवानिशं ॥ स्थानस्था यदि वान्यत्र । निषे-
व्यंते हि सद्गुणाः ॥ ६२ ॥ आश्रयंते श्रियः संतं । पुरुषोत्तममिवात्र मा ॥ दारिद्र्यं पुनराश्रयते ।
नूनं च पुरुषाधमं ॥ ६३ ॥ स्वकीर्तिस्पर्धयेवायं । मंत्री विश्वोदरंभरी ॥ अहं तु हतको नास्मि ।

स्वनिर्वाहेऽपि शक्तिमान् ॥ ६४ ॥ महांतोऽपि स्तुवंत्येनं । दानमानवशीकृताः ॥ दारिद्र्योपद्रवोद्विग्नं
। स्तौति मां मत्प्रियापि ॥ ६५ न ॥ एतादृक्कं महातीर्थ–मप्युद्धर्तुमयं क्षमः ॥ न कायमात्रमप्यस्मि
। स्वमुद्धर्तुमहं क्षमः ॥ ६६ ॥ अयमेव ततो मंत्री । मन्ये पुण्ये निदर्शनं ॥ ईदृग्लीलायितं यस्य
। चक्रवर्तिनिविजित्वरं ॥ ६७ ॥ इति ध्यानपरो भीमो । द्वाःस्थेन गलहस्तितः ॥ कथंचिन्मंत्रिणा वी·
क्ष्य । समाकार्यत तत्क्षणं ॥ ६८ ॥ प्रणिपत्य पुरस्तिष्ठन् । स स्वात्मीयमिवादरात् ॥ प्रश्नितस्तेन
कोऽसीति । स्ववृत्तं प्राक्तनं जगौ ॥ ६९ ॥ धन्यस्त्वं निर्धनोऽप्येवं । यो जिनेंद्रमपूजयत् ॥ धर्मबं·
धुस्त्वमसि मे । ततः साधर्मिकत्वतः ॥ ७० ॥ सश्लाघ्यकमिति स्तुत्वा । भीत्यानुपविशन्नपि ॥ स
स्वासने बलेनैव । वाग्भटेन न्यवेश्यत ॥ ७१ ॥ स दिव्यवसनामात्य—संगतो मलिनांशुकः ॥
दीप्रमाणिक्यनेदिष्ट—श्यामाश्मसमतामधात् ॥ ७२ ॥ भीमोऽध्यासीद्दरिद्रोऽपि । मानितोऽहमनेन
यत् ॥ तन्नूनं जिननाथार्चा—पुण्यतेजो विजृंभते ॥ ७३ ॥ लक्षाधीशाः क्षणे तस्मि—न्नेत्य सा·
धर्मिका मुदा ॥ इति व्याजहिरे मंत्रि—राजं राजंतमंजसा ॥ ७४ ॥ प्रजाविष्णुस्त्वमेकोऽपि । ती
र्थोद्धारेऽसि धीसख ॥ बंधूनिव तथाप्यस्मान् । पुण्येऽस्मिन् योक्तुमर्हसि ॥ ७५ ॥ पित्रादयोऽपि वं·

च्यंते । कदापि कान्यधार्मिकैः ॥ न तु साधर्मिका धर्म—स्नेहपाशनियंत्रणात् ॥ ७६ ॥ ततो य-
त्किंचन द्रव्यं । वयं भावेन दद्महे ॥ तीर्थे तदस्मिन् विन्यस्य । प्रार्थितं नः कृतार्थय ॥ ७७ ॥ ते-
षामित्यतिनिर्बंधा—न्मंत्री दाक्षिण्यनीरधिः ॥ तन्नामानि क्रमेणैव । पत्रे स्वयमलीलिखत् ॥ ७८ ॥
आनीयमाने कनको—त्करे तैर्व्यवहारिभिः ॥ सचिवार्धासनासीनो । भीमश्चित्ते व्यचिंतयत् ॥
॥ ७९ ॥ अहो ममोपयुज्येरं—श्चैत्यकर्मणि चेदिह ॥ द्रम्माः सप्तापि नीवीस्थाः । कृतार्थः स्याम-
हं तदा ॥ ८० ॥ मंदाक्षो रंकवद्वक्तु—मक्षमः सोऽतिदाक्ष्यतः ॥ विज्ञाय मंत्रिणाभाणि । ब्रूहि
त्वं किं विवक्षसि ॥ ८१ ॥ स प्राप्तैश्वर्यवत्प्रीतो । निःशंकं तमवोचत ॥ गृह्यतां चैत्यकृत्येऽस्मिन् ।
ममापि द्रम्मसप्तकं ॥ ८२ ॥ चित्ते चमत्कृतो मंत्री । तमूचे देहि तद् द्रुतं ॥ पूर्णा चैत्योद्दिधीर्षा मे
। स्वां नीवीं त्वमदा यदि ॥ ८३ ॥ तेन रोमांचितांगेन । दत्ते तस्मिन् स्वकोशवत् ॥ तन्नाम सर्व-
नामादौ । पत्रे श्रीवाग्भटोऽलिखत् ॥ ८४ ॥

तद् दृष्ट्वांजनवत्कृष्ण—मुखान् श्राद्धान् महर्द्धिकान् ॥ मंत्री स्माह कुतो यूय—मेवं विच्छाय-
तामिताः ॥ ८५ ॥ ददतोऽपि बहुद्रव्यं । समानैवास्य सर्वथा ॥ शतांशमपि नादध्वं । यन्नीव्यास्ता-

मदादयं ॥ ८६ ॥ अपवर्षिष्णवो वाचा । तया तेऽधो व्यलोकयन् ॥ मन्यतेस्मातिधन्यं स्वं । न-
म्रो जीमः स्तुतेस्ततः ॥ ८७ ॥ अथ पंचशतीं द्रम्मान् । पट्टवस्त्रत्रयं नवं ॥ अमात्यो बहुमानेन ।
तस्मै दातुं प्रचक्रमे ॥ ८८ ॥ भीमोऽप्यधादहं पुण्यं । मद्दन्नैतावता व्यये ॥ कोटिं काणकपर्देन ।
कः पटुर्गमयत्यहो ॥ ८९ ॥ ततोऽनुज्ञाप्य मंत्रींद्रं । स ययौ मंदिरं निजं ॥ पिशाच्या इव पत्नी-
तो । बिन्यन् सर्वधनार्पणात् ॥ ९० ॥ तदा तयान्ययेवोच्चैः । स्निग्धैर्वाक्यैः स तोषितः ॥ विमृष्ट-
वानसौ चित्रं । यदद्येयं प्रियंवदा ॥ ९१ ॥ यथा विषे न पीयूषं । यथा वह्नौ न नीरजं ॥ तथा
लोकंपृणं वाक्यं । न जात्वस्या मुखेऽजनि ॥ ९२ ॥ यद्येषा राक्षसीवोग्रा । सौम्यासीत्प्रेयसी मम
॥ ततोऽहं सफलं मन्ये । धन्यमद्यतनं दिनं ॥ ९३ ॥ भीमस्तामूचिवान् द्रव्य—व्ययोऽद्येति मया
कृतः ॥ सापि हृष्टा तमाचष्ट । स्वामिन् सम्यक्कृतं त्वया ॥ ९४ ॥ द्रव्यं व्ययीजवत्येव । सर्वेषां गृ-
हकर्मणि ॥ प्रासादादौ तु कस्यापि । जविष्यद्भद्रसद्गतेः ॥ ९५ ॥ तच्चाचिंति त्वया साधु । यन्ना-
त्तं मंत्रिणो धनं ॥ परकीयं धनं तीर्थे । स्वीकुर्यान्नैव धीनिधिः ॥ ९६ ॥ अथ बंधकृते धेनोः ।
स्थाणुन्यासाय जूतले ॥ खन्यमाने निधिं लेभे । जीमो धर्ममिवोत्तमः ॥ ९७ ॥ स सुवर्णमयांस्त-

त्र । चत्वारिंशद्व्रतीमितान् ॥ दीनारान् प्राप्य हृष्टोऽन्नू—दपुत्रस्तनयान् यथा ॥ ९८ ॥ अद्य यद्य·
न्मम श्रेष्टं । जातं तत्खलु पुण्यतः ॥ पुण्यात्प्राप्तो निधिरयं । पुण्यमेवोपतिष्टतां ॥ ९९ ॥ स ध्या·
त्वेत्थं निजामिक्षां । श्रावयित्वा च वल्लभां ॥ तत्प्रेरितो निधिं लात्वा । तं वाग्नटमुपागमत ॥१००॥
युग्मं ॥ उक्त्वा तत्प्राप्तिवृत्तांतं । यथास्थितमसौ सुधीः ॥ तन्निधिं दत्तवांस्तस्मै । तीर्थोद्धारार्थमाहतः
॥ १ ॥ मंत्री जगौ स्वगेहस्थं । निधिं त्वं व्ययसे कुतः ॥ स स्माहैष न मे ह्यस्ति । यन्न्यस्तो न
मया गृहे ॥ २ ॥

इत्युक्तेऽपि न गृह्णाति । मंत्री दत्ते बलाच्च सः ॥ विवादे विस्फुरत्येवं । रात्र्यागात्कौतुकादिव
॥ ३ ॥ निशि तं नीममन्येत्य । स्वपूर्वज इव स्वयं ॥ तीर्थाधिष्टायको यक्षः । कपर्द्दी प्रोक्तवानि·
ति ॥ ४ ॥ त्वयैकरूपकोपात्तैः । प्रसूनैः प्रथमो जिनः ॥ यदपूज्यत नावेन । तेनाहं तुष्टवांस्तव ॥
॥ ५ ॥ प्रियोक्तिस्ते प्रिया चक्रे । दत्तोऽयं च निधिर्मया ॥ तदिमं निर्विश स्वैर—मुक्त्वेति स ति-
रोदधे ॥ ६ ॥ नीमोऽपि प्रातरावेद्य । यक्षोक्तं सचिवाय तत् ॥ स्वर्णरत्नमयैः पुष्पै—रानर्च प्रथमं
जिनं ॥ ७ ॥ ततः स निधिमादाय । गृहं प्राप्तो महेन्यवत ॥ प्रतीतः पुण्यमातेने । स्वहिते को

दि नोद्यमी ॥ ८ ॥ इतः काष्ठमयं चैत्यं । दूरीकार्य शुभेऽहनि ॥ अमात्यः कर्तुमारंभं तत् । प्रार-
रंभददंजधीः ॥ ९ ॥ अधस्ताद्विधिना न्यस्य । वास्तुमूर्त्तिं हिरएमयीं ॥ दृढं कूर्मशिलान्यासं । सूत्र-
धारा वितेनिरे ॥ १० ॥ वास्तुविद्योक्तयुक्त्यात्र । स्थापयंत्यतिविस्तरान् ॥ अश्मानश्च स्थिरीकृतान्
। कर्मस्थायं समाहृताः ॥ ११ ॥ नित्यं नवनवाहारै—र्वस्त्राद्यैश्च प्रमोदिताः ॥ आसीना वरपल्यंके
। शिल्पिनो नैव शश्रमुः ॥ १२ ॥ नक्तं दिवापि नास्वाप्सी—न्मंत्री तच्चैत्यचिंतया ॥ आरभ्य ता-
दृशं श्रेयो । निद्रालुत्वं दधाति कः ॥ १३ ॥ यथा यथोर्ध्वमारोह—त्स प्रासादो दिने दिने ॥ पु-
एयराशिरतिस्थेयान् । मंत्रिणोऽपि तथा तथा ॥ १४ ॥ वर्षद्वयेन तच्चैत्यं । दत्तशैत्यं जगद्दृशां ॥
संपद्यतेस्म संपूर्णं । कोटीरमिव तद्गिरेः ॥ १५ ॥ तत्संपूर्णतयामात्यः । प्रमोदैरुदरंभरिः ॥ कर्तुं प्र-
चक्रमे यावत । स्वयं लोकोत्तरं महः ॥ १६ ॥ तावद्देवार्चकोऽभ्येत्य । म्लानास्यश्रीस्तमूचिवान् ॥
अस्फुटत्सकलं चैत्यं । देव केनापि हेतुना ॥ १७ ॥ पीयूषे विषवद्दुग्ध—मध्ये कांजिकपातवत ॥
हर्षे विषादवद्वदो—च्चारे दुःश्रवगालिवत ॥ १८ ॥ तद्दुःखाकरमप्युच्चै—र्वाक्यमापीय वाग्भटः ॥
भृशमुल्लासभाग्जातः । सूर्योदये पयोजवत् ॥ १९ ॥ युग्मं ॥

तदाकर्ण्य ततो दूना—स्तं तथा वीक्ष्य सेवकाः ॥ पृच्छंतिस्म कुतः स्वामिन् । विषादे प्रमदोदयः ॥ २० ॥ स तानुवाच यद्दीर्ण—मेतन्मयि विजित्वरे ॥ कारयिष्येऽधुनैवाहं । पुनस्तदिति मे मुदः ॥ २१ ॥ अन्यथा मयि यातेऽस्तं । चेद्विशीर्यंत दैवतः ॥ तदान्यः कारयेच्चैत्यं । मत्कीर्तनमपि व्रजेत ॥ २२ ॥ अथ द्वेधापि सकलान् । समाहूय स शिल्पिनः ॥ पप्रछ हेतुना केन । प्रासादोऽयं व्यदीर्यत ॥ २३ ॥ तेऽप्यधुर्निर्भ्रमं चैत्यं । भवेदन्वयनाशकृत ॥ ध्यात्वेति वयमेतत्ते । निरमासिष्म सभ्रमं ॥ २४ ॥ तदंतरा प्रविष्टः सन् । न निर्याति बहिर्मरुत ॥ तत्कोणात्स्फुटतिस्मैत—त्पक्ववालुंकवद् ध्रुवं ॥ २५ ॥ श्रुत्वा तद्वाग्भटोऽध्यासी—दन्वयो यद्यपि प्रियः ॥ तथापि सोऽयं संदिग्धः । को वेद भविता न वा ॥ २६ ॥ भूतोऽपि वा स्थिरः कस्य । सुमेरुरिव वा स्थिरः ॥ कर्ता ममोपकारं किं । भवश्रेणिकृतभ्रमेः ॥ २७ ॥ नरकंप्रति पित्रादीन् । शयमानान् कुकर्मभिः ॥ संनिकृष्टोऽपि नेष्टेऽसौ । रंकवत्त्रातुमन्वयः ॥ २८ ॥ नैवेह न परत्रापि । विना पुण्येन केनचित ॥ उपकारक्रिया कापि । क्षेत्रज्ञस्य वितन्यते ॥ २९ ॥ धर्मसंस्थानमेवास्तु । वास्तवं वस्तु तन्मम ॥ यथैतत्सहचरीभूय । नयेन्मां हि शिवंप्रति ॥ ३० ॥ किंच तीर्थसमुद्धार—कारिणां भववारिणां ॥

त्तरनादिमहीपानां । पंक्तौ नामास्त्वनेन मे ॥ ३१ ॥ विमृश्येति स धर्मार्थी । सूत्रधारान् समादि-
शत् ॥ निर्भ्रमं क्रियतां चैत्यं । पुनरुन्मूल्य मूलतः ॥ ३२ ॥ सप्तभिः कुलकं ॥

तेऽथ निर्भ्रमतां कृत्वा । ह्लित्वा च स्फुटिताः शिलाः ॥ मूलात्पुनर्नवीचक्रु—स्तच्चैत्यं वत्सरै-
स्त्रिभिः ॥ ३३ ॥ विलंके रहितास्तिस्त्रः । कोट्यो द्रव्याणि मंत्रिणः ॥ कर्मस्थायस्य लग्नानि । वदं-
त्येवं चिरंतनाः ॥ ३४ ॥ तुंगं सुधातिशुभ्रं च । प्रासादं प्रेक्ष्य तं जनः ॥ कैलाशालोकनोत्कंठां ।
कुंठयामास मानसे ॥ ३५ ॥ भ्राजंते मंडपास्तत्र । विस्तीर्णाः साधुचित्तवत् ॥ दानादिपुण्यलक्ष्मीणां
। पृथक्क्रीडागृहा इव ॥ ३६ ॥ प्रत्येकं तेषु सद्रूपाः । प्रेक्ष्यंते शालभंजिकाः ॥ तत्तत्कुतूहलालो-
का—न्निश्चला देवता इव ॥ ३७ ॥ दृष्टं शैलमदृष्टं च । तच्च वीक्ष्य निरीक्षिणः ॥ दधानाः सम-
मानंदं । वंदंते भविका हृदि ॥ ३८ ॥ विहारः सोऽजितो भाति । क्षुद्रैर्देवकुलैर्वृतः ॥ पक्षैः पार्श्व-
स्थितैः पद्म—कंदांतर्गतपद्मवत् ॥ ३९ ॥ अथ तस्य प्रतिष्ठार्थं । विज्ञप्तिं प्रेष्य पत्तने ॥ आजूहवत
संघयुतं । हेमाचार्यं स मंत्रिराट् ॥ ४० ॥ श्रीविक्रमाब्दिवार्धींदु—वत्सरे श्रावणे सिते ॥ सप्तमेऽ-
ह्नि शनौ वारे । निवेश्य प्रथमं जिनं ॥ ४१ ॥ श्रीहेमसूरिणा दत्तं । ध्वजं कुंभं च कांचनं ॥ वि-

धिवत्स प्रतिष्ठाप्य । चैत्यमूर्ध्नि न्यवेशयत् ॥ ४२ ॥ युग्मं ॥ प्रासादोऽनिललोलेन । ध्वजाग्रेण वि-
रेजिवान् ॥ उत्तंभितेन हस्तेन । तर्जयन्निव दुष्कृतं ॥ ४३ ॥ अष्टाह्निकादिकृत्येषु । विहितेष्वति-
शायिषु ॥ प्रीणितस्तच्चरित्रेण । गुरुर्वाग्भटमूचिवान् ॥ ४४ ॥ जगद्धर्माधारं सुगुरुतरतीर्थाधिकरण-
स्तदप्यर्हन्मूलं स पुनरधुना तत्प्रतिनिधिः ॥ तदावासश्चैत्यं सचिव तदतोऽभ्युधृत्य तदिदं । समं स्वे-
नोद्दध्रे भुवनमपि मन्येऽहमखिलं ॥ ४५ ॥ भूत्वा मृद्घटिताद् घटाद्यदि पुरा वातापिवैरी मुनिः ।
सप्ताप्यंबुनिधीन् किलैकचुलुना यः पानकर्मण्यपात् ॥ मंत्रिंश्चैत्यमधि त्वया विनिहितात्कल्याणरूपा-
त्ततः । सूतः पुण्यसुतः कथं तव भवांभोधिं न पातैककं ॥ ४६ ॥ अवरुह्य ततस्तीर्था—त्तदीयतट-
भूतले ॥ वाग्भटः स्थापयामास । निजनाम्ना वरं पुरं ॥ ४७ ॥ कुमारपालराट्तात—संज्ञया तत्र
चोत्तमं ॥ चैत्यं विधाप्य च श्रीम—त्पार्श्वबिंबमतिष्टिपत् ॥ ४८ ॥ चतुर्विंशतिमारामान् । निर्माप्य
परितः पुरं ॥ देवार्चनाकृते दत्वा । ग्रामानपि च तावतः ॥ ४९ ॥ गुरुसंघान्वितस्तस्मा—त्प्रस्था-
योदयनात्मजः ॥ स्वस्थानं पत्तनं प्राप । धुर्यत्वं च शुभात्मनां ॥ ५० ॥ युग्मं ॥ अथ गूर्जरनाथ-
स्य । मंत्रिणो वाग्भटस्य च ॥ आज्ञयाम्रभटो गत्वा । भृगुकच्छपुरांतरं ॥ ५१ ॥ निजतातप्रतिज्ञा-

त—पूर्तये श्रेयसेऽपि च ॥ मुनिसुव्रतनाथस्य । चैत्यमारंभयन्नवं ॥ ५२ ॥ युग्मं ॥ खन्यमाने ज-
नैस्तस्या—धस्तनद्रितिमंडले ॥ मिलतिस्म स्वयं गर्ता—मुखं हक्पटवत्ततः ॥ ५३ ॥ राक्षस्येव त-
या ग्रस्तान् । गर्तया खनतो जनान् ॥ आलोक्य तत्कुटुंबानि । गाढं परिदिदेविरे ॥ ५४ ॥ तत्रौ-
दयनिगयात—स्तद् दृष्ट्वाचिंतयच्चिरं ॥ अहो नामापि गर्ताया । नास्ति ह्यत्र बभूव किं ॥ ५५ ॥
पुण्याय प्रकृते चैत्ये । मत्युनाघं ममाप्यवत् ॥ जीविताया हृते पथ्ये । रोगिणो मरणं यथा ॥ ५६ ॥
द्युतां देहिनां कृत्वा । वृथा मृत्युनिबंधनं ॥ कथं दर्शयिताथोऽहं । कलंकीव जनान् मुखं ॥ ५७ ॥
गर्तामृतानां लोकानां । स्वजनाक्रंदविह्वलः ॥ न स्मयिष्ये ध्रुवं जीवन् । प्रमीतोऽहं स्वयं वरं ॥
॥ ५८ ॥ ततस्तावद्वधोत्पन्नं । पंकं मार्ष्टुमना इव ॥ झंपार्थं स समारोह—न्निकटं नर्मदातटं ॥
॥ ५९ ॥ पतिवर्त्मानुगा पत्नी । स्यादिति श्रुतपूर्विणी ॥ तेन पत्या निषिद्धापि । पृष्ठे भर्तुं प्रिया
स्थिता ॥ ६० ॥ मा मेति व्याहरत्स्वेव । सर्वाष्वप्येष्वनुजीविषु ॥ ददावाम्रभटो झंपां । निर्विण्ण इव
सप्रियः ॥ ६१ ॥ अधस्तात्पतितोऽप्येष । सप्रियोऽप्यक्षतांगकः ॥ अपश्यत्पुरतः कांचि—त्सुरीं ते-
जोमयीमिव ॥ ६२ ॥ अन्वयुंक्त च भद्रे त्वं । वद कासि विकाशिरुक् ॥ इहादृष्टचरा कस्मा—

दागतासीति मे वद ॥ ६३ ॥ हग्न्यामनुग्रहीत्काम्यां । पश्यंती सा तमूचुषी ॥ प्रज्ञाढ्या वत्स दे-
व्यस्मि । क्षेत्रस्यैतस्य रक्षिणी ॥ ६४ ॥ कर्मण्यस्मिंस्त्वयारब्धे । पुण्योपस्कारकारणे ॥ त्वत्सत्वस्य प-
रीक्षार्थ—मेतच्चक्रे मयाखिलं ॥ ६५ ॥ स्तुत्यस्त्वं वीरकोटीर । यस्येदृक्सत्वमुत्कटं ॥ नो चेज्जने
घनेऽप्येवं । मृते त्वद्वन्म्रियेत कः ॥ ६६ ॥ स्वेष्टसिद्धौ स एवालं । यस्य सत्त्वं महत्तमं ॥ पृथि-
व्याः को हि नाथः स्या—न्निःसीमं साहसं विना ॥ ६७ ॥ सत्वमेकमपि प्रौढं । कारुण्यानुगतं कि-
मु ॥ एवमेवार्कधामोग्रं । किं ग्रीष्मोत्तेजितं पुनः ॥ ६८ ॥ प्रीतास्मि तव मद्भक्त्या । गर्त्तागर्त्तादु
गृहादिव ॥ शुभंयवो जनाः सर्वे । निर्गताः संति पश्य तान् ॥ ६९ ॥

उक्त्वेत्यस्यामदृश्यायां । निवृत्त्याग्रजटस्ततः ॥ खनकान् खनतः क्षोणीं । पश्यतिस्म तथैव ता-
न् ॥ ७० ॥ कापि मायाकृता देवी । विमृशन्निति स स्वयं ॥ सर्वासामपि देवीनां । भोगं भूयिष्ट-
मातनोत् ॥ ७१ ॥ तत्प्रभावाग्निना दग्धे । प्रत्यूहगहने सति ॥ अष्टादशकरोत्तुंगं । तच्चैत्यं समप-
द्यत ॥ ७२ ॥ श्रीमत्सुव्रतदेवस्य । राज्ञो राज्ञ्या हयस्य च ॥ व्याधक्षताया न्यग्रोध—च्युतायाः श-
कुनेरपि ॥ ७३ ॥ नमस्कृतीर्ददानस्य । मुनेरपि च सत्तमाः ॥ मूर्तीः सोऽचीकरल्लेप्य—मयीश्चित

कैरः परैः ॥ ७४ ॥ अथोदयिनिविज्ञप्ताः । प्रतिष्ठोत्सवहेतवे ॥ पत्तनात्तत्पुरं प्रापु—र्गुरुसंघमहीभुजः
॥ ७५ ॥ विधाय शांतिकं मंत्रैः । प्रभावैरिव पंडितैः ॥ प्रा तिष्ठद्धेमसूरींद्र—र्जिनेंद्रं कूर्मलांछनं ॥
॥ ७६ ॥ मल्लिकार्जुनकोशीयं । श्रीचौलुक्यप्रसादितं ॥ कलशं विलसत्स्वर्ण—द्वात्रिंशद्घटिकामयं
॥ ७७ ॥ सांद्रं च हैमं दीप्रांशु—पट्टांशुकमयं ध्वजं ॥ यथाविधि प्रतिष्ठाप्य । गुरुश्रीहेमसूरिणा ॥
॥ ७८ ॥ स्वयमाम्रभटः संघ—नृपादिपरिवारितः ॥ तस्मिन्नारोपयच्चैत्ये । स्वं च पुण्यवतां हृदि ॥
॥ ७९ ॥ विचित्रविंशोपकं ॥ स्थित्वा स चैत्यमूर्ध्न्येव । गर्जत्यानोद्यवारिदे ॥ नरिनर्तिस्म केकीव ।
प्रमोदप्रह्विलाशयः ॥ ८० ॥ तत्र स्थितोऽसौ वृष्ट्योच्चैः । स्वर्णरत्नादि देववत् ॥ रोद्रं दारिद्र्यसंतापं
। शमयामास कस्य न ॥ ८१ ॥ निरीक्षिता पुराप्यासीद् । वृष्टिर्जलमयी जनैः ॥ तदा तु ददृशे
कैर्न । स्वर्णरत्नमयी पुनः ॥ ८२ ॥ द्वेधापि नृरिज्ञारत्वा—दानमाम्रभटार्पितं ॥ वाहीकैर्यदि वेश्मा-
नि । प्रापयामासुरर्थिनः ॥ ८३ ॥ दानायुष्टोमयज्वानं । तथा वीक्ष्याम्र हर्षुलाः ॥ इत्युपश्लाघयंति-
स्म । कविवृंदारकास्तदा ॥ ८४ ॥ स्रष्टुर्विष्टपसृष्टिनैपुणमयात्पाणेरपि त्वत्करे । शक्तिः काप्यतिशा-
यिनी विजयते यद्याचकानां तनौ ॥ जाले तेन निवेशितामतिदृढां दारिद्र्यवर्णावलीं । दानैराम्रन-

दासभूरिविभवैर्निर्मापि मूलादपि ॥ ७५ ॥ ततोऽवतीर्य राजर्षि । प्रणम्य वाग्भटानुजः ॥ आरात्रिकं
समारेभे । कर्तुं त्रिभुवनप्रभोः ॥ ७६ ॥ प्रथमं पृथिवीभर्त्रा । भ्रात्रा सामंतमंडलैः ॥ संघाधिपैस्त-
तः श्राद्धै—र्मातृभगिनीसुतादिभिः ॥ ७७ ॥ श्रीखंडमिश्रघसृणै—र्नवांगार्चापुरस्सरं ॥ भालस्थले मु-
हुः क्लृप्त—भाग्यलब्धविशेषकः ॥ ७८ ॥

कंठेऽवरोपितानेक—स्मेरपुष्पचतुःसरः ॥ निरीक्षितमुखांभोजो । निःस्पृहैरपि सस्पृहं ॥ ७९ ॥
तुरंगांश्चारभट्टेभ्यः । शेषेभ्यः कनकोत्करान् ॥ तदभावे परिष्कारा—नर्पयन्निजदेहतः ॥ ८० ॥
धृत्वा कराभ्यां भूपेन । बलादपि विधापितं ॥ आरात्रिकविधिं चक्रे । स धार्मिकशिरोमणिः ॥ ८१ ॥
पंचभिः कुलकं ॥ पृष्टतिस्म च भूपाल—मत्युत्तालतया कुतः ॥ एतत्कृत्यं करे धृत्वा । देवानाहम-
कारिषि ॥ ८२ ॥ स्मेरः स्माह स यद्भवंस्त्वं । त्वद्देहाभरणान्यपि ॥ तद्द्वारेण निषिद्धोऽसि । दद्या-
त्सर्वमसाविति ॥ ८३ ॥ धीरारूढरसत्वेन । विस्मृत्यैव निजं यतः ॥ दाना च भूतकारश्च । मूर्धान-
मपि यच्छतः ॥ ८४ ॥ कूर्मः क्षुद्रतमोऽपि लांछनमिषाद्यत्पादपद्मद्वयं । सेवित्वेव बभूव भूमिवलयं पृ-
ष्ठे विवोढुं दृढः ॥ अश्वोज्जीवनया धुरीणपदवीं कारुण्यभाजां श्रितः । स श्रीमान् मुनिसुव्रतो जि-

नपतिर्दत्तां श्रियं श्रेयसीं ॥ ९५ ॥ इत्यभिष्टुत्य तीर्थेशं । कृतसच्चैत्यवंदनं ॥ बभाणाम्रभटः संघा–
ध्यक्षं श्रीहेमसूरिराट् ॥ ९६ ॥ किं कृतेन न यत्र त्वं । यत्र त्वं किमसौ कलिः ॥ कलौ चेद्भवतो
जन्म । कलिरस्तु कृतेन किं ॥ ९७ ॥ दानधर्मोऽतिवृद्धत्वा—त्कृशिमानमधिश्रितः ॥ तव हस्ताव
लंबेन । धीमन् विहरतां महीं ॥ ९८ ॥ गिरानया गुरुमुखो—द्गीर्णयाम्रभटं तदा ॥ निरीक्षांचक्रि·
रे तत्र । महीयांसोऽपि विस्मिताः ॥ ९९ ॥ सत्कृतास्तेन सर्वेऽपि । गुरुभूपादयस्ततः ॥ स्तुवंतस्त·
द्गुणग्रामं । स्वस्थानं पत्तनं ययुः ॥ १०० ॥ अथाकस्मिकदोषेण । भृगुकच्छपुरस्थितः ॥ बभूवाम्रभ·
टो मृत्यु—दशां प्राप्त इवोच्चकैः ॥ १ ॥ तं तथा प्रेक्ष्य सर्वस्मिं—श्चिंतातुरे परिछदे ॥ सत्वरश्चि·
कित्सयामासु—र्विदग्धा इत्यनेकधा ॥ २ ॥ सन्निपातादिदोषघ्नान् । वैद्याः प्रददिरे रसान् ॥ मांत्रि·
का मंत्रपूताभि—रद्भिराछोटयन्मुहुः ॥ ३ ॥ ज्योतिर्विदो विदधिरे । यथोक्तं ग्रहशांतिकं ॥ द्विजा
निर्ममिरे होमं । पठंतो वैदिकी ऋचः ॥ ४ ॥ अवतारविदः पात्रा—वतारांस्ते निरेतमां ॥ उपश्रु
तीर्जगृहिरे । बंधवः स्नेहसिंधवः ॥ ५ ॥ वृद्धाः स्वगोत्रदेवीना—मुपयाचितमादधुः ॥ योगिनीनां
चतुःषष्टे—श्चक्रिरे बलिमर्चकाः ॥ ६ ॥ परमैतैः प्रतीकारै—र्गुणस्तदा न कोऽप्यभूत् ॥ यथा नि·

दग्धबीजस्य । धाराधरपयोभरैः ॥ ७ ॥ ततो नैराशमापन्ना । तस्य पद्मावती प्रसूः ॥ सम्यगाराधयां-
चक्रे । देवीं पद्मावतीं निशि ॥ ८ ॥ प्रत्यक्षीभूय साचख्यौ । पुत्रस्ते चैत्यमूर्धनि ॥ नृत्यन् सल्लक्ष-
णत्वेन । जग्रसे योगिनीगणैः ॥ ९ ॥ द्वात्रिंशल्लक्षणं पुण्य—परं चेमा दुराशयाः ॥ सापत्नेयं
सपत्नीव । न सहंते कदाचन ॥ १० ॥ एताश्छन्नाः स्थिता आसन् । हेमाचार्येऽत्र तस्थुषि ॥ त
स्मिन् गते पुनर्व्यक्ती—भूता नैःस्व्ये यथापदः ॥ ११ ॥ एतद्दोषं च निष्पेष्टुं । स शक्तोऽस्ति गु
रुः स्वयं ॥ खंडीकर्तुं तमस्कांडं । चंडो मार्तंड एव हि ॥ १२ ॥ आदिश्येति प्रयातायां । देव्यां
तत्क्षणमेव सा ॥ पद्मावती जनं प्रैषी—त्पत्तनं गुरुहेतवे ॥ १३ ॥ सायं प्राप्तात्जनात्तस्मा—त्सर्वं
ज्ञात्वा स सूरिराट् ॥ सहादाय महादक्षं । यशश्चंद्राभिधं गणिं ॥ १४ ॥ विद्याधर इव व्योम्ना ।
तूर्णं भृगुपुरं गतः ॥ विलोक्याम्रभटं तस्य । ज्ञातवान् देव्युपद्रवं ॥ १५ ॥ गणिस्तज्जननीं प्रोचे ।
बलिपुष्पादिसंयुतं ॥ उपास्मत्प्रेषयेर्मध्य—रात्रे कंचिन्निजं नरं ॥ १६ ॥ वाक्ये तयादृते तस्मिन् ।
सूरिः स्वाश्रयमाश्रयत ॥ निशीथे प्राहिणोत्सापि । प्रोक्तवस्तुयुतं जनं ॥ १७ ॥ तेन सार्धं गणियु-
त—श्चचाल स्वालयात्प्रभुः ॥ स्वामिन्याः सर्वदेवीनां । सैंधव्याः सदनंप्रति ॥ १८ ॥ दुर्गतो निर्ग-

तो बाह्ये । सोऽपश्यच्चटकव्रजं ॥ ज्ञापयंतमपि क्रूरै—श्वगच्छगितिशब्दितैः ॥ १९ ॥ ज्ञात्वा तच्चो-
गिर्नादाख्यं । तन्मुखे गणिना बलिं ॥ प्रक्षुन्यवेशयत्सोंत—र्दभे चटकवत्ततः ॥ २० ॥

तदग्रेऽथ व्रजन् सूरिः । कृशानुकपिशाननं ॥ कपिमंडलमैक्षिष्ट । भक्षणाय प्रसृत्वरं ॥ २१ ॥
कृत्रिमं तदपि ज्ञात्वा । मूत्रैर्मंत्राक्षरैरिव ॥ अक्षतैस्ताडयामास । स तं तत्र कपिव्रजं ॥ २२ ॥ त-
तोऽपि परतो गच्छन् । स सैंधव्या गृहांतिके ॥ मार्जारवृंदमद्राक्षी—त्क्रूरं कीनाशदासवत् ॥ २३ ॥
शोणाश्मसूननिक्षेपा—द्विद्राव्य तदपि प्रभुः ॥ तस्थिवांस्तोरणे देव्या । विद्यानिधिरिव स्वयं ॥ २४ ॥
सूरिमंत्रं हृदि ध्यात्वा । समादिष्टोऽथ सूरिणा ॥ यशश्चंद्रगणिः प्रोचे । सैंधवीं देवतांप्रति ॥ २५ ॥
जालंधरप्रभृतिभिः । खेचरैरभ्यर्चितक्रमः ॥ स्वयं पद्भ्यां समायातो । हेमाचार्यस्त्वदंतिकं ॥२६॥ आ-
गत्य संमुखं तस्य । भक्त्यातिथ्यमाचर ॥ ईदृग्लोकोत्तरं पात्रं । पुण्यैरेवातिथिर्भवेत् ॥ २७ ॥ त-
न्निशम्य सितनर—प्रभा जिह्वांचलं मुखात् ॥ आकृष्य बालवद्देवी । तत्संमुखं व्यलोकयत ॥२८॥
स तथा तां विकुर्वाणा—मूचे रेरे दुराशये ॥ गुरुमप्यवजानासि । किं न जानासि तद्बलं ॥२९॥
यदि कारुण्ययोगेन । साम त्वां काममन्यथा ॥ तदा मामपि दुष्टाद्रि—कुलिशं ज्ञापयस्यरे ॥३०॥

निर्भर्त्स्यैवं गणिः क्रुद्धो । हुंकारांस्त्रीनमुंचत ॥ अकांडजगद्ब्रह्मांड—स्फारखात्कारदारुणान् ॥ ३१ ॥
तेनादिमेन सैंधव्या । प्रासादः समकंपत ॥ आमूलचूलमुत्कल—वात्यांदोलितशालवत् ॥ ३२ ॥
द्वितीयेन च सर्वोऽपि । तदंतःस्थः सुरीगणः ॥ भीत्यातिष्ठच्च निश्चेष्ट—श्चित्रन्यस्त इवोच्चकैः ॥३३॥
तृतीयेन पुनर्देवी । सैंधवी सा ज्वरादिव ॥ कंपोत्पत्य निजस्थाना—द्भ्रमश्चक्रे च तत्क्रमौ ॥ ३४ ॥
किं करोमीति जल्पंतीं । गणिस्तां स्माह मद्गुरो ॥ भक्तिं कुरु सुरीवर्गा—द्विमोच्याम्रभटं द्रुतं ॥ ३५ ॥ सा जगौ योगिनीवर्गः । क्षुधार्तस्तं सहस्रधा ॥ विभज्य खंडशश्चक्रे । द्रुमं तीक्ष्णकुठारवत् ॥ ३६ ॥ मोचये तं कथं तस्मा—न्मोचितोऽपि न जीविता ॥ क्लिष्टोऽपि सिंहदंष्ट्रायाः । सारंगः क्षेमवान् किमु ॥ ३७ ॥ अभाषिष्ट गणिर्भूयो । भवत्वेवं पुनर्यदि ॥ अस्मात्स्थानान्निजं स्थानं । प्रयांतु त्वं प्रगल्भसे ॥ ३८ ॥ तेन वाक्येन सा त्रस्ता । निर्घोषमतिभीषणं ॥ विहस्ता सिंहनादेन । हस्तिनीव वितेनुषी ॥ ३९ ॥ चकंपे काश्यपी तेन । शैलशृंगाणि तुत्रुटुः ॥ चिक्षिपुश्च ततः क्रोडे । सलिलानि सरस्वतां ॥ ४० ॥ अपनिद्रश्च सर्वोऽपि । भृगुतुंगगतो जनः ॥ हृदि कल्पांतविभ्रांत—पाथोधिभ्रममानशे ॥ ४१ ॥

नीरवस्तेन शब्देन । योगिन्योऽपि विमुच्य तं ॥ तत्रैयुः स्वामिनीपार्श्वे । रक्ष रक्षेति जल्पि-
काः ॥ ४२ ॥ स्तंभितास्ता मंत्रशक्त्योच्चै—स्ताः समस्ता जगौ गणिः ॥ मुंचतामुत्कटं पापा । नो चे-
त्प्राणान् विमोक्ष्यथ ॥ ४३ ॥ शरीरे कीलकेनेव । वचसा तेन पीडिताः ॥ मुखे क्षिप्त्वांगुलीः प्रो-
चु—स्तमां विक्रमिणं गणिं ॥ ४४ ॥ अस्मकाभिर्भवद्वाक्या—त्सर्वथाप्येष तत्यजे ॥ अत्रार्थे द-
क्षिणः पाणिः । प्रतिभूरिव गृह्यतां ॥ ४५ ॥ महात्मनोऽस्य नामापि । कदाप्याददमहे यदि ॥ चंडे-
न भालखंडेन । त्वया दंड्यास्तदा वयं ॥ ४६ ॥ तनुस्तंभेन नः प्राणाः । न निर्यांति न यांति च ॥ त-
त्प्रसद्य गतावद्य । सद्योऽस्मान्मोचयामुतः ॥ ४७ ॥ रेरे हताशाश्चेत्स्वांग—मात्रेणेदृग्व्यथास्ति वः
॥ तदा प्राणप्रहाणे सा । परेषां कीदृशी भवेत् ॥ ४८ ॥ प्राणत्राणं महत्पुण्यं । महत्पापं च तद्व-
धः ॥ इति श्रुतोदितं तत्त्वं । विज्ञायात परं हृदि ॥ ४९ ॥ अन्येऽपि जंतवो हंत । हंतव्या न क-
दाचन ॥ त्रिशिष्यार्हतधर्मस्थाः । सर्वलोकहितावहाः ॥ ५० ॥ शिक्षयित्वेति गणिना । मोचिताः
[illegible] ॥ नत्वा प्रभुपदद्वंद्वं । देव्यः स्वस्थानमासदन् ॥ ५१ ॥ चतुर्भिः कलापकं ॥ तदैवाम्र-
भटः सोऽभू—त्सर्वक्लेशविवर्जितः ॥ तादृशोऽस्ति गुरुर्यस्य । तत्स्वास्थ्ये किमु कौतुकं ॥ ५२ ॥ हे-

माचार्योऽप्यथो प्रात—स्तस्मादुदयनात्मजात ॥ विधाप्य सर्वदेवीनां । भोगं साहस्रिकं शुभं ॥५३॥
नत्वा नूतनचैत्यस्थं । जिनेशं मुनिसुव्रतं ॥ पद्भ्यां विहरमाणश्च । पुनः पत्तनमागमत ॥ ५४ ॥
अकस्माद्विहृतं कुत्रे—प्यनुयोगपरं नृपं ॥ उक्त्वाभ्रभटवृत्तांतं । भृशं व्यस्मेरयत्प्रभुः ॥ ५५ ॥ दा-
नादिकृत्यसुरभीकृतचित्तवृत्ति—र्निर्मापयन् स्वयमनेकविधान् विहारान् ॥ तत्कारिणां प्रवणयंश्च स-
हायभावं । चौलुक्यभूभृदिति संचिनुतेस्म पुण्यं ॥ ५६ ॥ इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविर-
चिते परमार्हतश्रीकुमारपालभूपालचरित्रे कृपासुंदरीपरिणयदानाद्युपदेशचैत्यनिर्माणादिवर्णनो ना-
माष्टमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ नवमः सर्गः प्रारभ्यते ॥

व्याख्यायमाने श्रीवीर—चरितेऽथ नृपंप्रति ॥ देवाधिदेवप्रतिमा—वृत्तमित्यूचिवान् प्रभुः ॥
॥ १ ॥ विहरन् भगवान् वीरः । पुरे राजगृहेऽन्यदा ॥ समुनिः समवासार्षी—त्सुतीर्थ इव जंगमः
॥ २ ॥ तत्रायपौ महामात्यः । पुत्रः श्रेणिकभूपतेः ॥ तं नत्वाप्रश्नयद्वीरं । राजर्षिः कोंतिमः प्रभो

॥ ३ ॥ उदायननृपे प्रोक्ते—ऽर्हता नृपः स पृष्टवान् ॥ कोऽसौ तस्मै ततः स्वामी । तच्चरित्रमिदं जगौ ॥ ४ ॥ सिंधुसौवीरमध्येऽस्ति । शस्तं वीतभयं पुरं ॥ यस्याकुतोभयत्वेन । सान्वयं नाम शोभते ॥ ५ ॥ रात्रौ यत्र जिनेंद्रमंदिरशिरःकल्याणकुंभावली । दिक्शाखाविततस्य नीलिमगुणाविर्भूतपत्रस्थितेः ॥ हर्षस्फारकतारकव्यतिकरप्रोद्यत्प्रसूनद्युते—र्व्योमद्रोः परिपाकपिंगलफलप्रागल्भ्यमभ्यस्यति ॥ ६ ॥ आसीदुदायनक्ष्माप—स्तस्मिन्नुदयनः किल ॥ आकारेणैव न वरं । तेजसापि वचोऽतिगः ॥ ७ ॥ सिंधुसौवीरमुख्याब्य—देशषोडशकाधिपः ॥ त्रिषष्टित्रिशतीवीत—भयादिपुरपालकः ॥ ८ ॥ किरीटिभिर्दशनृपै—र्महासेनमुखैः श्रितः ॥ सेनानीरिव दिक्पालै—रजय्योऽजनि यो द्विषां ॥ ९ ॥ युग्मं ॥ सुता चेटकनृपस्य । सम्यक्त्वामोदमेदुरा ॥ अभूत्तद्वल्लभा नाम्ना । देहेनापि प्रभावती ॥ १० ॥ अभिचिनश्च्युतो जज्ञे । यौवराज्यविराजितः ॥ भ्राजिष्णुर्भानुवन्नाम्ना । केशीव भगिनीसुतः ॥ ११ ॥

इतश्चंपापुरीत्यस्ति । तत्र स्त्रीकेलिलोलहृत् ॥ आसीत्कुमारनंदीति । स्वर्णकृद्धिनवाद्भुतः ॥ ॥ १२ ॥ असौ पंचशतीं हेम्नो । दायंदायं सुलोचनाः ॥ परिणीय क्रमात् पंच—शतानि सममेल-

यत् ॥ १३ ॥ ताभिरुद्दामकामाभि—र्वामाभिः सह सोऽन्वहं ॥ विललासानुरक्ताभिः । करिणीभि
र्द्विपेंऽवत् ॥ १४ ॥ अन्यदा पंचशैलाख्य—द्वीपतः शक्रशासनात ॥ श्रीनंदीश्वरयात्रार्थं । चेलतु-
र्व्यंतरस्त्रियौ ॥ १५ ॥ विद्युन्माली तदा पंच—शैलेशस्तु परिच्युतः ॥ अथ नौ कः पतिर्भावी—त्येवं
ते अपि दध्यतुः ॥ १६ ॥ ततो व्योम्ना व्रजंतीभ्यां । ताभ्यां चंपापुरीस्थितः ॥ पंचपत्नीशतैः क्रीड
न् । हेमकृत्स व्यलोक्यत ॥ १७ ॥ चिंतितं च वृथा लोके । कामोऽनंग इति श्रुतः ॥ यतोऽयमेव
प्रत्यक्षः । वपुष्मानिव राजते ॥ १८ ॥ स्वरूपदर्शनेनायं । व्युद्ग्राह्यः प्रियवांछया ॥ ध्यात्वेत्थमव-
तीर्णे ते । तूर्णं व्योम्नस्तदंतिके ॥ १९ ॥ अनयोः कोऽपि लावण्य—रसः स्फुरति वर्ष्मणि ॥ लिह्य-
ते नयनाभ्यां यः । क्षीयते न च सर्वथा ॥ २० ॥ ध्यात्वेति स्वर्णकारेण । ते पृष्टे के युवामिह
॥ आवां हासाप्रहासाख्ये । देव्याविद्धमवोचतां ॥ २१ ॥ युग्मं ॥ भोगार्थं प्रार्थिते तेन । ते पुन-
स्तं जजल्पतुः ॥ पंचशैलाभिधं द्वीप—मागच्छेरस्मदिच्छया ॥ २२ ॥ उक्त्वेति गतयोर्देव्योः । स्मरस्मे-
रोऽथ हेमकृत् ॥ तत्राप्युपायमध्यासी—द्गन्तुं निर्धनवच्चिरं ॥ २३ ॥ स्वर्णौघमुपदीकृत्य । स्वाभिप्रायं
प्रकाश्य च ॥ चंपानाथाय तेनेद्धं । पटहः समघोष्यत ॥ २४ ॥ नयेद्यः पंचशैलं मां । स्वर्णकोटिं

लभेत सः ॥ श्रुत्वा तच्च जरन् कोऽपि । पटहं लोलुपोऽस्पृशत् ॥ २५ ॥ तावत्स्वर्णं ततो लात्वा ।
स्वसुतेभ्यः समर्प्य च ॥ श्रुतपूर्वी स तन्मार्गं । यानपात्रमसज्जयत् ॥ २६ ॥ वार्यमाणोऽपि पत्न्या-
द्यै—र्वृद्धेन सह हेमभृत् ॥ यानपात्रमधिष्ठाय । प्रतस्थेंबुधिवर्त्मना ॥ २७ ॥ आनेत्रप्रसरं विश्व—
मजलमेव विलोकयन् ॥ तदा विवेद निःशेषं । विश्वं तन्मयमेव सः ॥ २८ ॥ कियद्दूरं गते वृद्ध
—स्तमूचे जलधेस्तटे ॥ इमं हृदं समुत्पन्नं । वटं स्थूलं विलोकय ॥ २९ ॥ अस्याधस्ताद्व्रजत्य
स्मिन् । शाहित्रे त्वं करद्वयं ॥ विस्तार्य कपिवत्सद्यो । विलगेरत्र पादपे ॥ ३० ॥ अत्रायास्यंति भा-
रंडा—स्त्रिपदाः पंचशैलतः ॥ सुप्तेषु तेषु कस्यापि । चरणे मध्यवर्तिनि ॥ ३१ ॥ विलग्य दृढमु-
ष्ट्या त्वं । तिष्ठेर्निश्चेष्टवन्निशि ॥ नेष्यंति पंचशैलं त्वा—मुड्डीनाः प्रातरेव ते ॥ ३२ ॥ युग्मं ॥ क-
रिष्यसे न चेदेवं । तर्हि मंक्षु विनंक्ष्यसि ॥ महावर्त्तांतरे यानं । यत्पतिष्यत्यतः परं ॥ ३३ ॥ चक्रे
कुमारनंदी त—त्तं च भारंडपक्षिणः ॥ निन्यिरे पंचशैलं द्रा—गहो बुद्धिविजृंभितं ॥ ३४ ॥ तत्र
हासाप्रहासे ते । दृष्ट्वा दिव्यं च वैभवं ॥ प्रमोदग्रहिलः सोऽभूत् । स्वः प्रागुत्पन्नदेववत् ॥ ३५ ॥
तत्साहसेन विस्मेरे । प्रीत्या देव्यौ तमूचतुः ॥ भद्रानेन तवांगेन । नावां भाग्ये घटावहे ॥ ३६ ॥

चिकामयिषसे नौ चे—त्तदा वह्न्यादिमृत्युना ॥ पंचशैलाधिपो भूत्वा । समागच्छ त्वमुत्सुकः ॥३७॥
श्रुत्वा तत्स्वर्णभृत्प्रोचे । जज्ञेऽहं युवयोः कृते ॥ जन्मात्मेवोभयभ्रष्टो । दैवस्याहो विवल्गितं ॥ ३८ ॥
ततो हासाप्रहासाभ्यां । निमज्ज्य करुणार्णवे ॥ उत्पाट्य बालवच्चंपा—वनेऽमुच्यत हेमकृत ॥३९॥
क्व गतोऽसीति पृष्टः स—न्नुक्त्वा स्वं चरितं जने ॥ स कामार्त्तः समारेभे । मर्तुं देव्यर्थमग्निना ॥
॥ ४० ॥ तद् ज्ञात्वा नागिलो मित्र—मूचे तं किं तनोष्यदः ॥ अज्ञानमरणं नैव—मुचितं सु
धियस्तव ॥ ४१ ॥

भोगमात्रकृते कस्मा—त्त्वं हारयसि मर्त्यतां ॥ भवेद्भवे भवे भोगो । मर्त्यजन्म क्वचित्पुनः
॥ ४२ ॥ भोगार्थमपि निर्माहि । धर्मं स्वर्मणिवैभवं ॥ अर्थकामौ यथा कामं । दत्वा दत्ते च यः
शिवं ॥ ४३ ॥ किंच स्त्रियां यथा रागः । स्याच्चेत्पुण्यश्रियां तथा ॥ तदा तव भवेदेव । सा मु-
क्तिरपि कामुकी ॥ ४४ ॥ एक एव ध्रुवं रागः । शुभाशुभतयाश्रितः ॥ सद्यः संपद्यते हेतुः । शि-
वस्य च भवस्य च ॥ ४५ ॥ सुहृदा बोधितोऽप्येवं । हेमकृत्स निदानतः ॥ इंगिनीमरणं कृत्वा । पं-
चशैलाधिपोऽजनि ॥ ४६ ॥ विद्युन्मालीति सोऽप्याख्यां । वहंस्ताभ्यां सहानिशं ॥ रेमे हासाप्रहा-

सान्यां । कृतकृत्य इवोचके ॥ ४७ ॥ मित्रस्य तादृग्मरणा—न्नागिलोऽपि विरक्तधीः ॥ श्रित्वार्हतं
व्रतं कल्पे । द्वादशे त्रिदशोऽभवत ॥ ४८ ॥ अथ नंदीश्वरे यात्रां । कर्तुं देवाः प्रतस्थिरे ॥ हा-
साप्रहासावकृतां । गातुं तत्रासनात्पुरः ॥ ४९ ॥ विद्युन्माली पतिस्ताभ्यां । प्रेरितः पटहग्रहे ॥ रुषा
ममापि किं कश्च—दाज्ञादायीत्यवोचत ॥ ५० ॥ ततः स रोषहुंकार—भारिणोऽस्यालगत्गले ॥
आनियोगात्स्वदुःकर्मो—दयेन पटहः स्वयं ॥ ५१ ॥ घरट्टमिव तं लग्नं । दूरीकर्तुं निजाङ्गात् ॥ स
हीणोऽप्यशकन्नैव । धिग्धिग्दुःकर्मचेष्टितं ॥ ५२ ॥ कर्मेदमत्र जातानां—मेवं पटहवादने ॥ त्रपां
त्युक्त्वा तदीशेनं । वादयन् पुरतो भव ॥ ५३ ॥ इत्थं प्रबोधितः स्त्रीभ्यां । स सुरश्चक्रिवांस्तथा ॥
कर्मणां दुर्विपाको हि । दुर्निवारोऽब्धिपूरवत् ॥ ५४ ॥ स नागिलात्मा देवोऽपि । व्रजन् देवैर्द्दहा-
ध्वनि ॥ दृष्ट्वा तमानकधरं । मित्रं ज्ञानेन बुद्धवान् ॥ ५५ ॥ वस्तुं पार्श्वस्थिते तस्मिं—स्तत्तेजो
नानुविंसवत् ॥ अक्षमो वीक्षितुं दृग्भ्यां । विद्युन्माली पलायितः ॥ ५६ ॥ मायामयमिवात्मीयं ।
मह्रो हृत्वा म निर्जरः ॥ पंचशैलाधिपं प्रोचे । पश्य कोऽहं पुरस्तव ॥ ५७ ॥ स तं विस्पष्टमाचष्ट ।
शक्रसामानिको महान् ॥ कश्चित्त्वं वर्तसे देवः । परं नामादि वेद्मि न ॥ ५८ ॥ स स्वं नागिल-

रूपं त—द्विधायोवाच पश्य भोः ॥ अहं ते प्राक्तनं मित्रं । किं मां परिचिनोषि न ॥ ५९ ॥ मया त्वं वारितोऽप्यग्नि—मरणेन निदानतः ॥ ईदृग्विडंबनापात्रं । पंचशैलाधिपोऽभवः ॥ ६० ॥ अहं त्वार्हद्धर्मज्ञ—स्तदुपज्ञव्रतं श्रितः ॥ विपद्य त्रिदशोऽभूव—मीदृग्विभववान्सुरः ॥ ६१ ॥ वरं दुष्टाहिना दष्टो । न तु कामाहिना जनः ॥ पूर्वो हि कर्हिचित्सज्जो । भवेन्नैवापरः पुनः ॥ ६२ ॥ स्मरापस्मार एवाय—मसाध्यो भिषजामपि ॥ यो वैकल्यं विधायांते । नृणां हरति जीवितं ॥ ६३ ॥ श्रुत्वा तदनुशय्योच्चै—र्विद्युन्माली तमालपत् ॥ सखे प्रसद्य मां शाधि । यथा स्यामायतौ सुखी ॥ ॥ ६४ ॥ स स्माह श्रीमहावीरो । गृहिवेषो गृहेऽधुना ॥ भूत्वा यतीव भावेन । कायोत्सर्गेण तिष्ठति ॥ ६५ ॥ दिव्यां तन्मूर्तिमाधाय । श्रद्धालोः कस्यचित्करे ॥ अर्चार्थमर्पयेस्तेन । यथा ते स्यात्पुरः सुखं ॥ ६६ ॥

रत्नाष्टापदरूप्यविद्रुमशिलाश्रीखंडदार्वादिभि—र्मूर्त्तिं स्फूर्तिमयीं विधापयति यः श्रद्धाभरादर्हतां ॥ तस्मान्नश्यति भीरुकेव कुगतिः स्निग्धेन संसेवते । शक्रश्रीर्वशितेव मुक्तिरमणी तत्संगमं वांछति ॥ ६७ ॥ विद्युन्माली तदुक्तं त—त्स्वीकृत्य शुभमार्गवत् ॥ यात्रायां परिपूर्णायां । चलितः

स्वगृहंप्रति ॥ ६८ ॥ निरीक्ष्य दात्रियकुंड—ग्रामेऽस्मान् प्रतिमाजुषः ॥ लात्वा च हिमवच्छैल—त·
टाद्गोशीर्षचंदनं ॥ ६९ ॥ असमन्मूर्तिं यथादृष्टां । कृत्वा चाद्भुतरूपणां ॥ चिक्षेप संपुटे शेप—
श्रीखंमपरिनिर्मिते ॥ ७० ॥ विच्छिर्विशेषकं ॥ लात्वा समुत्समुद्रं तं । व्योम्ना गछन् ददर्श सः ॥
अब्धौ भ्रमंतं पएमासीं । पोतमुत्पातवायुना ॥ ७१ ॥ इंद्रजालवदुत्पातं । तं संहृत्य स निर्जरः ॥
सांयात्रिककरे दत्वा । समुद्रमिदमूचिवान् ॥ ७२ ॥ अत्रास्ति प्रतिमा दिव्या । गृहीत्वैनां स्वकोश·
वत ॥ सिंधुसौवीरदेशस्थं । गछेर्वीतभयं पुरं ॥ ७३ ॥ स्थित्वा त्वं श्रीपथे तत्र । कुर्वीथाश्चेति घो·
पणां ॥ गृह्यतां गृह्यतां देवा—धिदेवप्रतिमां जनाः ॥ ७४ ॥ ततस्तस्मिन् गते देवे । स वणिक्
तत्प्रभावतः ॥ सुखं तत्पुरमासाद्य । तथैव विदधेऽखिलं ॥ ७५ ॥ तत्र तां घोषणां श्रुत्वा । नृपः
स्वयमुदायनः ॥ तपस्विभक्तः संप्राप्तो । विप्राद्या अपि नृरिशः ॥ ७६ ॥ स्मारंस्मारं स्वदेवपि—प·
ब्रह्मोनिजजनार्दनान् ॥ तीव्रधारैः कुठारैस्ते । विभिदुस्तं समुद्गकं ॥ ७७ ॥ कठोरा अप्यभज्यंत । सा·
गु तस्मिन्नश्मनीव ते ॥ न चासौ विभिदे किंचि—त्कचिद्वज्रमिव स्वयं ॥ ७८ ॥ गर्जतस्तत्र ये
प्राप्ताः । सप्रभावा द्विजादयः ॥ प्रदोषा इव तेऽब्रुवन् । गवलश्यामलाननाः ॥ ७९ ॥ नृपे तथैव

तत्रस्थे । जाते च दिनयौवने ॥ दिदृक्षुरिव तच्चित्रं । व्योममध्यं श्रितो रविः ॥ ८० ॥ विज्ञाय राज्ञो वेलाति-क्रमं भुक्तौ प्रभावती ॥ तदाह्वानाय दासीं स्वा-मादिदेश प्रियंवदां ॥ ८१ ॥ त-त्कौतुकनिरीक्षार्थं । राज्ञाज्ञप्ता तया द्रुतं ॥ प्रभावत्यपि तत्रागा-त्सर्वमूचे प्रियश्च तत् ॥ ८२ ॥ तत् श्रुत्वा सावदद्देवा-धिदेवा नेश्वरादयः ॥ किंत्वर्हन् देवदेवेंद्र-वृंदवंद्यपदत्वतः ॥ ८३ ॥ तद-वश्यं भवित्रीह । प्रतिमार्चोचितार्हती ॥ अत एव व्यनक्त्येषा । न स्वमीशादिसंस्मृतेः ॥ ८४ ॥ तदहं व्यंजयिष्यामि । मूर्तिं जैनीमिति ध्रुवं ॥ उक्त्वार्चयत्समुद्गं सा । चंदनोरुसुमादिभिः ॥ ८५ ॥ उच्चैरूचे च देवेषु । त्वं मुख्योऽसि जगत्पते ॥ ग्रहेषु पद्मिनीनाथा-दपरः प्रवरः किमु ॥ ८६ ॥ यद्यहं तव धर्मेऽस्मि । सुलसेवानुरागिणी ॥ तदा प्रसद्य मे देहि । निधिवन्निजदर्शनं ॥ ८७ ॥ एवं तद्गदितैर्वाक्यै-र्भानवीयैः करैरिव ॥ भवतिस्म समुद्गोऽसौ । व्याकोशः पद्मकोशवत् ॥ ८८ ॥ अम्लानमाल्ययुग्दीप्रा-लंकारा तत्र सार्हती ॥ प्रतिमा प्रकटा जज्ञे । लक्ष्मीः क्षीरोदधौ यथा ॥ ॥ ८९ ॥ तदार्हतमतस्यासी-त्प्रभावत्या प्रभावना ॥ यथा कुमुदखंडस्य । कौमुद्यातिप्रफुल्लता ॥ ॥ ९० ॥ तादृक्प्रभावसौरभ्यं । दृष्ट्वा जैनमतांबुजे ॥ उदायनः क्षितिपति-रन्वरज्यद् द्विरेफवत्

॥ ८१ ॥ तं पोतवाणिजं सम्य—क्सत्कृत्यात्मबंधुवत् ॥ उत्सवेन गृहेऽनैषी—त्प्रतिमां तां प्रभाव
ती ॥ ८२ ॥ मन्वाना हृदि तां साक्षा—त्परमात्ममयीमिव ॥ अंतरंतःपुरं न्यस्य । पूजयामास सा·
दरात् ॥ ८३ ॥

तस्याः पुरः स्वरग्राम—मूर्छनाद्यतिबंधुरं ॥ उपवीणयति प्रीत्या । स्वयं पत्यावुदायने ॥ ८४ ॥
शीर्षादिनावसुभग । सचतुःषष्टिहस्तकं ॥ द्वात्रिंशदंगहारं च । शताष्टकरणांचितं ॥ ८५ ॥ रसाद्य·
नुगुणं लास्य—तांडवाभ्यां द्विधा ततं ॥ देवीव विदधे नृत्य—मुद्यद्भक्तिः प्रभावती ॥ ८६ ॥ त्रि·
र्विशेषकं ॥ एवं तत्प्रतिमापूजा—ध्यानवाद्यादिकर्मभिः ॥ पुण्यं कोशे न्यधाद्राज्ञी । विवेकस्य
ह्यदः फलं ॥ ८७ ॥ कदाचन प्रभावत्यां । नृत्यंत्यां प्रतिमाग्रतः ॥ गायन्नुदायनो मूढ । इव च·
स्खाल तालतः ॥ ८८ ॥ ततो जाते रसच्छेदे । प्रिया प्रेयांसमूचुषी ॥ निद्रालोरिव केयं ते । स्वा·
मिन्ननवधानता ॥ ८९ ॥ स प्रोचेऽनवधानत्वं । न मे किंतु प्रिये तव ॥ नृत्यंत्या वर्ष्म निःशीर्षं ।
वीक्ष्य शून्य इवाभवं ॥ १०० ॥ अतिस्पष्टमरिष्टं त—न्मत्वा राज्ञी विशेषतः ॥ धर्मध्यानं व्यधात्त·
द्धि । शोकापनुदमादिमं ॥ १ ॥ पूजाक्षणेऽन्यदा दास्या—नीतं धौतांशुकद्वयं ॥ दृष्टिभ्यां ह्यरुणं

साथ । दृष्ट्वा चाचष्ट तामिति ॥ २ ॥ रेरे दासि त्वमानैष्ठा । मांजिष्ठे वसने किमु ॥ सावोचद्देवि पश्यैते । हिमांशुद्युतिनिर्मले ॥ ३ ॥ ततस्ते विशदे वीक्ष्य । पूर्वोत्पन्नेन तेन च ॥ दुर्निमित्तेन सा राज्ञी । मेनेऽल्पायुषमात्मनः ॥ ४ ॥ विषान्नेभ्य इवात्युच्चै—र्विषयेभ्यो विरज्य च ॥ पार्थिवं प्रार्थयांचक्रे । चारित्रार्थं पुनः पुनः ॥ ५ ॥ आगत्य समये स्वर्गा—द्धर्मे मां प्रतिबोधयेः ॥ इति वाग्बंधमातत्य । सोऽनुमेने व्रताय तां ॥ ६ ॥ ततः प्रभावती श्रित्वा । श्रामण्यं गुरुसन्निधौ ॥ तपोधनेन सौधर्मे । देवभूयमुपार्जयत ॥ ७ ॥ प्रतिमां तां च शुद्धांतः—स्थायिनीं राड् निदेशतः ॥ कुब्जिका देवदत्ताख्या । दासी नित्यमपूपुजत् ॥ ८ ॥

अथ प्रभावतीदेवो । विज्ञातप्राग्भवो दिवः ॥ एत्य क्लेशेन सम्यक्त्वे—ऽस्थापयत्तमुदायनं ॥ ॥ ९ ॥ आरभ्य तद्दिनं विश्व—जनीने जिनशासने ॥ प्रौढजैन इवोद्दाम—भावनोऽजनि भूमिभुक् ॥ १० ॥ इतश्च कश्चिद्गांधार—नामा गांधारदेशतः ॥ श्राद्धः शाश्वतचैत्याढ्यं । वैताढ्याख्याद्रिमभ्यगात् ॥ ११ ॥ तन्मूले स स्थितो गंतु—मुपरिष्टादशक्नुवन् ॥ आरराधोपवासैस्तां । घनैः शासनदेवतां ॥ १२ ॥ पूरयित्वेप्सितं तस्य । दत्वा चाष्टोत्तरं शतं ॥ गुलिका कामदा देवी । तं तत्रै-

वामुचत्पुनः ॥ १३ ॥ देवाधिदेवमूर्तिं तां । नंतुं वीतभयस्थितां ॥ ध्यात्वा तां गुलिकां न्यास्थ—
गांधारः स्वमुखांबुजे ॥ १४ ॥ तदैव तत्प्रभावेण । स वीतभयमभ्यगात् ॥ कुब्जाद्वारेण तां मूर्तिं ।
नमश्चक्रे च भक्तितः ॥ १५ ॥ अन्येद्युः कष्टितो गात्रे । गांधारस्तं च कुब्जिका ॥ साधर्मिकातिवा-
त्सल्या—दचिकित्सत्स्वभ्रातृवत ॥ १६ ॥ स ज्ञात्वा मृत्युमासन्नं । प्रभावोक्तिपुरस्सरं ॥ वितीर्य गु-
लिकाः कुब्जा—करे वृत्तमशिश्रियत् ॥ १७ ॥ कुब्जिकाथ कुरूपा सा । ध्यात्वा स्वीयकुरूपतां ॥
वक्त्रैकगुलिकाक्षेपा—द्देवीवाजनि दिव्यरुक् ॥ १८ ॥ तया गुलिकया काये । सुवर्णाभा बभूव यत्
॥ सुवर्णगुलिकेत्युक्ता । ततः सा सकलैर्जनैः ॥ १९ ॥ योग्यप्रियतमाभावा—द्रूपं मम वृथेति सा
॥ अपरां गुलिकां न्यस्य । मुखे चेति वदत्यदः ॥ २० ॥ अयं नृपः पितृप्रायः । परे त्वस्य पदात-
यः ॥ तद्भूयान्मे प्रियश्चंड—प्रद्योतो मालवेश्वरः ॥ २१ ॥ इदं तच्चिंतितं कर्तुं । तदा शासनदेव-
ता ॥ पुरस्तान्मालवेशस्य । तद्रूपं सुष्टु तुष्टुवे ॥ २२ ॥ तदर्थनार्थं सद्योऽपि । प्रद्योतो दूतमा-
दिशत ॥ सापि प्रार्थयमानं तं । समानमिदमब्रवीत ॥ २३ ॥ अदृष्टपूर्वं तं नैवं । वृणोमीत्यानयात्र
तं ॥ तत्तदुक्तं स्वनाथाय । दूतोऽपि प्रत्यपीपदत ॥ २४ ॥ नाम्ना गत्यापि चारुह्या—निलवेगं नि-

जं गजं ॥ प्रद्योतस्तत्र निश्यागा—दहो मदनशासनं ॥ २५ ॥ द्वयोरपि मिथः प्रेम्णि । प्रवृत्ते रूपवीक्षणात् ॥ स तामूचे चकोराक्षि । समेहि नगरं मम ॥ २६ ॥ साब्रवीत्प्रतिमा जैनी । जीवातुर्मम विद्यते ॥ तां विनाहं न जीवामि । क्षणं यामि च न क्वचित् ॥ २७ ॥ तदेतस्याः प्रतिछंदं । त्वं विधाप्य समानय ॥ यथा तामत्र विन्यस्य । त्वया चैनामुपैम्यहं ॥ २८ ॥ दृष्ट्वा तत्प्रतिमारूपं । स्थित्वा तां रजनीं च सः ॥ प्रातर्ययावुज्जयिनीं । सिंहवन्मालवाधिपः ॥ २९ ॥ सच्चंदनेन निर्माप्य । प्रतिमां तादृशीं नवां ॥ स प्रतिष्ठापयामास । कपिलेन महर्षिणा ॥ ३० ॥ अलंकृतार्चितां कृत्वा । करे तां प्रतिमां नृपः ॥ आरुह्यानिलवेगेभं । पुनर्वीतभयं ययौ ॥ ३१ ॥ व्यश्राणयच्च दास्यै तां । साप्यादाय पुरातनां ॥ प्रतिमां तत्र मुक्त्वा च । नवां प्राप नृपांतिकं ॥ ३२ ॥

ततस्तत्सहितां कुब्जा—मारोप्य नृपतिर्द्विपे ॥ वेगेनातिसमीरेण । प्रपेदे निजमास्पदं ॥३३॥ अथ तौ विषयासक्तौ । तामर्चार्थं वितेरतुः ॥ भायलस्वामिवणिजे । विदिशानगरीजुषे ॥ ३४ ॥ वणिजस्तस्य सदन—स्थायिनी प्रतिमा च सा ॥ सूरिकालात्यये मिथ्या—दृग्भिर्गुप्तार्चयिष्यते ॥ ॥ ३५ ॥ बहिः प्रतिकृतिस्तस्याः । स्थापयित्वा च तैर्जनैः ॥ भायलस्वामिसंज्ञोऽय—मादित्य इति

वक्ष्यते ॥ ३६ ॥ लोकोऽप्यहो तदुक्तं त—त्सत्यमित्यवधारयन् ॥ तामर्चयिष्यति कस्को । धूर्तदंनो
न जृंभते ॥ ३७ ॥ अथ वीतभयस्वामी । कृतस्नानादिकक्रियः ॥ देवतायतनं प्राप—र्ययौ पूजावि·
क्रीः स्वयं ॥ ३८ ॥ हष्ट्वाग्रे प्रतिमां म्लान—माल्यां स ध्यातवान् हृदि ॥ नेयं देवमयी सैव । का·
प्यपूर्वेति मे मतिः ॥ ३९ ॥ प्रतिक्षणं नवानीव । यत्तत्पुष्पाणि कर्हिचित ॥ न म्लायंतिस्म दा·
सी च । सात्र नास्ति तदर्चिका ॥ ४० ॥ श्रुतं चात्र निपादिभ्यो । निर्मदा दंतिनोऽभवन् ॥ आ·
गादनिलवेगोऽत्र । तन्नूनं गंधसिंधुरः ॥ ४१ ॥ जानेऽत्रानिलवेगस्थो । मालवेभ्योऽभ्युपेत्य सः ॥
गृहादपहरत्रात्रौ । प्रतिमां कुब्जिकामपि ॥ ४२ ॥ ततः स कोपदुःप्रेक्ष्यो । द्वादशार्क इव स्वयं ॥
प्रतस्थे सह सैन्येन । प्रद्योतविजिघृक्षया ॥ ४३ ॥ विराटिनो नृपाः सैन्य—युतास्ते दश तं श्रि·
ताः ॥ यथा ग्रावापगापूर्णा । गंगावाहाः पयोनिधिं ॥ ४४ ॥ अथ तत्सैनिकाः प्राप्य । निर्जलां
जंगलावनिं ॥ मृगा इवाभ्रमन् वारि—भ्रांत्या मरुमरीचिकाः ॥ ४५ ॥ इतस्ततो भ्रमंतस्ते । तृट्·
शुष्यत्कलतालवः ॥ एकं विमुच्य नेत्रांभो । नान्यदंभो न्यभालयन् ॥ ४६ ॥ तदोदायननृपेन ।
प्रभावत्यमरः स्मृतः ॥ त्रिपुष्कराणि पानीये—रेत्य स्वर्गादपूपुरत् ॥ ४७ ॥ पायंपायं पयःपूरं ।

पीयूषमिव सैनिकाः ॥ उज्जीवंतिस्म तत्कालं । कालेनाकवलिता अपि ॥ ४८ ॥ जीविता जलपानेन । जीवनीयं तथामृतं ॥ नामद्वयं तदा तस्य । सार्थकं जानिरे जनाः ॥ ४९ ॥ अनीके सुस्थिते जाते । ततः प्रस्थाय पार्थिवः ॥ प्रयाणैस्त्वरया कृत्वै—र्जगामोज्जयिनीं पुरीं ॥ ५० ॥

तत्र वीतभयेशस्य । प्रद्योतस्य च दूततः ॥ रथमारुह्य योधव्य—मित्यजायत संगरः ॥ ५१ ॥ सांग्रामिकं रथं श्रित्वा—विमान इव मूर्तिमान् ॥ उदायनः कराकृष्ट—चापस्तस्थौ रणस्थले ॥५२॥ रथाजय्यमथ ध्यात्वा । तं त्यक्तरथसंगरः ॥ गंधस्तंबेरमारूढः । प्रद्योतोऽप्याययौ युधे ॥ ५३ ॥ वीक्ष्य वीतभयस्वामी । तं तथा कुपितोऽवदत् ॥ रेरे त्वमीदृक्प्रौढोऽपि । किमभ्रष्टसंगरः ॥ ५४ ॥ रथमारुह्य योत्स्येऽह—मित्युदीर्य स्वयं पुरा ॥ इदानीमन्यथागछन् । स्वजनेऽपि न लज्जसे ॥ ५५ ॥ जीवितार्थी प्रिया सार्धं । संधां यद्यप्यमुंचथाः ॥ तथापि मत्करोन्मुक्तै—र्न जीविष्यसि मार्गणैः ॥ ॥ ५६ ॥ ततोऽतिभ्रमयन् वेगा—त्कुंभकृच्चक्रवद्रथं ॥ उदायनोऽभ्यधाविष्ट । वधाय स्वविरोधिनः ॥ ॥ ५७ ॥ यौगपद्येन हंतुं तं । सरथ्यरथसारथिं ॥ प्रद्योतोऽपि निजं गंध—सिंधुरं क्रुद्धमैरयत् ॥ ॥ ५८ ॥ रथस्य भ्रमतस्तस्य । ग्रहणार्थं यथा यथा ॥ बंभ्रमीतिस्म पृष्ठस्थः । सरोषो वैरिवारणः ॥

॥ ६० ॥ तथातथा तीक्ष्णमुखैः । पतत्रिभिरुदायनः ॥ तस्य पादतलान्युच्चै—र्विव्याध व्याधवन्मुहुः
॥ ६१ ॥ तन्नायकशरैः पादे—ष्वतुर्भिरपि स द्विपः ॥ ऊर्ध्वं स्थातुमनीशः स—न्नपतत्पंगुवद्रणे
॥ ६२ ॥ पातयित्वा ततः कुंभि—कुंभाद्वीतभयप्रभुः ॥ प्रद्योतं जगृहे बध्ध्वा । मूर्तं जयमिवात्मनः
॥ ६३ ॥ दासीपतिरिति व्यक्तै—र्वर्णैस्तस्यालकस्थले ॥ अंकं च रचयामास । स्वीयकीर्तिप्रशस्तिव-
त् ॥ ६४ ॥ प्रद्योतोक्त्या परिज्ञाय । प्रतिमां विदिशास्थितां ॥ तां पुरीं जग्मिवान् भूभृ—न्मालवे-
शसमन्वितः ॥ ६५ ॥ तेन तत्रार्चयित्वोच्चैः । प्रतिमा चालितापि सा ॥ न चचाल निजस्थाना—
द्वज्रलेपाचलस्थितिः ॥ ६६ ॥ विशेषात्पुनरभ्यर्च्य । जगादैवमुदायनः ॥ प्रभो किं मेऽभवद्भाग्यं ।
भंगुरं नेपि यद्गृहं ॥ ६७ ॥ जगौ तन्मूर्त्यधिष्ठाता । मा शोचीस्त्वं पुरं तव ॥ भविष्यति स्थलं धू-
ली—वृष्ट्या नेष्याम्यहं ततः ॥ ६८ ॥ तदादेशेन तेनासौ । नृपतिः स्वपुरंप्रति ॥ न्यवर्तिष्ट कर-
भ्रष्ट—चिंतामणिरिव व्यथी ॥ ६९ ॥ अमुष्य गच्छतो मार्गे । पुस्फोर जलदागमः ॥ उज्जीवयन्
जगल्लोकं । स्वोदयेन महानिव ॥ ७० ॥
एते घटीप्रहरवासरवारचारैः । सर्वेऽपि यद्यपि समा ऋतवः स्फुरंति ॥ भूयांस्तथापि महिमास्य

घनागमस्य । येनोल्लसंत्यखिलविष्टपजीवितानि ॥ ७१ ॥ सौदामिनीं मुहुर्दीप्रां । स्फारयन् शुशुभे
घनः ॥ हंतुं स्ववैरिणं ग्रीष्मं । कृपाणीं नर्त्तयन्निव ॥ ७२ ॥ स्पर्धयेव तदा मेघ—माला निःपति-
का अपि ॥ नीरैरस्रैश्च सिषिचुः । क्षोणीपीठमुरोऽपि च ॥ ७३ ॥ ततो विश्वक्समालोक्य । पयःपू-
रमयीं महीं ॥ स्कंधावारं निवेश्यास्था—न्नृपस्तत्रैव कुत्रचित् ॥ ७४ ॥ जलात् त्रातुं निजं सैन्यं ।
दश तत्र नृपाः स्थिताः ॥ पुरं दशपुरं नाम्ना—ऽभवत्तच्छिबिरं ततः ॥ ७५ ॥ प्रद्योतं भोजयामास ।
स्वेन सार्धमुदायनः ॥ अहितेऽपि हि नौचित्यं । संतो मुंचंति जातुचित् ॥ ७६ ॥ प्रभावतीदिवि
षदा । ज्ञापितः पर्व वार्षिकं ॥ उदायनोऽनिशश्राद्धु—रुपवासं वितेनिवान् ॥ ७७ ॥ तदा प्रद्योत-
मप्राक्षी—त्सूपकृद्भोक्ष्यसेऽद्य किं ॥ तन्निशम्य भयाक्रांत—स्वांतः सोऽपि विमृष्टवान् ॥ ७८ ॥ अ-
पृष्टपूर्वी यदयं । मामेतत्परिपृच्छति ॥ गिरानयोपहासिन्या । तन्नूनं नाद्य मे शिवं ॥ ७९ ॥ को
हेतुरद्य प्रश्नेऽस्मिन् । पृष्टस्तेनापि सूपकृत् ॥ ऊचे पर्यूषणापर्व—ण्यस्मिन्नाथोऽस्त्युपोषितः ॥ ८० ॥
नृपयोग्यां रसवतीं । त्वत्कृते करवाणि कां ॥ इति त्वां पृष्टवानेतत् । श्रुत्वा सोऽपि शठोऽवदत् ॥
॥ ८१ ॥ त्वयाहं साधु पर्वेदं । ज्ञापितः पितरौ यतः ॥ श्राद्धौ ममापि तेनास्ता—मुपवासोऽद्य पु-

णकृत् ॥ ७२ ॥ नृपकृत्तदनादिष्ट । निजनाशाय तत्क्षणं ॥ सोऽप्याख्यच्चूर्णराजोऽयं । सम्यग्जानाति मायिनां ॥ ७३ ॥ मायी वायममायी वा । नास्मिन् चंदिस्थिते मम ॥ पर्वेदं जायते धर्म्य—मिति तं हृतवान्नृप ॥ ७४ ॥ क्षमयित्वा च तं सम्यक् । तल्ललाटांकगुप्तये ॥ पट्टबंधनमाधत्त । विवेकः कोऽप्यहो सतां ॥ ७५ ॥ तत्प्रभृत्यभवत्पट्ट—बंधो मौलौ महीभृतां ॥ तत्पूर्वं ते दधुस्तत्र । मंगलं मुकुटं पुनः ॥ ७६ ॥

याते धनऋतौ तस्मि—न्नैश्वर्यार्पणपूर्वकं ॥ प्रैष्यत्प्रद्योतमात्मीयं । स्थानं मानादुदायनः ॥ ७७ ॥
परं तैर्दशराड्लोकैः । सेवैराढ्यं नविष्णुभिः ॥ तथैव पप्रथे पृथ्व्यां । स्थानं दशपुराभिधं ॥ ७८ ॥
अथोदायनभूजानि—र्महादुःखं दधौ हृदि ॥ देवाधिदेवप्रतिमां । विना लक्ष्मीमिवाधनः ॥ ७९ ॥
दध्यौ च हा ममाभाग्य—मुदजृंभत कीदृशं ॥ येन वेश्मांतरस्थापि । गतेयं कामधेनुवत् ॥ ८० ॥
तं तथा दुःखितं प्रेक्ष्य । स्नेहादेत्य त्रिविष्टपात ॥ स्वस्थयामासिवानेवं । प्रभावत्यमरस्तदा ॥ ८१ ॥
नृप चेत्क्लिश्यसे कस्मात् । वृथा तत्प्रतिमाकृते ॥ कल्पवल्लीव नाल्पिष्ठै—र्भाग्यैः सा लभ्यते यतः
॥ ८२ ॥ जीवंतस्वामिनो यास्ति । प्रतिमा त्वद्गृहे नवा ॥ सापि निस्सीममाहात्म्या—त्तीर्थप्राग्यैव

बुध्यतां ॥ ९३ ॥ यत्प्रतिष्ठाविशेषेण । प्रतिमा स्यात्प्रभावभूः ॥ प्रत्यष्ठाच्च स्वयमिमां । केवली कपिलो मुनिः ॥ ९४ ॥ तद्वदेवेयमभ्यर्च्या । प्रतिमा भवतानिशं ॥ चारित्रमपि वा ग्राह्य—मात्मनीनं यथाक्षण ॥ ९५ ॥ उदीर्येति गते तस्मिन् । देवे वीतभयप्रभुः ॥ तामभ्याराधयामास । वासनावासिताशयः ॥ ९६ ॥ पुण्यलक्ष्मीलताकंदं । स ध्यानमिदमादधे ॥ स्तुत्यास्ते विषया यस्मिन् । श्रीवीरस्तिष्ठति स्वयं ॥ ९७ ॥ विविक्तास्ते नमस्यंति । ये तं तीर्थमिवान्वहं ॥ कृतार्थास्ते नृपास्तस्मा—द्ये श्रयंति व्रतश्रियं ॥ ९८ ॥ पृथिवीं पावयन् पादै—र्भगवान् भानुमानिव ॥ यद्यत्रैति तदा ध्वस्त—तमाः साधुपथं श्रये ॥ ९९ ॥ इमं तदाशयं मत्वा । तत्प्रव्राजनकाम्यया ॥ चंपानगर्याः प्रस्थाय । प्रभुरागाच्च तत्पुरं ॥ १०० ॥ उदायनो मुदा गत्वा । नत्वा जिनपदपंकजे ॥ कर्णेहत्य पपावेव—मुपदेशमयं रसं ॥ १ ॥ ययायं क्षेत्रज्ञः परिहृतपथं वाङ्मनसयो—श्चिदानंदं विंदत्यनुपमसुखाश्लेषसुभगं ॥ विरक्ते रक्तां तामभिलषसि चेन्मुक्तिरमणीं । तदा त्वं तद्दूतीमिव कुरु करे सर्वविरतिं ॥ २ ॥ संति दानादयो धर्माः । परं भोगादिहेतवः ॥ मुक्तिदाने त्वलंभूष्णु—र्व्रतश्रीरेव केवलं ॥ ३ ॥

ततः सश्रुतचारित्र—कल्पद्रुमफले नृपः ॥ तस्मिन्नत्युत्सुको जज्ञे । बुभुक्षुरिव भोजने ॥ ४॥
दातुं न युक्तं पुत्रस्य । राज्यं तत्पापकारतः ॥ यदयं भवपाथोधौ । पोतवन्मंक्षु मंक्ष्यति ॥ ५ ॥
राज्यं दत्वा मयायं चे—त्क्षिप्यते नरकावनौ ॥ तदा भद्रकरत्वं मे । पितुः स्यात्कीदृशं सुते ॥ ६॥
इति ध्यात्वा निजे राज्ये । यामेयं न्यस्य केशिनं ॥ दत्वा च शासनेऽनल्पान् । ग्रामांस्तत्प्रतिमार्च-
ने ॥ ७ ॥ उदायनः सपुत्रोऽपि । नृपकेशिकृतोत्सवः ॥ अप्रमत्तो व्रतमादत्ते । बीजं मोक्षतरोरिव
॥ ८ ॥ चतुर्भिः कलापकं ॥ षष्ठमुख्यैस्तपःकष्टै—र्व्रताह्लादपि स व्रती ॥ लग्नः शोषयितुं कर्म—पं-
कं रविरिवांशुभिः ॥ ९ ॥ सोऽयमीदृक्चरित्रश्री—शुभ्रपात्रमुदायनः ॥ राजर्षिश्चरमोऽस्माभिः । श्री-
श्रेणिकसुनोच्यत ॥ १० ॥ श्रुत्वेति हृष्टः पप्रच्छ । पुनः श्रेणिकनंदनः ॥ राजर्षेरस्य किं भावि । पु-
रस्ताद्भगवन् वद ॥ ११ ॥ जिनेंद्रस्तं जगौ तस्य । मुनेः पालयतो व्रतं ॥ भविता व्याधितस्येव ।
व्याधिः कदशनैर्महान् ॥ १२ ॥ स्वदेहेऽपि निरीहत्वा—च्चिकित्सितमनिच्छतः ॥ तस्याग्रे वक्ष्यते वै-
द्यै—र्दधि भुंक्ष्व गदापहं ॥ १३ ॥ अतिव्याधिकृतं वीक्ष्य । निजकायमुदायनः ॥ गंता गोष्ठास्पदं
कांक्षन् । दधि प्रासुकमात्मनः ॥ १४ ॥ ततोऽपि विहरन् याता । स वीतभयपत्तनं ॥ ज्ञात्वा तदा-

गमं केशी । वक्ष्यते च कुमंत्रिभिः ॥ १५ ॥ एष त्वन्मातुलोऽभ्यागा—न्नूनं राज्यजिघृक्षया ॥ कु-
श्चरेण व्रतेनाति—निर्विण्णो यदसौ हृदि ॥ १६ ॥ पुरायं व्रतमादत्त । वैराग्याहृतचेतनः ॥ ततोऽ-
धुना परिभ्रष्टः । क्लीबवत्सुखमिच्छति ॥ १७ ॥ वदिष्यति ततः केशी । संप्रत्येवैष किं न हि ॥ रा-
ज्यं न्यासवदादत्ते । को लोभो मेऽन्यवस्तुनि ॥ १८ ॥ मंत्रिणस्ते भणिष्यंति । परवस्त्विति मा-
न्यधाः ॥ राज्यमेतत्तवैवास्ति । दत्तं त्वद्भाग्यसंपदा ॥ १९ ॥ क्रियंते यत्कृते भूपै—रकार्याणि घना-
न्यपि ॥ तद्राज्यं निजहस्तस्थं । कः कर्करमिवोज्झति ॥ २० ॥

विदन् सत्यं तदुक्तं तत् । केशी प्रवक्ति तर्ह्यहं ॥ किं कुर्वे तेऽपि वक्ष्यंति । विषमस्मै वितारय
॥ २१ ॥ युक्तं दंदश्यते लोका—नकर्णः पन्नगः खलु ॥ कुतूहलं सकर्णोऽपि । खलः साधून् दु-
नोत्यलं ॥ २२ ॥ खलात्किं कालकूटोऽभूत । कालकूटात्खलोऽथवा ॥ परप्राणप्रहाणार्थी । यदिमौ
समविक्रमौ ॥ २३ ॥ कथं खलः खलसमो । निःस्नेहो मलिनोऽपि च ॥ दुग्धं दद्याद्भवादत्तः । प्र-
थमस्त्वापदं परः ॥ २४ ॥ कयाचित्पशुपाल्याथ । विषसंपर्कितं दधि ॥ वितारयिष्यते तस्मै । राज्य-
लुब्धेन केशिना ॥ २५ ॥ प्रभावतीसुरो हत्वा । तद्विषं वक्ष्यते मुनिं ॥ सविषं दधि लब्ध्वा त्वं ।

दधि त्यक्ते ततस्तस्य । व्याधिना व्याप्स्यते वपुः ॥ गदं लब्ध्वा
मा भ्मामीस्तदतः परं ॥ २६ ॥ केशिना दापितं भूयो । विषं मा देवतापि न ॥ हर्त्री प्र
प्रकुप्यंति । यद् गतगदविद्विषः ॥ २७ ॥ ततो विषोर्मिभिर्विष्वक् । सर्पद्भिर्ग्रस्तविग्रहः ॥
मादनः सोऽत्र । भोक्ष्यते सविषं दधि ॥ २८ ॥ पालितानशनो मांसं । शमांबुस्नाननीरजाः
पर्यंतोऽनशनं ज्ञान—ध्यानः स स्वीकरिष्यति ॥ २९ ॥ ज्ञात्वा प्रभावतीदेव—स्तद्वृत्तं कोपवि-
॥ लब्ध्वांते केवलं मोक्ष—लक्ष्मीमाप्स्यत्युदायनः ॥ ३० ॥ प्रतिमा सापि जीवंत—स्वामिनो धू-
ह्वलः ॥ स्थगयिष्यति धूलीभिः । सर्वं वीतभयं पुरं ॥ ३१ ॥ एकं शय्यातरं कुंभ—
लिमंम्लैः ॥ स्थगिता स्थास्यति क्षोणी—मध्ये निधिगतर्द्धिवत् ॥ ३२ ॥ तत्र सा नगरं न-
कारं तस्य मुनेः सुरः ॥ नीत्वा वीतभयस्थाना—त्सिणपल्लीं महापुरीं ॥ ३३ ॥ पुनर-
व्यं । कुंभकारेतिसंज्ञितं ॥ करिष्यत्यहह स्नेहो । निस्सीमो द्युसदामपि ॥ ३४ ॥ युग्मं ॥ वाण्या
य्यनयामात्यः । पृष्टवान् परमेश्वरं ॥ प्रतिमा सार्हती कर्हि । भाविनी प्रकटादिश ॥ ३५ ॥ ला-
योजनगामिन्या । प्रोचे हेमातुरो जिनः ॥ अस्मन्निर्वाणतो वर्षे । षण्मुनिद्वींदुसंमिते ॥ ३६ ॥
गुर्जरसौराष्ट्र—सीमनि स्वर्गखंडवत् ॥ भविष्यति पुरं नव्यं । नाम्नाणहिलवाटकं ॥ ३७ ॥ युग्मं ॥

आसतामपरे लोकाः । पंजरस्थाः शुकादयः ॥ नमस्कारं पठिष्यंति । तस्मिन्नार्हतवेश्मसु ॥ ३८ ॥
पूरयिष्यंति तत्रार्ह—त्प्रतिमा रत्ननिर्मिताः ॥ शाश्वतप्रतिमालोक—प्रीतिं धार्मिकचेतसि ॥
॥ ३९ ॥ आढ्या विदग्धा धर्मज्ञाः । पुरुषायुषजीविताः ॥ लोकास्तत्र निवस्यंति । सुखमाकालजा
इव ॥ ४० ॥ प्रतिवेश्म सपत्नीं स्वां । वीक्ष्य लक्ष्मीं विजृंभिणीं ॥ असूययेव लोकेभ्य—स्तेभ्यो
यास्यति निःस्वता ॥ ४१ ॥ ततोऽस्मन्मुक्तितो वर्षे । नवषड्रसभूमिते ॥ चौलुक्यवंशसद्रत्न—भू-
लराजनृपान्वयी ॥ ४२ ॥ दयादाक्षिण्यनैपुण्य-शौंडीर्यादिगुणैकभूः ॥ श्रीमान् कुमारपालाख्यो ।
भविता तत्र भूपतिः ॥ ४३ ॥ युग्मं ॥ स दानधर्मयुद्धैक—वीरभावविितानकैः ॥ कर्णधर्मसुतश्वेत-
हयाननुकरिष्यति ॥ ४४ ॥ आस्वर्धुनीविंध्यशैल—पयोधिशकमंभलं ॥ पूर्वाद्यासु चतुर्दिक्षु । क्रमा-
त्क्षोणीं स जेष्यति ॥ ४५ ॥ त्रयाणां पुरुषार्थानां । साधकत्वात्स भूपतिः ॥ असुभ्योऽपि वसुभ्यो-
ऽपि । सुकृतं बहुमंस्यते ॥ ४६ ॥ सोऽन्यदा वज्रशाखायां । चंद्रचंद्रकुलोद्भवं ॥ हेमचंद्राभिधं सू-
रिं । दृष्ट्वा प्रीतिमुपैष्यति ॥ ४७ ॥ नमस्कृत्य च तं तस्य । वक्त्राद्वाग्देवतोदितं ॥ स श्रोष्यत्यार्ह-
तं धर्मं । केकीव घनगर्जितं ॥ ४८ ॥ तत्वं ज्ञात्वा स चौलुक्यः । श्रियो राशिमिवात्मनः ॥ सम्य-

त्वपूर्वकं प्राह—धर्ममूरीकरिष्यति ॥ ४९ ॥ मद्यादिव्यसनध्वंसा—त्सन्निवेश्य दयां नृपे ॥ मु·
क्त्वा च रुदतीवित्तं । विहारान् कारयिष्यति ॥ ५० ॥ एकदा वाच्यमानेऽस्य—चरित्रे स्वगुरोर्मुखा·
त् ॥ प्रतिमां धूलिगुप्तां तां । चौलुक्यो निशमिष्यति ॥ ५१ ॥ ततः स खानयित्वास्तैः । स्थलं वीत·
भयस्य तत् ॥ आनाय्य च स्वभवने । चिरं तामर्चयिष्यति ॥ ५२ ॥ इति श्रीवीरचरिता—द्विनि·
शम्य गुरूत्तमात् ॥ हर्षोदंचितरोमांच—श्चौलुक्यो ह्यचिंतयत् ॥ ५३ ॥ अहमेवेह धन्योऽस्मि ।
श्लाघ्यजन्माहमेव च ॥ अहमेवास्म्यगण्यानां । पुण्यानामेकमास्पदं ॥ ५४ ॥ भविष्यतोऽपि मे य·
स्य । वृत्तमित्यनयाग्रतः ॥ सुरासुरनराध्यक्षं । श्रीवीरः स्वयमूचिवान् ॥ ५५ ॥ ततस्तत्प्रतिमाकृष्टयै ।
विज्ञप्तो भूभृता प्रभुः ॥ ध्यात्वावदत्कुरुद्योगं । तत्प्राप्तिस्ते भविष्यति ॥ ५६ ॥ अपि रत्नाकरः शु·
ष्ये—त्समीरोऽपि स्थिरो भवेत् ॥ ज्वलेदंभोऽपि नासत्या । विस्फुरेद्भगवद्गवी ॥ ५७ ॥ ईदृग्गुरु·
गिरा भव्यैः । शकुनैरपरैरपि ॥ धर्मात्मा वर्धितोत्साहो । मेने तां हस्तवर्तिनीं ॥ ५८ ॥ दत्वा त·
त्प्रतिमाकल्पं । भूभृता प्रहिता जनाः ॥ ज्ञात्वा वीतभयस्थानं । लग्नाः खनितुमादरात् ॥ ५९ ॥
परमार्हतभावेन । राज्ञः शासनदेवता ॥ विदधे तत्र सांनिध्यं । तस्यास्तदुचितं खलु ॥ ६० ॥ ख·

न्यमाने स्थले तत्र । धात्रीसूत्रामपुण्यतः ॥ प्रतिमा प्रकटा जज्ञे । स्थापितेव स्वयं पुरा ॥ ६१ ॥ उदायनेन यद्दत्तं । प्रतिमार्चनहेतवे ॥ ग्रामाणां शासनमयं । पत्रं तदपि निर्गतं ॥ ६२ ॥ तद्दर्शनात्प्रमुदिता । नृपायुक्ता यथाविधि ॥ तामर्चित्वा रथोत्संग—मुत्सवेनाध्यरोपयन् ॥ ६३ ॥ उद्दामसद्धजामोदा—ह्वनाकृष्टशिलीमुखीं ॥ वीज्यमानां च पूर्णेंदु—सुंदरैश्चामरोत्करैः ॥ ६४ ॥ पूज्यमानां प्रतिग्रामं । भविकैः पुण्यलोलुपैः ॥ प्रतिमां तां समानिन्यु—र्जनास्ते पत्तनांतिकं ॥ ६५ ॥ युग्मं ॥ ततो गुरुं पुरस्कृत्य । प्रमोदमिव देहिनं ॥ तत्संमुखं ययौ भूपः । सर्वसंघसमन्वितः ॥६६॥ प्रीतस्तद्वीक्षणात्साक्षात । श्रीवीरप्रेक्षणादिव ॥ अभ्यर्च्य कुसुमैर्हैमै—श्चैत्यवंदनमादधे ॥ ६७ ॥ रथात्तां स्वयमुत्तार्य । करींद्रमधिरोप्य च ॥ पुण्यलक्ष्मीमिवात्मीयां । मध्येसौधं समानयत् ॥ ६८ ॥ अंतःक्रीडालयं चैत्यं । विधाप्य स्फाटिकं ततं ॥ तत्र तां पूजयामास । त्रिसंध्यं भूमिवासवः ॥६९॥ तत्प्रभावेण तस्यर्द्धि—रवर्धिष्ट दिने दिने ॥ चंद्रोदयेन वेलाब्धे—र्वर्धते किं कुतूहलं ॥ ७० ॥ प्रतिमां तां नमस्कर्तुं । पुंडरीकादि तीर्थवत् ॥ समापतन् परोलक्षा । दवीयांसोऽपि धार्मिकाः ॥७१॥ तस्याः शासनपत्रं तद् । दृष्ट्वा गूर्जरनायकः ॥ उदायन इव ग्रामान् । वरान् भोगकृते ददौ ॥७२॥

हेमसूरिम्यादिद—त्तस्मै धर्मात्मनेऽन्यदा ॥ शत्रुंजयादितीर्थानां । यात्राफलमिति स्फुटं ॥ ७३ ॥
ध्याने पल्यसहस्रसंभवमघं मदीयतेऽभिग्रहे । तल्लक्षोऽमनेकसागरकृतं मार्गे समुल्लंघिते ॥ तीर्थस्या-
श्रयणोऽभ्युपैति सुगतिर्दर्शनानालोकने । श्रीसौख्यादि तदर्चने सुरपदं तत्तीव्रभावे शिवं ॥ ७४ ॥
अग्रणीः शुभकृत्यानां । तीर्थयात्रैव निश्चितं ॥ दानादिधर्मः सर्वोऽपि । यस्मिन् साफल्यमश्नुते ॥७५॥
किंच श्रेयस्करं द्रव्यं । भवेत्तीर्थनिवेशनात् ॥ किं माधुर्यकरं नीरं । न हीक्षुक्षेत्रवर्षणात् ॥ ७६ ॥
एकाक्यपि नमंस्तीर्थं । श्रेयः संचिनुते सुधीः ॥ यदि संघपतीभूय । नमस्येत्तर्हि वच्मि किं ॥७७॥
अत एव प्रशस्यास्ते । भरताद्या महीश्वराः ॥ सप्ततीर्थीं नमस्कृत्य । श्रीसंघपतयोऽभवन् ॥ ७८ ॥
तथापि युज्यते राजन् । यथा तेन प्रवर्तितुं ॥ गजेंद्रक्षुण्णमध्वानं । कलभो ह्यधितिष्ठति ॥ ७९ ॥
ततस्तद्देव निर्णीय । शुभं लग्नं महीधवः ॥ देवालयस्य प्रस्थानं । महेन महता व्यधात ॥ ८० ॥
अमारिपटहोद्घोषः । कारागारविशोधनं ॥ साधर्मिकादिसत्कार—श्चैकाशनविनिर्मितिः ॥ ८१ ॥
चैत्येषु विविधाः पूजा । वादित्रध्वनिसंयुताः ॥ स तु धार्मिककोटीरः । प्रतिघस्रमचीकरत् ॥ ८२ ॥
॥ युग्मं ॥

श्रीहेमसूरिप्रमुखाः । सूरयः श्रुतसूरयः ॥ मंत्रिणो वाग्भटप्रष्ठा । राणाः प्रह्लादनादयः ॥ ८३ ॥
नृपनागसुतः श्रेष्ठी । निविमस्फूर्तिराभडः ॥ वणिग् ब्रह्माभिधो हेम—लक्षानवतिनायकः ॥ ८४ ॥
एते परेऽपि पुण्यश्री—हारिणो व्यवहारिणः ॥ यात्रार्थमुद्यता जाता । श्रेयोलक्ष्म्यभिलाषिणः ॥
॥ ८५ ॥ त्रिभिर्विशेषकं ॥ नृपाह्वानाच्चतुर्दिग्भ्य—स्तीर्थार्थं प्रस्थितैर्जनैः ॥ प्रथीयांसोऽपि पंथानो
। जाताः पाणिंधमास्तदा ॥ ८६ ॥ सर्वस्मिन् मिलिते संघे । नृपो यावत्प्रतिष्ठते ॥ तावत्कातरित-
स्वांतै—श्चरैरेत्य न्यवेद्यत ॥ ८७ ॥ देव माहलदेशेंद्रः । कर्णः प्रौढबलार्णवः ॥ अत्रागमिष्यति
द्वित्रै—र्दिनैर्विग्रहकाम्यया ॥ ८८ ॥ तदाकर्णनमात्रेण । भाले प्रस्वेदबिंदवः ॥ चिंतांभोधेरिवोद्-
भूता । भूभुजः प्रोज्जजृंभिरे ॥ ८९ ॥ वाग्भटेन समं गत्वा । तदैव गुरवे रहः ॥ कर्णयोः क्रक-
चाभं त—द्विज्ञप्येति नृपोऽवदत् ॥ ९० ॥ यदि प्रस्थीयते तीर्थे । पश्चादेत्य तदा रिपुः ॥ विलो-
डयति मद्देशं । कासारमिव कासरः ॥ ९१ ॥ अथ तत्संमुखीभूय । विगृह्णे तर्हि विग्रहे ॥ द्वयोरति-
बलत्वेन । कालो लगति पुष्कलः ॥ ९२ ॥ तावंतं च कथं कालं । लोकोऽयं पारदेशिकः ॥ ति-
ष्ठत्यत्रेति विमृशन् । यादश्चिंतार्णवेऽस्म्यहं ॥ ९३ ॥ धिग्धिग्मामधमाग्रण्यं । यस्य पुण्यमनोरथः ॥

स्खलिता रथवद्विन्न—शैलेऽन्नज्यत तत्क्षणं ॥ ९४ ॥ वणिजोऽमी वरं संघ—पतयः स्युः सुखेन
ये ॥ न त्वहं सांघपत्यास्ति—न्नाग्यहीनः सुपर्ववत् ॥ ९५ ॥ अहो ममोद्भवन्नेव । धर्मकर्मांकुरः क·
थं ॥ दग्धो दावानलेनेव । दैवेन हतकेन हा ॥ ९६ ॥ ततो ध्यात्वा नृपस्वांत—चिंतासंतापशां·
तये ॥ सुधावृष्टिमिवोवाच । वाचं वाचंयमाग्रणीः ॥ ९७ ॥ मा विषीद नरेंद्र त्वं । सुरेंद्रेणेव यत्त्व·
या ॥ श्रेयस्कृत्यं समारंन्नि । न्नज्यते तन्न कर्हिचित् ॥ ९८ ॥ स्वास्थ्यं द्वादशभिर्यामै—र्भावीति
गुरुणा स्वयं ॥ धीरितोऽपि रतिं चित्ते । नाप क्ष्मापः सतापवत् ॥ ९९ ॥ किं न्नावीत्यामृशन् कामं
। सौधे तिष्ठन् महीधवः ॥ प्रन्नुप्रोक्तक्षणेऽन्येत्य । व्यज्ञप्यत चरैरिति ॥ ३०० ॥ पत्तनं प्रातरेवाहं ।
रोत्स्ये निजबलैरिति ॥ स्वामिन्न न्नवद्रिपुः कर्णो । निशि प्रातस्थि सत्वरं ॥ १ ॥ हस्तिपृष्टमधिष्टाय
। स निशीथे समापतन् ॥ अपुण्यप्रेरित इव । क्षणं निद्रामुपासदत् ॥ २ ॥ तस्याविद्राणनिद्रस्य ।
कंठस्था स्वर्णशृंखला ॥ मार्गे न्यग्रोधशाखाग्रे । विलग्ना पाशवत्कचित् ॥ ३ ॥ अधस्तात्प्रस्थिते ना·
गे । तयोल्लंबितविग्रहे ॥ गलरोधेन सद्योऽपि । स्पृशनंच पंचतां ॥ ४ ॥ तस्यौर्ध्व्वदेहिकं कृत्यं ।
सर्वं वीक्ष्य निजेक्षणैः ॥ देवस्य पुरतो वक्तुं । वयमत्र समाययुः ॥ ५ ॥ हहा किमस्य संजात—

मिति शोकाकुलः क्षणं ॥ तदूचे गुरवे भूप—स्तद्ज्ञानातिचमत्कृतः ॥ ६ ॥ ततो महोत्सवं तन्व-
न् । यात्रार्थं प्रस्थितो नृपः ॥ स्वयं भरतचक्रीव । लोकोत्तरविभूतिभृत् ॥ ७ ॥ भूयिष्ठत्वेन संघोऽ-
यं । मास्मदूयिष्ट वर्त्मनि ॥ इति चक्रे प्रयाणानि । पंचक्रोशानि सोऽन्वहं ॥ ८ ॥ पदाभ्यां निरुपा-
नद्भ्यां । दृष्ट्वा यांतं निजं गुरुं ॥ नृपोऽपि महतीभक्ति—रनुपानत्पदोऽभवत् ॥ ९ ॥

ततोवदद्गुरुर्मार्गे । मुनीनां क्रम एषकः ॥ प्राणभृद्रक्षणाद्युक्त—स्तव तु क्लेशकारकः ॥१०॥
ततो व्यजिज्ञपत्क्ष्मापो । दौःस्थ्ये प्राक्पारवश्यतः ॥ क्रमाभ्यां न कियद्भ्रांतं । परं तद्व्यर्थतास्पदं ॥
॥ ११ ॥ अयं तु तीर्थहेतुत्वा—त्पादचारोऽतिसार्थकः ॥ येनानंता भवभ्रांति—र्ममापभ्रंशतेऽभितः
॥ १२ ॥ एवं युक्त्या गुरोर्भक्त्या । वाहनग्राहणाग्रहं ॥ अभिगृहीतराजर्षि—स्तथैव प्रास्थिताध्वनि
॥ १३ ॥ दृष्ट्वा राजगुरुं राज—राजं च पदचारिणं ॥ तयोर्भक्त्या तदन्येऽपि । पद्भ्यां चेलुर्मुनींद्र-
वत् ॥ १४ ॥ चित्रमंगे लगंतीभिः । संघप्रस्थानधूलिभिः ॥ यात्रिकाः कलयामासु—र्नैर्मल्यं धौत-
वस्त्रवत् ॥ १६ ॥ प्रतिस्थानं स्फुरच्चैत्य—परिपाट्यर्चनादिभिः ॥ गृहस्थित इवाज्ञास्त । न कोऽपि
प्रस्थितिश्रमं ॥ १७ ॥ धंधूकपुरमासाद्य । तद्वासिजनदर्शितां ॥ नृपोऽनमद्गुरोर्जन्म—भूमिं तीर्थमि-

वोत्तमः ॥ १८ ॥ कोलिकायां स्थितो लिख्ये । प्रतुरत्रेति नृपतिः ॥ चैत्यं विधाप्य तन्नाम्ना । तत्र श्रीवीरमासिमत् ॥ १९ ॥ ततः प्रस्थाय सर्वत्र । शासयन्नार्हतं मतं ॥ स प्राप वलभीडंगं । पुण्यरंगतरंगितः ॥ २० ॥ तुंगौ तुल्यस्वरूपाद्री । विद्येते तस्य गोचरे ॥ गुरुस्तदंतरे स्थित्वा । प्रातरावश्यकं व्यधात् ॥ २१ ॥ धर्मध्यानपरं तत्र । वीक्ष्य तं सूरिशेखरं ॥ महीशः श्रेयसीभक्ति—स्तद्गिरिद्वयमूर्धनि ॥ २२ ॥ कारयित्वा विहारौ द्वौ । ताविवोच्चैः समुन्नतौ ॥ श्रीमन्नाभेयवामेय—प्रतिमे समतिष्ठपत् ॥ २३ ॥ युग्मं ॥

ततोऽपि प्रस्थितो नृप—स्तीर्थदृष्टौ ततोत्सवः ॥ साक्षान्मोक्ष इवारुक्ष—त्पुंडरीकगिरीश्वरं ॥ २४ ॥ दृष्ट्वा तत्र निजामात्य—कारितं चैत्यमुज्ज्वलं ॥ स मूर्तमिव तत्कीर्ति—स्तोमं मेने स्वमानसे ॥ २५ ॥ रोमांचितः प्रमोदाब्धि—मग्नो विकसितो हृदि ॥ राजर्षिर्गुरुणा सार्धं । ववंदे नाभिनंदनं ॥ २६ ॥ तीर्थे लोकोत्तरां प्रौढिं । जिनधर्मस्य वीक्ष्य सः ॥ मन्यतेस्म भृशं धन्य—मात्मानं तद्वासितः ॥ २७ ॥ अभ्यर्च्य कुसुमैर्हैमै—र्मारुदेवेयमीश्वरं ॥ राट् चक्रे शक्रवच्चैत्य—परिपाटिमहामहं ॥ २८ ॥ या चक्रवुर्वतासूर्य—पश्याः क्षोणीशवल्लभाः ॥ प्रतिचैत्यं भ्रमंतिस्म । ता

ध्यप्यर्चनकाम्यया ॥ २९ ॥ मधूकपुरवास्तव्यः । प्राग्वाटकुलमंडनं ॥ हंसमंत्रीशतनयो । मारुकुक्षि-
सरोंबुजं ॥ ३० ॥ जगडः सपादकोटि—मूल्यमाणिक्यदानतः ॥ आद्यां मालां ललौ तत्र । दुःप्रा-
पेंऽपदासये ॥ ३१ ॥ लक्ष्मीवंतः परेऽप्येवं । बहुस्पर्धाः शुभश्रियः ॥ स्वयंवरणमालाव—न्मालां
जगृहुराग्रहात् ॥ ३२ ॥ सर्वस्वेनापि को मालां । न गृह्णीयाज्जिनौकसि ॥ इह लोकेऽपि यत्पुण्यैः
। स्फुरेदिंद्रपदं नृणां ॥ ३३ ॥ राज्ञ्यो भोपलदेव्याद्या । लीला नृपसुतापि च ॥ उद्यापनाद्यैः स-
त्कृत्यैः । स्वश्रियं तीर्थगां व्यधुः ॥ ३४ ॥ क्षौमस्वर्णमणीहेम—हस्त्याद्यैर्याचकव्रजं ॥ जीवयंतं नृपं
प्रेक्ष्य । विपश्चित्कश्चिदूचिवान् ॥ ३५ ॥

नष्टास्तेऽर्थिभियेव कल्पतरवो नायांति पार्श्वे नृणां । मानेनेव सुरा रुषेव न वशाः स्वर्णादि
संसिद्धयः ॥ लोकः सैष कथं भविष्यति कलौ ध्यात्वेति वेधा ध्रुवं । तत्स्थाने विदधे भवंतमधुना
चौलुक्यभूमीधव ॥ ३६ ॥ विहिताष्टाहिकास्वर्ण—ध्वजारोपादिसत्क्रियः ॥ वंदित्वादीश्वरं भूपो । ज-
गादैवं कृतांजलिः ॥ ३७ ॥ स्वामिन् ये व्यगलन् घस्रा—स्त्वदुपास्तिविनाकृताः ॥ संतापं कुर्वते ते
मां । करच्युतसुवर्णवत् ॥ ३८ ॥ विषार्त्त इव पीयूषं । गदार्त्त इव चौषधं ॥ भवार्त्तस्त्वामहं प्राप्य ।

प्रीतिं प्राप्तोऽस्मि संप्रति ॥ ३९ ॥ सार्वभौमोऽपि मा भूवं । त्वद्दर्शनपराङ्मुखः ॥ त्वद्दर्शनपरः स्यां तु । लक्ष्मीत्वे विहगोऽप्यहं ॥ ४० ॥ देवोऽर्हन् गुरुरग्रणीर्व्रतभृतां धर्मः कृपांभोनिधि—र्लोकाढ्यं करणी रमा परिणतव्यापारपारीणता ॥ उच्चैः सज्जनसंगमो गुणरतिश्चाध्यात्मनिष्णातता । स्वामिन्मे त्वदनुग्रहात्प्रतिभवं भूयासुरेतेऽनिशं ॥ ४१ ॥ इत्याप्रार्थयमानं तं । पार्थिवं प्रेक्ष्य देवतः ॥ नेदिष्टशरणाः कश्चि—दुचितं प्रोचिवानिति ॥ ४२ ॥ यो ददात्येकपुष्पेण । नरामरशिवश्रियं ॥ तस्य श्रीआदिदेवस्य । कटरे किंवदार्जवं ॥ ४३ ॥ पुनः पुनः पठेत्युक्ते । श्लोकेऽस्मिन् पठिते सति ॥ वारानव ददौ तस्मै । नवलक्षान्मुदा नृपः ॥ ४४ ॥ पंचशक्रस्तवैर्देवं । वंदित्वानंदमंदिरं ॥ हेमाचार्योऽपि तीर्थेशं । प्रार्थयामासिवानिति ॥ ४६ ॥ त्वमीशस्त्वं तातस्त्वमसि सदयस्त्वं हितकर—स्त्वमर्न्यस्त्वं सेव्यस्त्वमखिलजगद्रक्षणचणः ॥ अतस्त्वत्प्रेष्योऽहं भवपरिभवत्रस्तहृदयः । प्रपन्नस्त्वामस्मि त्वरितमव मां नाभितनय ॥ ४७ ॥ अवतीर्य ततस्तीर्था—र्चमध्यानान्महीश्वरः ॥ कतिभिर्दिवसैः प्राप—दुज्जयंतगिरीश्वरं ॥ ४८ ॥ समारोहति सूरींद्रे । नरेंद्रे च समं तदा ॥ स चकंपे गिरिर्लोका—पद्युत्पाटितशैलवत् ॥ ४९ ॥ तत्कंपकारणं पृष्टः । सूरिराचष्ट तं प्रति ॥ देवास्मिन् विद्यते

मार्गे । शिला सिद्धशिलाह्वया ॥ ५० ॥ अधस्ताद्भवतोः पुण्य—शालिनोर्युगपद् द्वयोः ॥ निपतिष्यत्यसौ मूर्ध्नि । श्रुतिरित्यस्ति वृद्धजः ॥ ५१ ॥ आवां वर्तावहे पुण्य—वंतौ तद्भवतोरधः ॥ आवयोरुपरि ह्येषा । कदाचन पतेच्छिला ॥ ५२ ॥ तदारुह्य भवान् पूर्वं । तीर्थयात्रां व्यवस्यतु ॥ अहं तु पश्चाद्वंदिष्ये । सामुद्रविजयं जिनं ॥ ५३ ॥ नृपोऽवोचन्न मे युक्त—मेवं विनयलोपतः ॥ आरोहतु प्रभुः पूर्वं । पश्चादेष्याम्यहं पुनः ॥ ५४ ॥ तथा कृत्वा स सूरींद्रो । गूर्जरेंद्रोऽपि संघयुक् ॥ क्रमात्प्रणेमतुर्देवं । स्मरापस्मारघस्मरं ॥ ५५ ॥

जिनस्य स्नात्रपूजांग—रागाद्यैरत्र सूरिभिः ॥ संचिन्वतेस्म पुण्यानि । राजर्षिरपरेऽपि च ॥ ॥ ५६ ॥ स एव जागडः प्राग्व—त्तादृग्माणिक्यमद्भुतं ॥ मालाक्रमे पुनर्दत्वा । जग्राहेंद्रपदं सुधीः ॥ ५७ ॥ तीर्थोचितानि कृत्यानि । विरचय्याखिलान्यपि ॥ एवं विज्ञपयामास । राजा राजीमतीप्रियं ॥ ५८ ॥ ध्रुवं त्वद्ध्यानवात्याभि—र्विलीना मेऽघमंडली ॥ जातं त्वद्ध्यानयोगेन । मन्मनस्त्वन्मयं प्रभो ॥ ६१ ॥ अथोपास्य चिरं स्तोत्रैः । कुसुमैरिव कोमलैः ॥ तीर्थनाथं ययाचैवं । हेमाचार्योऽपि हर्षुलः ॥ ६२ ॥ मया प्राप्तो न त्वं क्वचिदपि भवे प्राचि नियतं । भवभ्रांतिर्नो चेत्कः

थमियतसंख्याविगर्हिता ॥ इदानीं प्राप्तोऽसि त्रिभुवनविभो पुण्यवशात—स्ततो नत्वा क्लेशं रचय
मचिरं मे शिवसुखं ॥ ६३ ॥ ततो मत्वा दुरारोहं । गिरिं शृंखलपद्यया ॥ सुराष्ट्रादंडनाथेन । श्री·
मालज्ञातिमौलिना ॥ ६४ ॥ राणश्रीआंबदेवेन । जीर्णदुर्गदिगाश्रितां ॥ पद्यां सुखावहां नव्यां ।
श्रीचौलुक्यो व्यदीधपत् ॥ ६५ ॥ युग्मं ॥ ततः प्रयाणमासूत्र्य । धात्रीशो देवपत्तने ॥ चंद्रवैहासि·
कश्रीकं । श्रीचंद्रप्रभमानमत् ॥ ६६ ॥ अत्रापि तादृग्माणिक्य—दानेन स हि जागडः ॥ प्रथमे·
ह्नोऽनवत्पुण्ये । कांक्षा हि महती सतां ॥ ६७ ॥ तस्य तेन चरित्रेण । सर्वलोकातिशायिना ॥ वि·
स्मितात्मा स राजर्षिः । संघाध्यक्षं तमभ्यधात ॥ ६८ ॥ सपादकोटिमूल्यानि । दुरापाणि नृपैरपि ॥
एतानि त्रीणि रत्नानि । कुतस्त्वमुपलब्धवान् ॥ ६९ ॥ लब्धवांश्चेत्कथं पुण्य—कर्मण्येवं वितीर्ण·
वान् ॥ स्थाने स्थाने हि तद्वत्तं । त्वद्वदत्ते न कश्चन ॥ ७० ॥ जगौ स जागडो राजन् । मधुक
इति विश्रुतं ॥ पुरमत्रास्ति तत्रासन् । मत्पूर्वेऽतिनृपाः श्रिया ॥ ७१॥ मत्पूर्वजार्जितमरु—देतन्मा·
णिक्यपंचकं ॥ करांबुजे मम पितु–र्हंससंज्ञस्य मंत्रिणः ॥ ७२ ॥ तन्मध्यात् त्रयमेतेषु । त्रिषु स्था·
नेषु मयार्पिता ॥ अवाकांदाद्वयीकर्तुं । करे धर्तुं च निर्वृतिं ॥ ७३ ॥ परं चिकीर्षितोऽप्यासी—त्तस्य

यात्रोत्सवो न हि ॥ ततो मृत्युक्षणे तातः । स मामूचेंतिकस्थितं ॥ ७४ ॥ इमानि पंचरत्नानि । स्वीक्रियंतां त्वयांगज ॥ शत्रुंजयादितीर्थेषु । देयं चैकैकमात्मना ॥ ७५ ॥ द्वे इमे च व्ययीकृत्य । निर्वाह्यं स्वकुटुंबकं ॥ इत्युक्त्वा तानि दत्वा च । मह्यं तातः परासिवान् ॥ ७६ ॥ युग्मं ॥ तदुक्तं तन्मया चक्रे—ऽधुना शेषं मणिद्वयं ॥ इत्यनामिदमुक्त्वैत—ज्जागमः स्वामिने ददौ ॥ ७७ ॥ मार्तंडमिव चंद्रार्चि—र्मिलितं तत्करोदरे ॥ धृत्वा नृपोऽपि संघोऽपि । पश्यतःस्म पुनः पुनः ॥ ७८ ॥ नाहं शस्यो महीशोऽपि । शस्योऽयं वणिगप्यलं ॥ यो माणिक्यमयीं पूजां । तनोति त्रिजगद्गुरोः ॥ ७९ ॥ ध्यात्वेति दापयित्वा च । सार्धकोटीद्वयं धनं ॥ तस्मान्माणिक्ययुग्मं त—त्स नृमाणिक्यमग्रहीत् ॥ ८० ॥ युग्मं ॥ तन्मध्यनायकीकृत्य । हारयुग्मं विधाप्य च ॥ स प्रैषीद्दैवते शत्रुं—जयेऽपि च तदर्हतोः ॥ ८१ ॥ चौलुक्यः प्रस्थितस्तस्मा—त्प्राप पत्तनमुत्सवैः ॥ सत्कृत्य यात्रिकान् सर्वान् । विससर्ज च सादरं ॥ ८२ ॥

अथ जिज्ञासमानाय । चौलुक्यपृथिवीभृते ॥ स्वरूपं सत्यतत्वानां । हेमसूरिरदोऽवदत ॥८३॥ जैनेश्वरे मते जीवा । पुण्यं चाश्रवसंवरौ ॥ निर्जराबंधमोक्षाश्च । सप्ततत्वीति कीर्त्यते ॥ ८४ ॥ त-

व जीवा जिनैः प्रोक्ता । ज्ञानदर्शनलक्षणाः ॥ अनाद्यनंताः कर्तारो । भोक्तारः परिणामिनः ॥
॥ ८५ ॥ संसारी मुक्तभेदेन । ते जीवा द्विविधा मताः ॥ तेष्वादिमाः पुनर्द्वेधा । स्थावरत्रसभाव-
तः ॥ ८६ ॥ एकाक्षाः स्थावराः पृथ्वी—जलवह्न्यनिलद्रुमाः ॥ चत्वारः प्रथमे तेषां । सूक्ष्माः स्यु-
र्बादरा अपि ॥ ८७ ॥ महीरुहास्तु प्रत्येक—साधारणतया द्विधा ॥ तेष्वाद्या बादरा एव । पश्चि-
माः सूक्ष्मबादराः ॥ ८८ ॥ त्रसाश्चतुर्विधा द्वित्रि—चतुःपंचेंद्रियत्वतः ॥ तत्र शंखजलौक—कृ-
म्याद्या द्वींद्रिया मताः ॥ ८९ ॥ लिक्षापिपीलिकायूका—मुख्यास्तु त्रींद्रियास्तथा ॥ द्विरेफमक्षि-
कादंश—प्रमुखाश्चतुरिंद्रियाः ॥ ९० ॥ शेषास्तिर्यग्नैरयिक—मानवत्रिदिवौकसः ॥ ज्ञेयाः पंचेंद्रि-
यास्तेऽपि । संज्ञ्यसंज्ञितया द्विधा ॥ ९१ ॥ समनस्कतया शिक्षो—पदेशाद्यं विदंति ये ॥ ते सं-
ज्ञिनो मता लोके । विपर्यस्ता असंज्ञिनः ॥ ९२ ॥ आयुरुच्छ्वासपंचाक्ष—रुक्षासांगबलत्रयं ॥ प्रा-
णा दशैषां संबंधा—ज्जीवाः प्राणभृतः स्मृताः ॥ ९३ ॥ एकद्वित्रिचतुरक्षाः । संज्ञिषु तेषु देहिषु
॥ ते स्युश्चतुःषट्सप्ताष्ट—नवदिक्प्रमिताः क्रमात ॥ ९४ ॥ जीवाः पूर्वोदिता द्वेधा । पर्याप्तेतरभाव-
तः ॥ प्राप्य पर्याप्तीः पर्याप्ता । जीवंतेंतर्मुहूर्ततः ॥ ९५ ॥

सामस्त्येनोदितास्तास्तु । षम् जैनागमपारगैः ॥ आहारकायकरणो-च्छ्वासवाङ्मानसाख्यया ॥ ९६ ॥ पर्याप्तिकर्मणा ताः स्यु-श्चतस्रः पंच षट् तथा ॥ एकाक्षाणां विकलानां । पंचाक्षाणामपि क्रमात् ॥ ९७ ॥ व्यवहार्यव्यवहारि-तया जीवाः पुनर्द्विधा ॥ आद्याः सर्वेऽपि ते सूक्ष्मा । निगोदास्ते तथांतिमाः ॥ ९८ ॥ भवस्था एव जीवाः स्यु-र्मुक्ताः कर्मपरिक्षयात ॥ कांतलोकांतविश्रांताः । सिद्धानंतचतुष्टयाः ॥ ९९ ॥ चिदानंदमयं शश्व-द्यत्सुखं निर्वृतात्मनां ॥ वाग्मिनामपि तन्न स्यात् । कदाचिद्वाक्यगोचरं ॥ ४०० ॥ धर्माधर्मनभःकाल-पुद्गला एव कीर्तिताः ॥ अजीवाः सह जीवेन । द्रव्याण्येते मतेऽर्हतः ॥ १ ॥ जीवानां पुद्गलानां च । स्वयं विष्वक्प्रसर्पतां ॥ सहायः कीर्तितो धर्मो । यथांभो जलचारिणां ॥ २ ॥ स्वेनैव जीवाजीवानां । तिष्टतां स्थितिकारणं ॥ अधर्मोऽभिमतो वृक्ष-छाया मार्गजुषां यथा ॥ ३ ॥ एकात्मप्रमितासंख्य-प्रदेशप्रचयात्मकौ ॥ धर्माधर्मावभिव्याप्य । लोकाकाशं किल स्थितौ ॥ ४ ॥ अवकाशदमन्येषा-माकाशं स्वप्रतिष्ठितं ॥ लोकालोकौ स्थितं व्याप्य । प्रदेशानंत्ययोगतः ॥ ५ ॥ लोकाकाशस्थिताः काला-णवः कालोऽग्रीमः स्मृतः ॥ ज्योतिषे यः क्षणाद्यात्मः । स तु स्याद्व्यावहारिकः ॥ ६ ॥ नवजूतन-

विष्वक्ता । भावानां या विनाव्यते ॥ सा कालश्रीमितेनैव । ज्ञेया सर्वज्ञभाषितात् ॥ ७ ॥ स्पर्शर-
सगंधवर्ण—कलिताः पुद्गला मताः ॥ अबद्धा अणवस्ते स्यु—र्बद्धाः स्कंधा इति श्रुते ॥ ८ ॥
ते च छायांतातपोद्योत—रूपाः सूक्ष्माश्च बादराः ॥ कर्मशब्दादिजनकाः । सुखदुःखादिहेतवः ॥ ९ ॥
चित्तवाक्कायकर्म स्या—दाश्रवः स शुभः पुनः ॥ निबंधनं शुभस्यासा—वशुभस्त्वितरस्य च ॥ १०॥
मद्ध्यानसंगतं चेतः । शुभं कर्म प्रसूयते ॥ दुर्ध्यानवासितं तत्तु । विपर्यस्तमसंशयं ॥ ११ ॥ मि-
थ्योभिनश्रुतज्ञानां—चितं च वचनं भवेत् ॥ शुभार्जकं ततस्त्वन्य—दशुभार्जकमंगिनां ॥ १२ ॥
गुप्तेन वपुषा देही । कर्म बध्नाति सत्तमं ॥ अगुप्तेन महारंभ—कारिणा चेतरत्पुनः ॥ १३ ॥ आ-
श्रवस्य निरोधः स्यात् । संवरः स तु सूरिभिः ॥ द्रव्यभावविभागेन । द्विविधः परिकीर्त्यते ॥ १४ ॥
तत्रादिमो नवकर्म—पुद्गलादानवर्जनं ॥ द्वितीयकस्तु संसार—हेतुतत्त्वनिवर्हणं ॥ १५ ॥ कर्मणां
प्रागुपात्तानां । जरणं निर्जरा स्मृता ॥ सा सकामा यतीनां स्या—दकामान्यशरीरिणां ॥ १६ ॥
आदानं कर्मयोग्यानां । पुद्गलानां यदंगिनः ॥ मिथ्यात्वादिसहायस्य । स बंधः पारतंत्र्यवत् ॥१७॥
प्रकृतिस्थित्यनुभाव—प्रदेशैः स चतुर्विधः ॥ तत्र स्वभावः प्रकृति—र्ज्ञानावृत्यादिकर्मणां ॥ १८ ॥

जघन्योत्कर्षतः काल—नैयत्यं कर्मणां स्थितिः ॥ तेषां रसोऽनुभावः स्यात् । प्रदेशो दलसंहतिः ॥ ॥ १९ ॥ मिथ्यात्वमविरतिश्च । कषाया योगसंयुताः ॥ एते भवंति चत्वारः । कर्मणां बंधहेतवः ॥ ॥ २० ॥ निःशेषकर्मनिर्मोक्षे । मोक्षः प्रोचे जिनेश्वरैः ॥ स भवत्यात्मनां नूनं । केवलज्ञानशालिनां ॥ २१ ॥ अत्यंतदुःखनाशेन । यदस्मिन् शाश्वतं सुखं ॥ आत्मनां भवतीत्येष । मोक्षः सर्वप्रियंकरः ॥ २२ ॥ सप्त तत्वान्यमी राजन् । श्रुत्वा यः श्रद्दधात्यलं ॥ सम्यग्दृष्टिः स भूत्वांते । लभते तत्परं पदं ॥ २३ ॥

अथ तीर्थंकरादीनां । चरितं श्रोतुमिछता ॥ चौलुक्येनार्थयांचक्रे । हेमाचार्योऽतिगौरवात् ॥ ॥ २४ ॥ ततो रसाढ्यं षट्त्रिंश—त्सहस्रमितिमागतं ॥ स्थविरावलीचरितांतं । दशपर्वीमनोरमं ॥ ॥ २५ ॥ त्रिशष्टिशलाकामर्त्य—चरित्रं संस्कृतं कृतं ॥ द्राक्षापाककवित्वेन । कृत्वा स तमशिश्रवत् ॥ २६ ॥ युग्मं ॥ अन्यानपि प्रभुर्योग—शास्त्रादीन् ज्ञानदीपकान् ॥ ग्रंथांस्तदर्थितश्चक्रे । वीतरागस्तवानपि ॥ २७ ॥ योगशास्त्रं यतिश्राद्ध—जनाचारातिमेदुरं ॥ पठित्वा गुरुणा तेन । सम्यग्व्याख्यापयन्नृपः ॥ २८ ॥ एवं सैद्धांतिकं सारं । शृण्वानः स प्रपन्नवान् ॥ बिरुदं चारुविचार—चतुर्मु-

श्र इति दिनौ ॥ २९ ॥ आददे नियमं चभृ—त्तदा नृपिष्ठभक्तितः ॥ लेखनीया मया सर्वे । ग्रं·
था: स्वगुरुकर्तृकाः ॥ ३० ॥ तेषु लेलिख्यमानेषु । लेखकैर्बहुभिः सदा ॥ तालपत्रत्रुटिः कोशे ।
मर्वथा समपद्यत ॥ ३१ ॥ लेखनाधिकृते नैत्य । ततो व्यज्ञपि नृपतिः ॥ संप्रत्यजायातपत्राणां । ले·
खनं स्खलितं स्थितं ॥ ३२ ॥ तन्निशम्य नृपोऽध्यासी—न्नवग्रंथविनिर्मितौ ॥ गुरोरस्खलिता शक्ति
—र्मम तल्लेखनेऽपि न ॥ ३३ ॥ इति लज्जाभृतो राजा । सायमल्पपरिछदः ॥ जगाम बहिरारामं ।
खरतालद्रुमांस्तस्मि—न्नभ्यर्च्य घुसृणादिभिः ॥ स एवं कथयामास ।
स्वश्रीहसितनंदनं ॥ ३४ ॥ स्वात्मनीव मते जैने । यदि मे सादरं मनः ॥ यूयं व्रजत सर्वेऽपि ।
मंत्रसिक्त इव स्वयं ॥ ३५ ॥ कथयित्वेति गांगेय—मयं ग्रैवेयकं नृपः ॥ कस्याप्येकस्य तालस्य ।
श्रीनाडद्रुमतां तदा ॥ ३६ ॥ युग्मं ॥ तस्थौ च सौधमागत्य । धर्मध्यानपरो नृपः ॥ श्रीनाडद्रु·
स्कंधदेशे न्यवीविशत् ॥ ३७ ॥ प्रातरारामिकाः प्रेत्य । श्रीतालांस्तान् महीरुहः ॥ गु·
मतां तांश्च । निन्ये शासनदेवता ॥ ३८ ॥ पारितोषिकदानेन । स समानंद्य तानवक् ॥ प·
र्वैनिकस्थमुर्वीद्रं । तन्निवेद्य व्यवीवृधन् ॥ ३९ ॥
त्राण्यानीय दीयंतां । लेखकेभ्यो यदृच्छया ॥ ४० ॥

किमेतदिति पृष्टः सन् । गुरवे राड् व्यजिज्ञपत् ॥ तं वृत्तांतं चमत्कार—कारकं सर्वपर्षदः ॥ ॥ ४१ ॥ हेमाचार्यस्तदाकर्ण्य । कर्णयोरमृतोपमं ॥ नृपेण पारिषद्यैश्च । सहारामं तमागमत् ॥४२॥ कर्णजापं गते तस्मिन् । वृत्तांते जनताननात् ॥ मिथ्यात्विनोऽपि तत्रासन् । द्विजाद्यास्तद्दिदृक्षया ॥ ॥ ४३ ॥ आलोक्य खरतालेषु । श्रीतालत्वं तदातनं ॥ सूरिप्रभृतयः सर्वे । ते विसिस्मियिरेतमां ॥ ॥ ४४ ॥ अथ मिथ्यात्विनः सर्वान् । श्रावयन् भास्वरस्वरः ॥ उपश्लोकयितुं जैन—मतं प्रभुरिदं जगौ ॥ ४५ ॥ अस्त्येवातिशयो महान् भुवनविद्धर्मस्य धर्मांतरा—द्यच्छक्त्यात्र युगेऽपि तालतरवः श्रीतालतामागताः ॥ श्रीखंडस्य न सौरभं यदि भवेदन्यद्रुतः पुष्कलं । तद्योगेन तदा कथं सुरभितां दुर्गंधयः प्राप्नुयुः ॥ ४६ ॥ तद्दुद्भूतैः प्रभूतैस्तै—र्विशालैः कोमलैर्दलैः ॥ लिलिखुर्लेखकाग्रण्यो । ग्रंथान् प्रत्नकृतान् सुखं ॥ ४७ ॥ राजर्षिरेकदाश्रौषी—द्देशनायां गुरोरिति ॥ विवेकिनो न वर्षासु । निष्क्रम्यंते गृहाद्बहिः ॥ ४८ ॥ वर्षर्तौ हि जलौघैः स्या—दिला जीवाकुलाखिला ॥ तत्र देही भ्रमन् हंति । तानुन्मत्तलुलायवत् ॥ ४९ ॥ मिथ्यात्विनोऽपि जल्पंति । जीवरक्षाकृते कृती ॥ काशमात्रीं भ्रमन् धात्रीं । वर्षास्वेकत्र संवसेत् ॥ ५० ॥ अत एव पुरा श्रीम—न्नेमिनाथोपदे-

शनः ॥ कृष्णो नियमयामास । वर्षारात्रे बहिर्भ्रमं ॥ ५१ ॥ चतुर्भिः कलापकं ॥ एतदाकर्ण्य चौलु-
क्यो । विवेकी नियमं ददौ ॥ वर्षासु न मया चर्या । कार्या कुत्राप्यतः परं ॥ ५२ ॥ दर्शनं सर्व-
चैत्यानां । गुरोरपि च वंदनं ॥ मुक्त्वा पुरेऽपि न प्रायो । भ्रमिष्यामि घनागमे ॥ ५३ ॥ अंतर्ब-
हिरपि प्रौढ—पंकशंकापनूतये ॥ बभंज तद्व्रतं नैव । राजकार्ये महत्यपि ॥ ५४ ॥ स तस्य नि-
यमस्तादृ—क्पृथिव्यां पप्रथे ततः ॥ किं पुण्यकेतकस्य स्यात् । प्रछन्नं कीर्तिसौरभं ॥ ५५ ॥ श्रु-
त्वाभिग्रहवार्तां तां । विष्वक्चरचराननात ॥ मत्वा च गूर्जरं देशं । स्वर्गदेशीयमृद्धिभिः ॥ ५६ ॥
तं जेतुं दुर्धरानीकः । शकेंद्रो गजनात्तदा ॥ प्रतिष्ठतेस्म पृथिवीं । कृतांत इव कंपयन् ॥ ५७ ॥
युग्मं ॥ दृष्ट्वा तदीयं प्रस्थान—मुत्तराशाचराश्चराः ॥ विजने गूर्जरेंद्राय । तदुक्त्वेति व्यजिज्ञपन्
॥ ५८ ॥ स्वामिन् परंतपं तस्य । प्रतापाद्धिमदीधितिं ॥ विपोढुमक्षमाः के नो । कौशिकंति महो-
श्वराः ॥ ५९ ॥ आप्लावयन् सकटकान् । महतोऽपि महीभृतः ॥ तदीयः प्रसरन् सैन्य—वार्धिः के-
न निरोत्स्यते ॥ ६० ॥ आस्तां तत्सादिभिः सार्धं । स्पर्धायुद्धकथापि च ॥ तत्संमुखमपि द्रष्टुं ।
कोऽपि नो शक्यते भटः ॥ ६१ ॥

श्रुत्वैतां चरविज्ञप्तिं । चिंताक्रांतो मनाग् नृपः ॥ अमात्यसहितोऽभ्येत्य । वसतिं गुरुमब्रवीत् ॥ ६२ ॥ चरैरद्य प्रभो प्रोक्तं । तुरुष्काधिपतिः स्वयं ॥ प्रस्थाय गर्जनादत्रा—गच्छन्नस्ति महाबली ॥ ६३ ॥ सहिष्णुरपि तं भंक्तु—मसहिष्णुरिवास्म्यहं ॥ वर्षारात्रौ गृहान्नैव । बहिर्यामीत्यभिग्रहात् ॥ ६४ ॥ मयि सोऽत्र स्थिते सैन्यै—रुद्वेलांभोधिविभ्रमैः ॥ एत्य ध्वंसेत चेद्देशं । तदाहं विदधामि किं ॥ ६५ ॥ एकतो नियमोऽयं मे । रिपुरायाति चान्यतः ॥ इतस्तटी न्वितो व्याघ्र । इति सत्यमुपस्थितं ॥ ६६ ॥ व्याजहार गुरुर्धर्मे । निश्चलास्ति मतिस्तव ॥ अतस्त्वद्विषयं नायं । प्रतिपंथी मथिष्यति ॥ ६७ ॥ त्वदाराधितसर्वज्ञ—धर्ममाहात्म्यकुंभजः ॥ अगाधमपि चिंताब्धिं । निपास्यति च निश्चितं ॥ ६८ ॥ इत्याश्वास्य नृपं सूरिः । पद्मासनमधिश्रितः ॥ परमं दैवतं किंचि—दंतर्ध्यातुं प्रचक्रमे ॥ ६९ ॥ अतिक्रांते मुहूर्तेऽथ । समायांतं नभोऽध्वना ॥ पल्यंकमेकमद्राक्षी—द्दिव्यक्षौमास्तृतं नृपः ॥ ७० ॥ अंबरेऽसौ निरालंबो । विद्याधरविमानवत् ॥ कथमेतीति विस्मेरः । स तं मुहुरवैक्षत ॥ ७१ ॥ गगनात्तावदुत्तीर्य । स पल्यंकः क्षणादपि ॥ गुरोः पुरः स्थितस्तस्थौ । सुप्तैकपुरुषाश्रितः ॥ ७२ ॥ पल्यंकः कोऽयमत्रायं । कः पुमानेति वेह किं ॥ इतिप्रश्नपरं नृपं । व-

नागे गुरुपुंगवः ॥ ७३ ॥ तवोपर्यापतन् योऽस्ति । शकाधीशो महाबली ॥ पल्यंकशयितः सोऽयं ।
मयानीतोऽत्र सैन्यतः ॥ ७४ ॥ श्रुत्वा तत्संभ्रमाद् भूपो । यावत्तन्मुखमीक्षते ॥ तावत्सुप्तोत्थितः सोऽ-
पि । शकाधीशो विमृष्टवान् ॥ ७५ ॥ क्व तत्स्थानं क्व तत्सैन्यं । काहं कथमिहागमं ॥ केऽमी मे
पुरतः सर्वे ; किमिदं स्वप्नसंनिभं ॥ ७६ ॥
अथ सूरिस्तमाचिष्ट । चतुर्दिक्षु क्षिपन् दृशौ ॥ किं ध्यायसि शकाधीश । शाखापतितकीरवत्
॥ ७७ ॥ एकातपत्रमैश्वर्यं । निजपुण्यादिह क्षितौ ॥ कुर्वंतो यस्य साहाय्यं । कुर्वंति त्रिदशा अपि
॥ ७८ ॥ शक्रमप्यादपि योऽयं । स्वकीयरिपुभूपतीन् ॥ स्वशक्त्या यमवद्बध्वा । समानयति तत्क्ष-
णात् ॥ ७९ ॥ सोऽयं कुमारपालो राट् । शत्रुदर्परजोमरुत् ॥ त्वामत्रानाययद्बध्वा । श्रुत्वायांतं स्व-
नीवृति ॥ ८० ॥ शक्तिमेतादृशीमस्य । विमृश्य स्वहितेप्सया ॥ शरण्यमेनं शरणी—कुरुष्व नर-
नायकं ॥ ८१ ॥ पंचभिः कुलकं ॥ ततोऽद्भुतभयोद्वेग—चिंतालज्जादिभावभृत् ॥ दर्पेण सह प-
ल्यंकं । त्यक्तवान् गर्जनप्रभुः ॥ ८२ ॥ प्रद्योतनमिवाभ्यर्कं । हेमसूरिं प्रणम्य तं ॥ स चौलुक्यं न-
मश्चक्रे । धिग्नृणां पारवश्यतां ॥ ८३ ॥ ऊचे तं हस्तावायोज्य । राजन् ज्ञातं मया न ते ॥ ईह-

ग्दैवतसाहाय्य—मन्यराजकदुर्लनं ॥ ८४ ॥ अतःपरं मया चक्रे । यावज्जीवं त्वया सह ॥ सत्यसं-
धा ध्रुवं संधि—रत्नार्थे शपथो मम ॥ ८५ ॥ तमवोचत चौलुक्यो । मद्गौर्मीर्थे द्विषंतपं ॥ शृएवन्न-
पि किमित्येवं । त्वमागछन्ननूर्वद ॥ ८६ ॥ स स्माह नियमस्थस्त्वं । न पुराद्वहिरेष्यसि ॥ इति
छलेन त्वद्देशं । नंक्तुं प्रस्थितवानहं ॥ ८७ ॥ परं त्वं लप्यसे राजन् । कथमीदृग्गुरौ सति ॥ मृ-
गेंद्रे हि समीपस्थे । श्वापदाः प्रनवंति न ॥ ८८ ॥ पूर्वं श्रुतोऽपि ते वीर । विक्रमो विस्मृतोऽल-
वत् ॥ विस्मरिष्यत्यसौ जातु । न संप्रति पुनः पुनः ॥ ८९ ॥ तुभ्यं स्वस्त्यस्तु मां देव । प्रेषय
स्वालयंप्रति ॥ आकुला हि नविष्यंति । दीनाः सैन्या ममान्यथा ॥ ९० ॥ राजर्षिस्तं पुनः प्रोचे
। षएमासीं स्वपुरे यदि ॥ अमारिं कारयेस्तर्हि । त्वां विमुंचे न चान्यथा ॥ ९१ ॥ ममेदमेव सर्व-
स्व—मेतदेव च वांछितं ॥ यद्बलेन बलेनापि । प्राणत्राणं शरीरिणां ॥ ९२ ॥ ममाज्ञाकरणं स-
म्य—क्सुकृतं तव चोर्जितं ॥ प्रणिता प्राणरक्षा च । किममानं शुभं न हि ॥ ९३ ॥ एतावत्त्वं प्र-
पद्यस्व । गृहं गंतुं यदीप्ससि ॥ अन्यथा त्वमिह स्थाता । गुप्ताविव मदोकसि ॥ ९४ ॥
इतो मे नान्यथा मुक्ति—रिति ध्यात्वा शकप्रभुः ॥ चौलुक्यवचनं मेने । बलिष्ठे का विचा-

रणा ॥ ९५ ॥ ततः स्वसौधं नीत्वा तं । सत्कृत्य च सहस्रधा ॥ अतिष्ठपत् त्र्यहं भूपो । लोकज्ञा-
पनकाम्यया ॥ ९६ ॥ जीवरक्षाकृते शिक्षां । दत्वासांस्तत्समं निजान् ॥ प्रेषयित्वा शकेंद्रं तं । स्व-
स्थानं प्रापयन्नृपः ॥ ९७ ॥ तत्र गत्वा नृपाशास्ते । षण्मासीं गजनांतरे ॥ शकाधीशनिदेशेन ।
प्राणत्राणमकारयत ॥ ९८ ॥ समर्प्य प्राभृतं भूरि । हयाद्यं क्षितिपोचितं ॥ विमृश्य यवनेशेन । प-
त्तनं ते प्रपेदिरे ॥ ९९ ॥ तत्प्राभृतं पुरो मुक्त्वा । तत्प्रधानाः स्वनायकं ॥ भृशमानंदयामासु—र-
मारिकरणोक्तिभिः ॥ १०० ॥ अथ स्वयं स राजर्षि—रित्यभिग्रहमादधे ॥ यादृशस्तादृशो वापि ।
वंद्यो जैनमुनिर्मया ॥ १ ॥ अपरेद्युः ससैन्योऽपि । श्रीपथे संचरन्नृपः ॥ नागवल्लीदलव्यग्र—करं
चंचदुपानहं ॥ २ ॥ पण्यस्त्रीस्कंधविन्यस्त—हस्तं मन्मथविभ्रमैः ॥ उश्लेष्टमानं विस्व—न्मुनिमेकं
निरक्षत ॥ ३ ॥ युग्मं ॥ दृष्ट्वापि तं तथा भ्रष्टं । नृपः श्रेणिकनृपवत् ॥ कुंभिकुंभस्थलन्यस्त—म-
स्तकः प्राणमन्मुदा ॥ ४ ॥ दध्यौ च न मुनेरस्य । मनागप्यस्ति दूषणं ॥ निर्माप्यते कुकर्मोच्चै—
र्यत्कर्मज्ञोऽपि कर्मभिः ॥ ५ ॥ कर्हिचिज्जायते जीवो । बली कर्म च कर्हिचित् ॥ अत एवानयो-
र्द्वयोः । शाश्वतोऽस्ति महान्मिथः ॥ ६ ॥ कुसाधोरपि तस्याथ । सुसाधोरिव चानतं ॥ नृपं दृष्ट्वा ज-

षोडश्य वाग्भटामात्यो । लज्जितो मनसि भृशं ॥ श्रीहेम-
हासाथ । पृष्टगो नरकुलाधिपः ॥ ७ ॥ तद्वीक्ष्य वाग्भटामात्यो । लज्जितो मनसि भृशं ॥ श्रीहेम-
चंडाचार्याय । तत्स्वरूपं न्यवेदयत ॥ ८ ॥ नमस्यार्हानमस्यार्ह—विचारज्ञापनाकृते ॥ उपादिश-
त्ततः सूरि—श्चौलुक्यपृथिवीभुजे ॥ ९ ॥ ज्ञानदर्शनसंपन्नो । निःकषायो जितेंद्रियः ॥ सामायिक-
परः साधु—र्वंदनीयः सतां मतः ॥ १० ॥ एते पुनरवंद्याः स्युः । पार्श्वस्थाश्चावसन्नकाः ॥ तथा कु-
शीलसंसक्त—यथाछंदाः श्रुतोदिताः ॥ ११ ॥ पार्श्वस्थः सर्वदेशाभ्यां । द्विविधस्तत्र सर्वतः ॥ सद्-
ज्ञानदर्शनादीनां । पार्श्वे तिष्ठन्निवेदितः ॥ १२ ॥ शय्यातराद्युपजीवी । पार्श्वस्थो देशतः स्मृतः ॥
द्विधा स्यादवसन्नोऽपि । सर्वदेशप्रभेदतः ॥ १३ ॥

तत्राद्यो बहुशय्यादि—ग्राही स्थापितभोज्यपि ॥ परस्त्वावश्यकादीनां । न्यूनाधिकादिकारकः
॥ १४ ॥ कुशीलस्त्रिविधो ज्ञाने । दर्शने चरणेऽपि च ॥ तत्र ज्ञानकुशीलः स्या—दकालेऽध्यय-
नादिकृत ॥ १५ ॥ स दर्शनकुशीलः स्या—च्छंकाद्यासेवनापरः ॥ व्रतकुशीलो निमित्त—भूतिक-
र्मादियोजकः ॥ १६ ॥ पंचाश्रवपरः प्रौढ—गौरवत्रयगर्वितः ॥ योषिद्गेहादिसंक्लेशः । संसक्तः प्र-
णिगद्यते ॥ १७ ॥ उत्सूत्रमाचरन् लोके । दिशत्युत्सूत्रमेव यः ॥ यथाछंदः स विज्ञेयः । स्वछंद-

विच्छिन्नस्थितिः ॥ १८ ॥ अमीषां वंदनाद्राजन् । न कीर्तिर्नापि निर्जरा ॥ कायक्लेशस्तथा कर्म—
बंधः प्रत्युत जायते ॥ १९ ॥ श्रुत्वा तद्ध्यातवान् भूमान् । मम तन्मुनिवंदनं ॥ नूनं न्यषेधयत्कोऽ-
पि । व्याचष्टे यदिदं प्रभुः ॥ २० ॥ ततः स्मित्वा जगादासौ । सम्यगस्म्यद्य शिक्षितः ॥ अतः परं
विधास्यामि । त्वदुक्तमिदं सदा ॥ २१ ॥ अथ नृपनमस्कारा—द्यतिपाशः स लज्जितः ॥ एवं
ध्यातुं समारेभे । भव्यात्मकतया हृदि ॥ २२ ॥ धिग्मामधममूर्धन्यं । यो लब्ध्वाप्यतिदुर्लभं ॥ व्र-
तचिंतामणिं मोहा—त्प्रमादाब्धौ न्यमज्जयं ॥ २३ ॥ सतोऽपि मुनयो भोगान् । विमुच्य व्रतमाद-
धुः ॥ अहं पुनर्व्रतस्थोऽपि । स्पृहयाम्यसतोऽपि तान् ॥ २४ ॥ स वरं शक्तिहीनत्वा—द्यो नांगी-
कुरुते व्रतं ॥ तद्गृहीत्वाथ मुंचंस्तु । न स्तुतेर्भाजनं जनः ॥ २५ ॥ धन्योऽयं भूधवो येन । न-
तोऽहमवकीर्ण्यपि ॥ अहं पुनरधन्यो यो । वंदये तादृशं नृपं ॥ २६ ॥ यः स्वयं स्खलिताचारः ।
सदाचारान् प्रणामयेत् ॥ तस्य स्वात्मानभिज्ञस्य । नरकेऽपि गतिर्न हि ॥ २७ ॥ ततः सर्वं परित्य-
ज्य । तत्किंचिद्विदधेऽधुना ॥ येनाहं सोऽपि राजर्षि—र्नैव लज्जावहे क्वचित् ॥ २८ ॥ ससत्त्वः कु-
लकं ॥ अथ बंधनवत्त्यक्त्वा । धनाद्यं स महाशयः ॥ गुरोरालोचनापूर्वं । पुनर्व्रतमशिश्रियत ॥

॥ २९ ॥ विनानशनना रेण । पापतापमहापदः ॥ दूरं यास्यंति मे नेति । स तदैव तदाददे ॥
॥ ३० ॥ दुस्त्यजोऽपि महामोहः । सुत्यजस्त्यागतोऽनयोः ॥ इतीव साधुरत्याक्षी—द्रागद्वेषौ शुभ
द्विषौ ॥ ३१ ॥ भवदावाग्निदग्धस्य । शांतिर्जीवस्य जायते ॥ अनेनेति मुनिर्मत्वा । स पपौ समताम्रृतं ॥ ३२ ॥ तस्य प्रत्यहमभ्येत्य । नानापाटकवासिनः ॥ चक्रिरे पत्तनजना । भावनाभिः प्र-
भावनाः ॥ ३३ ॥ तं निशम्यानशनिनं । राजर्षिरपि हर्षितः ॥ प्रभावनार्थं तत्रागा—त्पुण्यांशं को
हि नेप्सति ॥ ३४ ॥ गुरुं नत्वा मुनींद्रं तं । यावन्नमति भूपतिः ॥ नमस्कारान्निषेध्यैव । स ताव-
त्तमभाषत ॥ ३५ ॥ देव त्वं मे गुरुः साक्षा—दसि त्वां वंदये कथं ॥ यतोऽस्मि त्वन्नतेर्बुद्धो । व्र-
तानशनभागहं ॥ ३६ ॥ तदा तादृगवस्थोऽपि । न ववंदे यदि त्वया ॥ तदा शिवंकरे स्यातां । क
व्रतानशने मम ॥ ३७ ॥ मज्जितो मे भवांभोधौ । नमस्कारस्तवाभवत् ॥ करावलंबनकरो । महा-
पोत इव स्वयं ॥ ३८ ॥ असौ भवत्प्रसादो मे । सर्वोऽप्यस्ति पचेलिमः ॥ प्रभावनां वितन्वंति ।
यदमी धार्मिका मुदा ॥ ३९ ॥ ज्ञात्वा राज्ञापि स प्रोचे । भवान् भव्याशयो भृशं ॥ अत एव न-
मस्कार—मात्राद् द्रागप्यबुध्यत ॥ ४० ॥ अभव्यास्तु स्वयं विश्व—विदापि प्रतिबोधिताः ॥ न क-

र्हिचित्पचुरुयंते । स्थूलोपलमया इव ॥ ४१ ॥ सुखासुखानिवन्कर्मा—धर्मोसावपि देहिनां ॥ हेतु
निर्वेत्स्वकर्मैव । परं सान्निध्यमात्रकृत ॥ ४२ ॥ त्वमेवास्यधुना धन्यो । येनेदृग्दुःकरं कृतं ॥ प्राप्तं सु
खमपि त्यक्त्वा । कश्चरेद्दुश्चरं यतः ॥४३॥ पंकमग्नो यथा दंती । कश्चिदेव समुध्धृतः ॥ मोहम
ग्नस्तथा देही । कोऽपि ब्रह्मनः खलु ॥ ४४ ॥ भूयास्त्वं सुकृते स्थेया—ननुभूयाः परं महः ॥ प्र
भूया भवनिर्वेदे । विभूयाः शिवशर्मणि ॥ ४५ ॥ इति स्तुत्वा नलान्नत्वा । तं मुनींद्रं महीपतिः ॥
चक्रे प्रभावनां पुण्य—काननामृतसारणिं ॥ ४६ ॥ शुभध्यानसमीरेण । विरजीभूतमानसः ॥ क
तिनिर्दिवसैः स्वर्गं । श्रितः सोऽनशनी मुनिः ॥ ४७ ॥ शत्रुंजयाद्युत्तमतीर्थयात्रा—सिद्धांतसारश्र
वणादिकृत्यैः ॥ एवं शुभश्रीसुभगंभविष्णुन् । घस्रान् स चौलुक्यनृपस्तताम ॥ ४८ ॥ इति श्रीकृ
ष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरित्रे महाकाव्ये देवाधिदेवप्रतिमान
यनतीर्थयात्रादिवर्णनो नाम नवमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ दशमः सर्गः प्रारभ्यते ॥

नृपः कुमारपालोऽथ । प्रश्नयामास तं गुरो ॥ कोऽहं पूर्वभवेऽभूवं । भविता कश्च भाविनि ॥ १ ॥ सिद्धराजः कुतो मह्यं । प्रसह्य द्रुह्यतिस्म च ॥ कस्मादुदयनामात्यो । यूयं च मयि वत्सलाः ॥२॥ न हि प्राग्जन्मसंबंधं । विना कस्यापि कुत्रचित् ॥ वैरं च सौहृदय्यं च । स्यात्रामात्यंतिकं खलु ॥ ३ ॥ कथ्यतां तथ्यमेतन्मे । ज्ञात्वा ज्ञानेन केनचित ॥ प्रभुं विना न कोऽप्यन्यः । संदेहं भंक्तुमीश्वरः ॥ ४ ॥ स व्याजहार मे ज्ञानं । यद्यपि नास्ति किंचन ॥ तथापि देव्यात्रादेशात्सर्वं ते कथयिष्यते ॥ ५ ॥ ततो विसृज्य भूजानिं । गत्वा सिद्धपुरं च तत ॥ सरस्वतीसरित्तीरं । पवित्रं सूरिराश्रयत् ॥ ६ ॥ तत्र मंत्रमयस्नान—पवित्रीकृतविग्रहः ॥ ध्यानोदारः स सस्मार । सूरिमंत्रं दिनत्रयं ॥ ७ ॥ ततस्तस्याद्यपीठाधि—ष्ठात्री स्फूर्तिरिवांगिनी ॥ देवी त्रिभुवनस्वामिन्याविरासीत्तदग्रतः ॥ ८ ॥ ध्यातास्मि केन कार्येण । शंस सूर्यवतंस मे ॥ देव्यैवमुदितः कामं । मुदितः स जगाद तां ॥ ९ ॥ देवि दिव्येन नेत्रेण । सम्यग्विज्ञाय मां वद ॥ चौलुक्यभूपतेर्भूतान् । भाविनोऽप्यखिलान् भवान् ॥१०॥ हस्तस्थमुक्ताफलव—त्कलयंती किलाखिलं ॥ सूरिप्रष्टं तदावेद्य

। सा देवी स्वं पदं ययौ ॥ ११ ॥ प्रातः स्वस्थानमागत्य । गुरुर्विहितपारणः ॥ वक्तुं प्रचक्रमे पूर्व
—वृत्तं नृपाग्रतः ॥ १२ ॥

देशे श्रीमेदपाटाख्ये । कचिदर्बुदकशे गिरौ ॥ परमारान्वयी जज्ञे । पल्लीशो जयताह्वयः ॥१३॥
द्विषतां रणकंडूति—चंडदोर्दंडशालिनां ॥ दर्पज्वरं शमयितुं । यद्भुजो भेषजायते ॥ १४ ॥ भंजं
भंजं परग्रामान् । स चक्रे वीरकुंजरः ॥ निजमैश्वर्यमूर्जस्वि । किं शौर्येण हि दुष्करं ॥ १५ ॥ अ·
न्येद्युर्धनदत्ताख्यः । सार्थवाहो महार्थभृत् ॥ स्वपल्लींप्रति ह्यागच्छ—न्मार्गे तेन व्यलोक्यत ॥ १६ ॥
तस्मिन्निपत्य सार्थेऽसौ । लुंटाकैः स्वभटव्रजैः ॥ जग्राह सकलं सार्थ—पतिस्तु क्वापि नेशिवान् ॥
॥ १७ ॥ ततः सर्वस्वनाशेन । प्रतीकाराग्निनापि च ॥ दंदह्यमानहृदयो । धनदत्तो विमृष्टवान् ॥१८॥
वृतो मलिम्लुचैः क्रूरैः । पिशाचैरिव राक्षसः ॥ उन्मदिष्णुरयं लोका—नुपोदोद्रूयते कथं ॥१९॥
इदानीं चेत्प्रतीकारं । न विधास्येऽस्य दुर्धियः ॥ पौनःपुण्येन मे सार्थं । गृहीष्यति तदैषकः ॥
॥ २० ॥ ततोऽन्यदपि कोशस्थं । व्ययीकृत्य स्वकांचनं ॥ एनमुन्मूलयिष्यामि । नृपसैन्येन कंदवत्
॥ २१ ॥ अथ प्राभृतमादाय । स महासार्थनायकः ॥ दृष्ट्वा च मालवाधीशं । तत्पराभवमूचिवान् ॥

॥ २२ ॥ बभाषे मालवेंद्रस्तं । त्वं निजाश्रयमाश्रय ॥ तं पल्लीतः समुन्मूल्य । प्रहेष्यामि धनं तव
॥ २३ ॥ धनदत्तः पुनः प्रोचे । नार्थो मेऽर्थेन पार्थिव ॥ प्रतिज्ञातं मया किंतु । तदुन्मूलनमात्मना
॥ २४ ॥ तद्देहि निजसैन्यं मे । पूरयामि यथेप्सितं ॥ वैरनिर्यातनेनाशु । सुखं भवदनुग्रहात् ॥
॥ २५ ॥ तद्वाक्यमुररीकृत्य । प्रसन्नोऽवंतिनायकः ॥ तस्य व्यश्राणयद् दृप्तं । सेनान्यं सैन्यसंगतं ॥
॥ २६ ॥ धनदत्तः पुरस्कृत्य । तत्सैन्यमुपगम्य च ॥ रुरोध परितः पल्लीं । वल्लीमिव मतंगजः ॥२७॥
दैत्यसैन्यमिवामृश्य । तत्सैन्यमतिदुर्धरं ॥ सांयुगीनोऽप्यदीनोऽपि । जयताकः पलायितः ॥ २८ ॥
योधान् युद्धोद्धतान् हत्वा । पल्लीं प्रज्ज्वाल्य चाखिलां ॥ नश्यंतीं पल्लीराट्पत्नी—मंतर्वत्नीं दधार
सः ॥ २९ ॥ स्वकरेणोदरं तस्या । दारयित्वा च दारुवत् ॥ बालमास्फालयामास । शिलायां निः-
कृपाशयः ॥ ३० ॥ ततः स्वश्रियमादाय । सकलां सकलातरां ॥ धनदत्तः कृतार्थः स—न्नपश्यन्मा-
लवाधिपं ॥ ३१ ॥ कुकृत्यमिव तत्कृत्यं । श्रुत्वातिकुपितः स राट् ॥ विकटभृकुटीकोटि—स्पृष्टभाल-
स्तमालपत ॥ ३२॥ त्वं वाणिज्योऽपि व्यापारे । कर्मणास्यजनंगमः ॥ निघृणो यत्स्वहस्तेन । स्त्रि-
यं बालं च जघ्निवान् ॥ ३३ ॥

अद्यैतत्कर्म निर्माति । चांडालोऽपि न कर्हिचित ॥ यत्त्वया निर्मितं रेरे । लोकद्वयविरोधकं
पाप त्वद्दर्शनेनापि । लिप्येऽहं पातकैर्हहा ॥
॥ ३४ ॥ अद्रष्टव्यमुखस्तस्माद् । दूरीभव मदग्रतः ॥ पाप त्वद्दर्शनेनापि । लिप्येऽहं पातकैर्हहा ॥
॥ ३५ ॥ इत्थं निर्भर्त्स्य सर्वस्वं । तस्योद्दाल्य च नृपतिः ॥ तं निर्वासितवांस्तीव्रं । पापं हि द्राक्
फलेग्रहि ॥ ३६ ॥ तेन नाथनिकारेणा—तीवदूनः स सार्थराट् ॥ विपिने तापसीभूय । तपस्तेपेऽ-
तिदुस्तपं ॥ ३७ ॥ स मृत्वा तपसा तेन । जयसिंह इति श्रुतः ॥ गूर्जराधिपतिर्जज्ञे । मंडिताखंड-
लद्युतिः ॥ ३८ ॥ इतश्च कान्यरण्येपु । निःशरण्यस्य नश्यत. ॥ समगंस्त जयंतस्य । श्रीयशोभद्र-
सूरिराट् ॥ ३९ ॥ नाविज्ञदनया भक्ति—नम्रं सूरिर्जगाद तं ॥ किं न्यक्कृतोऽसि केनापि । यद्दीन
इव दृश्यसे ॥ ४० ॥ सोऽपि चौर्येण सार्थेशा—त्पराभवपदं निजं ॥ निगद्य दुःखतो दीनो । नि-
षसाद तदंतिके ॥ ४१ ॥ ततो गुरुर्बभाषे तं । त्वं श्रितोऽपि परां श्रियं ॥ चौर्यं मुधा व्यधाः क-
स्मा—द्धनास्यैवं विडंबितः ॥ ४२ ॥ निःस्वस्यापि न यत्कर्तु । न्याय्यं राज्याधिपोऽपि सन् ॥ तत्त्वं
चौर्यं वितन्वानः । स्थाने तेनाभिभूयथाः ॥ ४३ ॥ स्थानभ्रंशं कुलध्वंसं । निःशेषविभवक्षयं ॥ त-
स्कत्वं कल्पयेत्स्तेयं । कः सुधीर्विदधीत तत् ॥ ४४ ॥ वरमाजन्म दारिद्र्यं । वरं दास्यं परौकसि ॥

न तु प्राणहरस्तेय—संभवो विभवो महान् ॥ ४५ ॥ यावज्जीवं ततश्चौर्यं। वर्जयित्वा यशोऽर्जय॥
प्रशस्यं कर्म निर्माय । निर्मायस्त्वं महाशय ॥ ४६ ॥ गुरुवाक्येन तेनोरु—प्रदीपेनेव तत्क्षणं ॥
स परिज्ञातसन्मार्गः । स्तेयमार्गममुंचत ॥ ४७ ॥ सूरिणा सूरिवात्सल्यात्। श्राद्धेभ्योऽर्पितशंबलः॥
जयताको ययौ भ्राम्यन् । पुरीमेकशिलाह्वयां ॥ ४८ ॥ प्रौढश्रीशादरस्तत्र । वणिगासीन्निधिः श्रियां
॥ कर्मकारतया तस्य । गेहे दुःस्थः स तस्थिवान् ॥ ४९ ॥ क्रमेणाथ स सूरींद्रो । यशोभद्रोऽति-
भद्रकृत ॥ विहरन्नागतस्तत्र । जयताकस्य संगतः ॥ ५० ॥ हितोपदेशं दुःस्थत्वे । तच्च पाथेयदा-
पनं ॥ स्मरन् कृतज्ञतायुक्तो । शुश्रूषामास तं गुरुं ॥ ५१ ॥ पृष्टवानादरोऽन्येद्यु—स्तं भृत्यं जयता-
ह्वयं ॥ अद्यकल्ये दिनं सर्वं । भवान् कुत्रावतिष्ठते ॥ ५२ ॥ स जगाद ममात्रास्ति । यशोभद्रा-
भिधो गुरुः ॥ तन्नेदिष्टोऽवतिष्टेऽहं । पिबंस्तद्वचनामृतं ॥ ५३ ॥

आदरोऽथ समुत्पन्न—गुरुदर्शनवासनः ॥ तं विवेकं च कृत्वाग्रे । ववंदे सूरिपुंगवं ॥ ५४ ॥
तस्य भद्रकतां दृष्ट्वा । गुरुर्विश्वैकवत्सलः ॥ किंचिदार्हतधर्मस्य । स्वरूपमुपदिष्टवान् ॥ ५५ ॥ एवं
सदा समागत्य । शृण्वंतौ तौ गुरूदितं ॥ शुद्धया श्रद्धया श्राद्ध—धर्मं जगृहतुस्ततः ॥ ५६ ॥ आ-

दरो मुदितोऽवोचत । प्रभो मे त्वदनुग्रहात् ॥ ब्रभूव जिनधर्मास्तिः । कां ददे गुरुदक्षिणां ॥ ५७ ॥
महर्षिस्तमाचष्ट । निःसंगं दर्शनं हि नः ॥ अतो ब्राह्मणवन्नैव । स्वीकुर्वे दक्षिणामहं ॥ ५८ ॥
कुर्वे तथापि कां भक्ति—मिति जल्पंतमादरं ॥ आदिदेश गुरुस्तर्हि । चैत्यं चारु विधापय ॥५९॥
ततः स सुमतिः श्रीम—द्वीरचैत्यमचीकरत् ॥ व्योमगंगायितोद्दाम—पताकास्थगितांबरं ॥ ६० ॥
हस्तेन श्रीयशोभद्र—सूरेर्दूरीकृतांहसा ॥ तत्प्रतिष्ठापयामास । स वितत्य महोत्सवं ॥ ६१ ॥ प्र-
तिष्ठासुरपि स्थानां—तरं तत्रैव सूरिराट् ॥ आदराभ्यर्थितोऽत्यर्थं । वर्षारात्रमवास्थित ॥ ६२ ॥ तदा
मेघश्च सूरिश्च । गर्जंतौ मधुरध्वनि ॥ क्षेत्रेषु वृष्टिभाग्यानां । पुण्यांकूरान् वितेनतुः ॥ ६३ ॥ गुरौ
घने च धारालं । सद्धर्मामृतमुष्णति ॥ अंतर्बहिश्च पंकौघं । क्षालयंतिस्म केचन ॥ ६४ ॥ प्राप्ते प-
र्युषणापर्व—ण्यादरेण सहार्चयत ॥ जयताको जिनं पंच—वराटकसुमव्रजैः ॥ ६५ ॥ उपोषितदि-
ने धर्म—कर्मकर्मठमानसः ॥ प्रतिलाभ्य च भक्त्यान्नं । मुनीन् सोऽपारयत्ततः ॥ ६६ ॥ आदरः स
विपद्यांते । बभूवोदयनाह्वयः ॥ मंत्रिराजः पुरोपात्त—पुण्यप्राग्भारभारितः ॥ ६७ ॥ कालधर्ममुपा-
गम्य । जयताकः स जातवान् ॥ कुमारपालनामा त्वं । राजन् गूर्जरनायकः ॥ ६८ ॥ यशोभद्रप्रभु-

रपि । प्रमीतः स्फीतपुण्यतः ॥ हेमचंद्राभिधानोऽहं । बभूवांस्तावको गुरुः ॥ ६९ ॥ प्राग्वैरात्सार्थवाहस्य । जीवः सिद्धमहीपतिः ॥ जिघांसामास कामं त्वां । वैरं न हि चिरंतनं ॥ ७० ॥ अमात्योदयनोऽहं च । प्राग्भवस्नेहमोहितौ ॥ त्वयि स्निग्धतमावास्व । स्नेहो हि प्राग्भवानुगः ॥ ७१ ॥ दिनानि कतिचित्पूर्वं । यच्चौर्यादिरतोऽभवः ॥ तत्पापेन तव क्लेशः । कियत्कालमभूदिह ॥ ७२ ॥ यच्च पूजितवान् पंच—वराटकुसुमैर्जिनं ॥ यतिभ्यो ज्यायसीभक्ति—र्दानं त्वं यच्च दत्तवान् ॥७३॥ सुकृतैस्तत्समुत्पन्नै—र्निधानैरिव संपदां ॥ अभूनिष्ठा महिष्ठश्री—स्त्वं राजा परमार्हतः ॥ ७४ ॥ क्व तावती जिनेंद्रार्चा । मुनिदानं सकृत् क्व तत् ॥ क्व चेदृशं तवैश्वर्य—महो महिम धर्मजं ॥ ७५ ॥ उक्तः पूर्वभवस्तेऽसौ । प्रतीतिश्चेन्न मद्गिरा ॥ प्रहित्यैकशिलापुर्यां । त्वदासेनानुयोज्यतां ॥ ७६ ॥ वेश्मन्याढरपुत्राणां । स्थिरदेवीति काचन ॥ वृद्धा दास्यस्ति सा सर्व—मिदं वक्ष्यति मूलतः ॥७७॥

इतश्च परिपूर्यायुः । प्रांते पंडितमृत्युना ॥ त्वं गतौ व्यंतरीयायां । राजन् भावी सुरोत्तमः ॥ ॥ ७८ ॥ श्रेयस्कामी स तत्रापि । वृंदारकपरिवृतः ॥ भ्रमं भ्रमं महीपीठे । नित्यचैत्यानि नंस्यति ॥ ७९ ॥ नंदीश्वरादिद्वीपेषु । स्पष्टमष्टाह्निकोत्सवं ॥ स करिष्यति भावेन । सौधर्मसुरनाथवत् ॥

पास्यति श्रोत्रपेयं त—द्देशनारसमाहृतः ॥ ८० ॥ क्षेत्रे महाविदेहादौ । नामंनामं स सन्मुनीन् ॥ विलसिष्यति स स्वैरं । नंदनादिवनांतरे ॥ ८१ ॥ अनेकशाखिरिव श्रोभि—रमरीभिः परिवृतः ॥ श्रीजद्दिलपुरे राज्ञः । शतानंदस्य मंदिरे ॥ ८२ ॥ व्यंतरेंद्रस्ततश्च्युत्वा । क्षेत्रेऽस्मिन्नेव जारते ॥ जविष्यति तनूजन्मा । ख्यातः शतबलाख्यया ॥ ८३ ॥ धारिणीकुक्षिसंभूतः । प्रभूततरवैभवः ॥ छेकिलो भवितायर्थं । शैशवे-ऽपि शशांकवत ॥ ८४ ॥ युग्मं ॥ स्थित्वोपविदुपं शश्वत । कलास्वविकलास्वसौ ॥ सुश्राव्यत्नुवत्वेऽपि । स शीलं शीलयिष्यति ॥ ८५ ॥ वृपस्यंतीरपि पर—प्रमदाः परिवर्जयन् ॥ प्राच्यकारुण्ययोगेन । न हिंसाद्यं तनिष्यति ॥ ८६ ॥ ततः शतबलो राज्यं । लब्ध्वा शिक्षां विनापि हि ॥ लीलयैव स नृपीठं । चक्रवर्तीव जेष्यति ॥ ८७ ॥ अगेहेनर्दिभिः सैन्यै—श्चाक्षुपैरिव चंक्रमैः ॥ जिनेंद्रः पद्मनाभा-ख्यो । जवितात्रैव जारते ॥ ८८ ॥ तदा च नरकादायात् । श्रेणिकात्मा विनिर्गतः ॥ सेवितः साधु-कोटीरे—र्दानशौण्ड श्वार्थिभिः ॥ ८९ ॥ स प्रव्रज्य तपःक्षीण—कर्मा संजातकेवलः ॥ आगमि-ष्यति पुण्येन । कल्पद्रुरिव जंगमः ॥ ९० ॥ विहरन् पृथिवीपीठे । श्रीजद्दिलपुरेऽन्यदा ॥ ९१ ॥ युग्मं ॥

सज्जनो धार्मिकस्येव । श्रुत्वा तस्यागमं जनात् ॥ हर्षुलः श्रीशतबलः । समुपेत्य प्रणंस्यति
॥ ९२ ॥ निपास्यति च संसार—तापतप्त इवोच्चकैः ॥ विश्वातिशायिमाधुर्य । भगवद्देशनामृतं ॥
॥ ९३ ॥ प्रबुद्धः स ततो राज्यं । संक्रमय्य तनूरुहः ॥ जिनाद् गृहीष्यते दीक्षां । पुण्यश्रीसहचा-
रिणीं ॥ ९४ ॥ एकादशो गणधरः । स भूत्वा द्वादशांगविद् ॥ तपोभिर्बहुभिः क्षिप्त—कर्मा केव-
लमाप्स्यति ॥ ९५ ॥ प्रबोध्य पद्मवद्विश्वं । केवलज्ञानभानुना ॥ महाशयः शतबलो । भावी मु-
क्तिरमावरः ॥ ९६ ॥ एवं राजन् भवादस्मा—त्तार्तीयीके भवे तव ॥ जिनधर्मप्रभावेण । मुक्ति-
श्रीर्भविता ध्रुवं ॥ ९७ ॥ इति श्रीसूरिमंत्राधि—ष्ठातृदेवीगिरा मया ॥ कथयामासिरे सम्य—ग्भ-
वास्ते भूतभाविनः ॥ ९८ ॥ आसन्नसिद्धिश्रवणा—त्तल्लाभादिव निर्वृतः ॥ अथ विज्ञपयामास ।
प्रांजलिर्गूर्जरप्रभुः ॥ ९९ ॥ ज्ञानंगिले कलावस्मिन् । सर्वज्ञ इव संप्रति ॥ अतीतानागतं ब्रूते ।
कः पूज्यादपरो ननु ॥ १०० ॥ यथा भागवती भाषा । भवेन्न व्यभिचारिणी ॥ प्रागप्यपि तथैवे-
यं । तद्ज्ञानातिशयादिव ॥ १ ॥ परं कौतुकमात्रेण । दासीं तां पृछयाम्यहं ॥ आसमेकशिलां प्रे-
ष्य । यद्यादिशति मां प्रभुः ॥ २ ॥ विशिष्य पृच्छ्यतामेवं । जल्पिते गुरुणा नृपः ॥ प्रैषीदासजनं

स गत्वैकशिलास्थान—माहरांगजसद्मनि ॥ तां दासीं स्थि·
तत्र । कौतुकी नालम· क्वचित् ॥ ३ ॥ स गत्वैकशिलास्थान—माहरांगजसद्मनि ॥ तां दासीं स्थि·
रदव्यास्यां । पृष्ट्वा तद्वृत्तमादितः ॥ ४ ॥ दृष्ट्वा श्रीवीरचैत्यं च । स्वयमादरकारितं ॥ आगत्य च
महीनेत्रे । जगौ सर्वं यथास्थितं ॥ ५ ॥ युग्मं ॥ प्रतीतोऽथ नृपः संघ—प्रत्यक्षं गुरवे मुदा ॥ वि·
रुदं कलिकालश्री—सर्वज्ञ इति दत्तवान् ॥ ६ ॥ अथ वार्धकमालोक्य । चौलुक्यः पृथिवीपतिः ॥
स्थित्वैकदा रहो रात्रौ । गुरुंप्रत्येवमूचिवान् ॥ ७ ॥ सत्यपि त्वादृशे सर्व—विद्यांभोधौ गुरौ मम ॥
फलं गार्हस्थ्यवृक्षस्य । नाभाग्यैस्तनयोऽजनि ॥ ८ ॥ दिने दिने जरा चैषा । जनयंती कृशांगतां ॥
उद्भावयते समं राज्य—लक्ष्मीदानार्हचिंतया ॥ ९ ॥ राज्यसूत्रमतः किंचि—दासूत्र्य भगवन्नहं ॥
हंमायितुमभीप्सामि । समतारसवारिधौ ॥ १० ॥ ददाम्यजयपालाय । स्वराज्यं भ्रातृसूनवे ॥ उत
प्रतापमल्लाय । दौहित्राय निवेद्यतां ॥ ११ ॥ विमृश्य सूरिणाभाणि । भ्रातृव्यस्ते दुराशयः ॥ अ·
तो राज्ये न योग्योऽसौ । दासेय इव सर्वथा ॥ १२ ॥ किंचैश्वर्यमवाप्तोऽयं । मत्तेभ इव भंक्ष्यति ॥
वैरायमाण इव ते । धर्मस्थानावलीं वनीं ॥ १३ ॥ अयं प्रतापमल्लस्तु । न तथा दुष्टधीरिति ॥ अ·
स्मै स्वैराज्यं दत्तं । परिणामे हितावहं ॥ १४ ॥

न्यस्यते श्रीगुरुणिन्येव । न संबंधिनि यद्रविः ॥ शनौ सत्यपि पुत्रे स्वे । दीप्रे न्यास्थत्प्रकाशतां ॥ १५ ॥ करिष्ये पूज्यपादोक्तं । समये समुपागते ॥ उदित्वेति समुत्तस्थौ । गूर्जरक्षितिवासवः ॥ १६ ॥ गोशाल इव देवार्ये । गुरावपि दुराशयः ॥ बालचंद्राभिधः शिष्यः । श्रुत्वा तं मंत्रमंतिकात ॥ १७ ॥ आबालकालसुहृदे—ऽजयपालाय तत्क्षणं ॥ कथयामासिवानेत—त्खलानामुचितं खलु ॥ १८ ॥ युग्मं ॥ तमूचेऽजयपालोऽपि । विकसन्मुखपंकज· ॥ एष मंत्रोऽतिगुप्तोऽपि । साधु ज्ञातस्त्वया मुने ॥ १९ ॥ इयं मैत्रीलता चक्रे । त्वयैव फलशालिनी ॥ नृपाशयस्थितो मंत्रो । यदूचेऽयं ममाग्रतः ॥ २० ॥ यदि जायेत राज्यं मे । भवानेव तदा गुरुः ॥ यथा कुमारपालस्य । हेमाचार्योऽधुनास्त्ययं ॥ २१ ॥ निवेद्यैवं पुरस्तस्य । तद्दिनादजयः कुधीः ॥ श्रेणिके कूणिक इव । द्वेषं निहितवान्नृपे ॥ २२ ॥ अथ नूतनशब्दानु—शासनप्रमुखैः श्रुतैः ॥ त्रैविद्याधिष्ठितैर्ग्रंथै—र्ज्ञानसत्रं प्रवर्तयन् ॥ २३ ॥ स्वयं तिष्ठन् क्रियामार्गे । स्थापयन्नपरानपि ॥ षष्ठाष्टमप्रभृतिभि—स्तपोभिर्धर्ममेधयन् ॥ २४ ॥ उल्लासयन्मतं जैनं । शशीव कुमुदाकरं ॥ आयुश्चतुरशीत्यब्दान् । हेमाचार्यः समापयत् ॥ २५ ॥ त्रिभिर्विशेषकं ॥ सम्यग्ज्ञानेन केनापि । ज्ञात्वा पर्यंतमात्मनः ॥ ग·

त्तशिक्षां च विश्राण्य । भ्रातृप्रद्युम्नसूरये ॥ २६ ॥ परमेष्ठिपदं ध्यायन् । स्वीयस्वांते यथाविधि ॥ वै-
रंगिकः स्वगात्रेऽपि । शिश्रियेऽनशनं गुरुः ॥ २७ ॥ युग्मं ॥ अवीक्षितमिवाजन्म । वीक्षितुं तन्मु-
खांबुजं ॥ अहंपूर्विकया लोका । मिमिलुः सकलास्तदा ॥ २८ ॥ ततोऽभ्यवहिते राज्ञि । संघे च
सकले प्रभुः ॥ वैराग्यैकमयीं चक्रे । देशनामंगिनामिमां ॥ २९ ॥ संसारेऽत्र गलत्सारे । देहिनां
कर्मयोगतः ॥ चतुर्ष्वपि भवेष्वस्ति । न मनागपि निर्वृतिः ॥ ३० ॥ तथाहि प्रथमं जीवा । नि-
गोदेषु वसंत्यमी ॥ कायस्थितिं समाश्रित्य । संख्यातीतमनेहसं ॥ ३१ ॥ एकोच्छ्वासांतरे सप्त—
दशभिर्मृत्युभिः किल ॥ भुंजते तेऽनिशं तत्र । दुःखं किमपि दुस्सहं ॥ ३२ ॥ नरके नारकाणां
य—ज्जायते कष्टमुत्कटं ॥ ततो निगोदे जीवानां । तदनंतगुणं मतं ॥ ३३ ॥ ततः कृच्छ्रेण निर्ग-
ताः । पृथ्वीनीराग्निवायुषु ॥ उत्सर्पिणीरसंख्याता—स्तिष्ठंति ननु देहिनः ॥ ३४ ॥ कथंचिन्निर्गता-
स्तेभ्यो । विकलाक्षेषु जंतवः ॥ वसंत्यब्दसहस्राणि । संख्यातान्यतिकष्टिताः ॥ ३५ ॥ ततो नाना-
भवान् भ्रांत्वा । पंचाक्षत्वमुपेत्य च ॥ जीवास्तिर्यक्षु जायंते । जलस्थलखचारिषु ॥ ३६ ॥ तत्र जा-
लैर्जलात्कृष्टा । मत्स्याद्याः स्थूलविग्रहाः ॥ दार्यंते दारुवत्क्रूरैः । कैवर्तैः शितपर्शुना ॥ ३७ ॥ क्षुधा-

तृष्णांगविछेद—स्कन्धवाहादिकर्मभि. ॥ गवादयो यथात्यार्त्ताः । प्रत्यक्षा एव ते तथा ॥ ३८ ॥ वा-
गुरादिप्रयोगेण । बध्ध्वा ते च मृगादयः ॥ तैलादिषु विपच्यंते । व्याधैर्मांसाशने रतैः ॥ ३९ ॥
विविधैश्छद्मभिर्धृत्वा । चटकाद्याः पतत्रिणः ॥ शूलाक्रियंते निःकृपैः । कथं जीवांतकैर्हहा ॥ ४० ॥
तत्र क्रूरतयाघानि । कारंकारं सहस्रधा ॥ लभंते नारकीं योनिं । निःशरण्याः शरीरिणः ॥ ४१ ॥
उत्पन्ना एव ते तत्र । सहंते यातना घनाः ॥ प्रत्यंगछेदवज्रासि—दाहहृत्कर्षणादिभिः ॥ ४२ ॥
स्मृत्वा च प्राक्तनं वैरं । शस्त्रघातैः परस्परं ॥ भवंति मुशलक्षुण्ण—कणवल्लवशः स्वयं ॥ ४३ ॥ नर-
के पच्यमानानां । नारकाणां दिवानिशं ॥ यद्दुःखमस्ति तद्वक्तुं । लक्षजिह्वोऽपि न क्षमः ॥४४॥
ततः कथंचिदुध्धृताः । किंचित्सुकृतयोगतः ॥ जायंते जंतवो गर्भे । नारीणां नरकोपमे ॥ ४५ ॥
प्रतिरोमं च सूचीभि—र्भिद्यमानस्य देहिनः ॥ यत्कष्टं गर्भमध्ये त—द्भवत्यष्टगुणं ततः ॥ ४६ ॥
उत्कर्षाद् द्वादशाब्दानि । स्थित्वा तस्मिन्नधोमुखाः ॥ भवंति जन्मवेलायां । व्यथया ते मृता इव
॥ ४७ ॥ अशुचित्ववियोगार्त्ति—वैकल्योग्रगदादिभिः ॥ बाल्याद्यवस्थात्रितये । मर्त्या दौःस्थ्यविसं-
स्थुलाः ॥ ४८ ॥ नैस्व्यस्त्रीतनयाभाव—दास्यवैररणादिभिः ॥ जनकादिनिकारैश्च । नराः सौख्य-

विवर्जिताः ॥ ४९ ॥ ततोऽपि सुकृतं कृत्वा । दानाद्युत्तमकर्मभिः ॥ लभंते त्रिदशोत्वात्रं । केऽपि भद्राशया नराः ॥ ५० ॥

तत्रापि केऽपि दुःकर्मो—दयात्किल्बिषिकादयः ॥ किंकरा इव खिद्यंते—ऽनितमां स्वामिसेवया ॥ ५१ ॥ श्रियः स्त्रियोऽपि चोत्कृष्टा । दृष्ट्वान्येषां दिवौकसां ॥ दह्यंते केऽपि वज्राग्नि—कीलाकवलिता इव ॥ ५२ ॥ परदेवीः शुभ्रा हृत्वा । कामांधाः कतिचित्सुराः ॥ कृष्णराजिविमानेषु । लीयंते तस्करा इव ॥ ५३ ॥ तद् ज्ञात्वा ते तदिंद्रेण । मूर्ध्नि दंभोलिना हताः ॥ क्रंदंत्यमंदं पःएमार्गीं । पीडया मूर्छिता इव ॥ ५४ ॥ भाविनीं दुर्गतिं मत्वा । तादृग्दृष्ट्वा च वैभवं ॥ अरतिं यां श्रयंते ते । वक्तुं सा नैव पार्यते ॥ ५५ ॥ इत्यसूयामानमाया—लोभोद्वेगमदादिभिः ॥ भृशमाकुलितात्मानो । देवाः स्युः सुखिनः कुतः ॥ ५६ ॥ एवं विमृश्य निःशेष—दुःखैकांतमयं भवं ॥ सुखैकांतमयी मुक्तिः । साधनीया विवेकिभिः ॥ ५७ ॥ तत्साधनं भवेदात्म—ज्ञानमेवादिमं सतां ॥ न हि बीजात्परं किंचि—दंकुरोत्पत्तिकारणं ॥ ५८ ॥ तच्छास्त्रं तद्विवेकित्वं । तच्चारित्रं तपोऽपि तत ॥ तद्ध्यानं सा समाधिश्च । येन स्वात्मैष वेद्यते ॥ ५९ ॥ ये स्वं वाचस्पतीयंति । ज्ञातुं सक

त्मप्रदः ॥ क्षेत्रज्ञं वेदितुं तेऽपि । कुंठीयंते जना इव ॥ ६० ॥ स्फुरन्मोहमहानिद्रा—मुद्रिते जगतीत्रये ॥ नूनमात्मज्ञ एवैको । जागर्ति ज्ञानलोचनः ॥ ६१ ॥ तावच्छुद्ध्यति नात्मायं । लीनकश्मलकालिकः ॥ यावत्सद्ध्यानपीयूष—पूरैः प्रक्षाल्यते न हि ॥ ६२ ॥ वशीकृतेंद्रियग्रामो । निःकषायो विरक्तहृत ॥ मैत्र्यादिवासितस्वांतः । सुधीर्ध्यानोचितो भवेत् ॥ ६३ ॥ पिंमस्थं च पदस्थं च । रूपस्थं रूपवर्जितं ॥ चतुर्धा ध्यानमादध्या—दात्मजिज्ञासया बुधः ॥ ६४ ॥ कायस्थः कर्मनिर्मुक्तो । ज्ञानवान् परमेश्वरः ॥ जिनेंद्रः स्मर्यते यत्र । तत्पिंडस्थं प्रकीर्तितं ॥ ६५ ॥ अर्हन्मयानि यन्मंत्र—पदानि हृदयांबुजे ॥ चिंत्यंते शशिशुभ्राणि । तत्पदस्थमिहोदितं ॥ ६६ ॥ सप्रातिहार्यः समव—सरणस्थो जिनेश्वरः ॥ यद्ध्यायतेऽथ तद्बिंबं । तद्रूपस्थं निरूपितं ॥ ६७ ॥ अमूर्तश्चिन्मयः सिद्धो । ज्योतीरूपो निरंजनः ॥ परमात्मा स्मर्यते यत्र । रूपातीतं हि तन्मतं ॥ ६८ ॥

एतच्चतुर्विधं ध्यानं । कुर्वंस्तद्भावभावितः ॥ ध्याता तन्मयतामेति । भ्रमरीभूतकीटवत् ॥ ६९ ॥ निलीयतेंतरात्मायं । तदात्मनि यथायथा ॥ तथा भजति तेनैक्यं । ध्यातृध्यानद्वयच्छिदा ॥ ७० ॥ ततो घातीनि कर्माणि । निर्मथ्यावाप्तकेवलः ॥ कलयत्यखिलं लोकं । पुरोवर्तिष्णुवस्तुवत् ॥ ७१ ॥

विलीनसकलक्लेशो । जीवन्मुक्तत्वमाश्रितः ॥ इहाप्यात्मा परानंदं । विंदते परमात्मवत् ॥ ७१ ॥
अंते शैलेश्यधिक्षिप्त—कर्मशेषस्तनूज्झनात् ॥ आत्मा भूत्वा परात्मैव । मुक्तिशर्मणि मज्जति ॥७२॥
सर्वेषामपि देवानां । यत्सुखं सार्वकालिकं ॥ अनंतेनापि भागेन । न स्यान्मुक्तिसुखस्य तत् ॥
॥ ७३ ॥ तत्प्रमादं परित्यज्य । भो भव्या यत्यतां तथा ॥ यथा करविलग्नं स्या—द्भवतां शिवशर्म
तत् ॥ ७४ ॥ कालानुभावतो मुक्ति—र्नेह यद्यपि विद्यते ॥ तथाप्यन्यभवे नूनं । प्राप्यते शुभ-
योगतः ॥ ७५ ॥ एवमुक्त्वा स्थिते सूरौ । तन्मत्वा दुर्लभं पुनः ॥ केचिदाददिरे भव्याः । सम्य-
क्त्वाभिग्रहादिकं ॥ ७६ ॥ पतित्वाथ पदांभोजे । राजर्षिः क्षामणाक्षणे ॥ बाष्पायमाणो नेत्राभ्यां ।
प्रभुमूचे सगद्गदं ॥ ७७ ॥ भगवन् सुलभं मन्ये । स्त्रैणराज्यसुखादिकं ॥ कल्पद्रुरिव दुःप्राप—
स्त्वादृग्भद्रंकरो गुरुः ॥ ७८ ॥ न केवलमभूस्त्वं मे । भगवन् धर्ममात्रदः ॥ जीवितव्यप्रदः किंतु ।
ततस्त्वत्तोऽनृणः कथं ॥ ७९ ॥ त्वयि स्वर्गोन्मुखे स्वामिन् । कोऽधुना शिक्षयिष्यति ॥ मामसंभ्रत-
मं पुण्य—प्रक्रियाकांडतांडवे ॥ ८० ॥ अगाधे मोहपाथोधौ । पर्यंते मज्जतो मम ॥ निर्यामणा-
करालंबं । त्वांविना कः करिष्यति ॥ ८१ ॥ यदि मे त्वत्पदोपास्ति—रस्ति कामितदायिनी ॥ त-

यात्तर्ह्यार्हतस्याथ । त्वमेव गुरुराशिवं ॥ ८२ ॥ इति भूभृद्विलापेन । विभिन्नहृदयः प्रभुः ॥ नेत्रकूलंकषाबाष्पान् । सन्निरुध्य कथंचन ॥ ८३ ॥ उन्नाम्य चातिकष्टेन । पादलग्नं तमात्मनः ॥ ऊचे वाचं सुधासार—सैंधवीं लहरीमिव ॥ ८४ ॥ युग्मं ॥ आजन्म राजन्निर्व्याज—भक्तेस्ते हृदि तावके ॥ समुत्कीर्ण इव स्वर्गं । गतोऽपि स्यां पृथङ् न हि ॥ ८५ ॥ मनःशुद्ध्या समारूढ—जिनधर्मस्य ते पुरः ॥ मोक्षोऽपि नातिदुर्लभः । सद्गुरुस्तु किमुच्यते ॥ ८६ ॥

असदुक्त्यार्हतं धर्मं । प्रपद्य क्षितिमंडले ॥ तन्वानस्तस्य साम्राज्यं । नार्पणस्त्वमभूः कथं ॥ ॥ ८७ ॥ कुर्वाणस्य क्रियामार्गे । क्रियाप्रष्ठान् परांस्तव ॥ सत्क्रियास्थापनाचार्य । का शिक्षा युज्यतेऽधुना ॥ ८८ ॥ जगज्जन्मिसमक्षं यः । पराजिग्ये पुरा त्वया ॥ पर्यंतेऽपि कथं मोहः । स त्वामभिभविष्यति ॥ ८९ ॥ ततः सहजवीर्येण । संवर्मय निजं मनः ॥ यतोऽस्मन्मृत्युतो मृत्यु—र्न दूरे तव वर्तते ॥ ९० ॥ तदा सम्यग्वितन्वीथाः । क्षामणानशनादिकं ॥ यद्भस्मनि हुतमिव । तद्विना प्राक्तनं शुभं ॥ ९१ ॥ स्वयमेव च कुर्वीथाः । सर्वामामुष्मिकीं क्रियां ॥ निरपत्यतया कर्ता । न पश्चात्कश्चनापि तां ॥ ९२ ॥ उरीकृत्य गुरूक्तं त—द्विष्यवत्क्षितिनायकः ॥ उदतिष्ठत नृपि-

ष्ट—भक्तिः कर्तुं प्रभावनां ॥ ९३ ॥ कुमारा ननृतुः स्वैरं । श्रावका रासकान् ददुः ॥ जगुः योगा-
वलीः पेठु—र्जगुर्गीतानि गायनाः ॥ ९४ ॥ धर्मव्ययेऽभिदधिरे । भूपाद्याः पारिपार्श्वकाः ॥ परो-
लक्षान्नमस्कारान् । पुष्पाणि च सहस्रशः ॥ ९५ ॥ अथासन्नं व्ययं ज्ञात्वा । सूरिर्ध्यानविधित्सया
॥ कोलाहलं प्रभूमरं । समंतात्सत्यपीपिधत् ॥ ९६ ॥ निवृत्तिवल्गया युञ्ज । रुध्वाक्षाण्युत्कटाश्ववत
॥ बध्वा च ध्यानपाशेन । चित्तं लोलं प्लवंगवत् ॥ ९७ ॥ चिंतयन् सुचिरं किंचित् । परमात्ममयं
महः ॥ ब्रह्मरंध्राध्वना प्राणान् । हेमाचार्यो विमुक्तवान् ॥ ९८ ॥ युग्मं ॥ दृष्ट्वा तस्य व्ययं जज्ञे ।
चौलुक्यश्चेतनोज्झितः ॥ गुरुजीवं स्वजीवेना—नुयात इव तत्क्षणं ॥ ९९ ॥ क्षणोर्ध्वं चेतनां प्रा-
प्य । शून्यं पश्यन्निवाखिलं ॥ शृण्वानां घटयन् कष्टं । स जगादेति गद्गदं ॥ २०० ॥ इयत्कालं प्रभो
धृत्वा । धर्मस्नेहमयीं दशं ॥ इदानीं निर्ममः कस्मा—न्मामहासीरिहैव यत् ॥ १ ॥ यद्वा त्वयि स्व-
देहेऽपि । निःस्नेह स्नेहमुञ्चकैः ॥ अपश्यं भ्रांत एवाहं । संप्रत्यस्ति यतो न सः ॥ २ ॥ बोधयित्वा
नरान् देव—बुबोधयिषया दिवं ॥ त्वं प्राप्तोऽस्यधुना नूनं । संतः सर्वहिता यतः ॥ ३ ॥ एतदेवा-
नुशोचामि । निःपुण्योऽहं पुनः पुनः ॥ राजपिंडतया यन्मे । किंचिन्नोपकृतं तव ॥ ४ ॥ शिष्याश्च

रामचंद्राद्या—स्तदानीमेवमूचिरे ॥ स्वगुरुव्ययदूनांतः—करणाः करुणस्वरं ॥ ५ ॥ अद्य शुष्कः प्रज्ञावाब्धि—र्मुद्रितः सद्गुणाकरः ॥ ज्ञानसत्रं परिक्षीणं । गुरो त्वयि गते दिवं ॥ ६ ॥ उदरंभरयः संति । सूरयः सूरयः परं ॥ नृपं प्रबोध्य कस्त्वद्व—ज्जगज्जीवयिष्यति ॥ ७ ॥ ज्ञानप्रदीपे भगवं—स्त्वयि निर्वाणमाश्रिते ॥ प्लावयिष्यंति पृथिवी—मज्ञानध्वांतवीचयः ॥ ८ ॥ मूलादपि समुन्मूल्य । मिथ्यात्वं विषवृक्षवत् ॥ सम्यक्त्वकल्पतरुव—त्वदन्यः कः करिष्यति ॥ ९ ॥

ततः क्ष्मामोऽपि संघोऽपि । कृतशोकाश्रुपल्वलौ ॥ शिबिकां दिव्यविच्छित्तिं । निरमापयतां रयात् ॥ १० ॥ स्नातानुलिप्तां सत्क्षौम—संवृतां माल्यधारिणीं ॥ तत्र न्यवीविशन् सूरे—स्तनूं वृद्धानगारिणः ॥ ११ ॥ उत्सवेन बहिर्नीत्वा । शिबिकां श्रावकोत्तमैः ॥ संचस्करे गुरुवपुः । कर्पूरागुरुचंदनैः ॥ १२ ॥ तदार्कः परिवेष्यासी—द्दिशः सर्वा रजस्वलाः ॥ दिनं च धूसरं तादृग् । व्ययः केषां न दुःखदः ॥ १३ ॥ विध्यापितायां चित्यायां । गुरौ निर्भरभक्तितः ॥ तद्भस्म स्वयमादाय । नृपो मूर्ध्नि न्यवेशयत ॥ १४ ॥ ततो देशाधिपैः श्राद्धैः । सर्वैः पौरैश्च लेशशः ॥ आत्ते भस्मनि गर्तासी—ज्जानुदघ्नमिता क्षितौ ॥ १५ ॥ साद्यापि पत्तनांतेऽस्ति । हेमगर्तेति विश्रुता ॥ ख्याति·

मेनि गरिष्ठाना—महो संस्कारतृप्यपि ॥ १६ ॥ ततश्चौलुक्यनृमिभृ—त्पत्तनेऽन्यपुरेष्वपि ॥ विस्त-
रात्कारयामास । गुरोरष्टाह्निकामहं ॥ १७ ॥ श्रीविक्रमनृपाद्वर्षे । शराब्धिशिवसंमिते ॥ आसीत्का-
र्त्तिकराकायां । हेमसूरिगुरोर्जनिः ॥ १८ ॥ तस्य दीक्षा च पाथोधि—बाणरुद्रेष्वजायत ॥ पट्टप्र-
शिवेषु सूरित्वं । नवाब्ध्यर्केषु च व्ययः ॥ १९ ॥ हेमाचार्यवियोगेन । शून्यात्मेव समंततः ॥ वि-
दांचकार चौलुक्यो । न किंचित्कृत्यमात्मनः ॥ २० ॥ ततः स रामचंद्राद्यै—र्बुधैः संबोध्य नित्यशः
॥ दिनैः कतिपयैश्चक्रे । स्तोकशोकः कथंचन ॥ २१ ॥ अथ चौलुक्यराट् दध्यौ । गणयित्वाग्रिमं
दिनं ॥ प्रतापमल्लं दौहित्रं । निजैश्वर्ये निवेशये ॥ २२ ॥ तावद्विस्तारयंस्तापं । ज्वालाजिह्वालव-
ह्निवत् ॥ आकस्मिको ज्वरस्तस्य । शरीरे समजृंभत ॥ २३ ॥ नृपं ज्वरातुरं दृष्ट्वा—गदंकाराः स-
मुत्सुकाः ॥ विधातुं तत्प्रतीकारं । सारमारेभिरे ततः ॥ २४ ॥ तदैव छद्ममासाद्या—जयपालः स
दुष्टधीः ॥ कथंचन पयोमध्ये । नृभृते दत्तवान् विषं ॥ २५ ॥ कोशस्य कुंचिकां लात्वा । बलात्सै-
न्यं च किंचन ॥ विरचय्यात्मसात्तस्थौ । स राज्यग्रहणोत्सुकः ॥ २६ ॥*

ज्ञातो राजा परिज्ञाय । स्वकाये विषमंत्रमं ॥ कोशादानाययामास । शिप्रां क्षिप्रं विषापहां ॥

॥ २७ ॥ कोशाधिपतिराचष्ट । कुंचिकामजयः स्वयं ॥ आदाय मत्करात्कोशं । रुध्वा च परितः स्थितः ॥ २८ ॥ तदाकर्ण्य विविक्तात्मा । स चुकोप न तंप्रति ॥ केवलं ध्यातवान्नून—मीदृशी भवितव्यता ॥ २९ ॥ आनायितां नृपेणापि । प्रेक्ष्य शिप्रामनागतां ॥ पारिपार्श्वकतामास—श्चारणः प्रोचिवांस्तदा ॥ ३० ॥ एतावंतस्त्वया राजन् । प्रासादाः कारिताः कुतः ॥ कस्तान् शुश्रूषिता नागा—द्विप्रा ते स्वामिनोऽपि यत् ॥ ३१ ॥ अनेन सत्यमेवोक्त—मिति राट् स चमत्कृतः ॥ दारिद्र्यद्रावकं तस्मै । दत्तवान् पारितोषिकं ॥ ३२ ॥ तदैव सर्वचैत्येषु । पूजाः साधर्मिकार्चनं ॥ अन्नादिदानं दीनेभ्यो । नृपश्चक्रे निरंतरं ॥ ३३ ॥ अथ राजर्षिराकार्य । रामचंद्रं मुनीश्वरं ॥ पर्यंताराधनां कर्तुं । विधिनैवं प्रचक्रमे ॥ ३४ ॥ पुरतः स्थापयित्वार्ह—द्बिंबं तपनबिंबरुक् ॥ अर्चयित्वा च सविधि । नमस्यामासिवान्मुहुः ॥ ३५ ॥ साक्षीकृत्य जिनाधीशं । मनःशुद्ध्या मुनेः पुरः ॥ भूभृदेवमभाषिष्ट । पापप्रक्षालनाचिकीः ॥ ३६ ॥ स्थावराणां त्रसानां च । प्राणिनामाभवं मया ॥ वधो चिकीर्षितः कोऽपि । तं गर्हेऽहं मुहुर्मुहुः ॥ ३७ ॥ स्वार्थेनाथ परार्थेन । स्थूलं तदितरं च यत् ॥ कथयामास मिथ्याहं । तज्जुगुप्सेऽतिप्रयत्नतः ॥ ३८ ॥

नयेन दुर्नयेनापि । परकीयं धनादिकं ॥ अदत्तं यन्मयोपात्तं । तत्त्यजामि निरीहधीः ॥३९॥
स्वपरस्त्रैणयोगेन । यदसेव्यत मैथुनं ॥ अचिंत्यत च यद्दिव्यं । तन्निंदामि पुनः पुनः ॥ ४० ॥ ध-
नधान्यक्षेत्रवास्तु—स्वर्णदासद्वयादिषु ॥ अधिकां च कृतां तृष्णां । वर्जयामि समाहितः ॥ ४१ ॥
आजन्म यन्मयाभोजि । निशायामशनादिकं ॥ अनक्ष्यमपि यद्भुक्तं । तद्गर्हे सर्वगर्हितं ॥ ४२ ॥
एवं च दिग्विरत्यादौ । तथा सामायिकादिषु ॥ यदतीचारयांचक्रे । तन्मुंचाम्यपुनः कृते ॥ ४३ ॥
पृथ्वीकायादिरूपेण । स्थावरेषु वसन्नहं ॥ पीडयामासिवान् जीवान् । समस्तान् क्षमयामि तान् ॥
॥ ४४ ॥ त्रसत्वे तिर्यग्नरक—नरदेवभवेष्वहं ॥ वसन् यान् दूनवानस्मि । क्षाम्यंतु मयि तेंगिनः ॥
॥ ४५ ॥ दुर्वाक्याद्यभिधानेन । सर्वे ये केऽपि पीडिताः ॥ तानहं क्षमयन्नस्मि । त्रिशुद्ध्या रचितां
जलिः ॥ ४६ ॥ जीवजातिषु सर्वासु । भ्रमयन् कृतवानहं ॥ कायवाङ्मानसैस्तस्मै । मिथ्या भवतु
दुष्कृतं ॥ ४७ ॥ दाक्षिण्येनाथ लोभेन । परस्मै जातु यन्मया ॥ मिथ्यात्वमुपदिष्टं त—न्मृषा स्या-
दखिलं मम ॥ ४८ ॥ अलसत्वादियोगेन । यदहं धर्मकर्मणि ॥ बलं गोपितवान् व्यर्थं । धर्मस्ख-
लितमस्तु तत् ॥ ४९ ॥ प्रतिमापुस्तकादीनां । चरणादिविघट्टनैः ॥ आशातना व्यरचि या । सा

सर्वापि विलीयतां ॥ ५० ॥ निःपापीकरणेनैवं । पर्यंताराधनापरः ॥ विशुद्धात्मा स राजर्षिः । शिश्रियेऽनशनं ततः ॥ ५१ ॥ ऊचे च यन्मया वित्त—मर्जितं न्यायवर्त्मना ॥ सप्तक्षेत्र्यां किमप्युप्तं । तत्पुण्यमनुमोदये ॥ ५२ ॥ सद्देवगुरुपूजाद्दि—रमारिकरणेन च ॥ दानादिना च संप्राप्तं । यत्पुण्यं तत्स्मराम्यहं ॥ ५३ ॥ शत्रुंजयादितीर्थानां । यात्रां क्षपितकल्मषां ॥ निर्माय यन्मया चक्रे । श्रेयस्तत्परिभावये ॥ ५४ ॥ शरणं तीर्थकृत्सिद्ध—साधुधर्मा भवंतु मे ॥ एत एव जगत्पूज्या—श्चत्वारः संतु मंगलं ॥ ५५ ॥

मामकोऽयं ममात्मैव । चैतन्यमयविग्रहः ॥ देहाद्याः सर्व एवैते । भावाः संयोगिकाः पृथक् ॥ ५६ ॥ जीवानामिह यद्दुःखं । तद्देहाद्यैरसंशयं ॥ तस्मादवश्यहातव्यां—स्त्रिधा तान् व्युत्सृजाम्यहं ॥ ५७ ॥ ततश्चित्तमुपस्कृत्य । शुभध्यानेन शुधवः ॥ निःप्रपंचः स्मरन् पंच—परमेष्ठिनमस्क्रियाः ॥ ५८ ॥ सर्वज्ञं हृदि संस्मरन् गुरुमपि श्रीहेमचंद्रप्रभुं । धर्मं तदुदितं च कल्मषमषीप्रक्षालने पुष्करं ॥ व्योमांकार्यमवत्सरे विषलहर्युत्सर्पिमूर्छाभरो । मृत्वाप्राप कुमारपालनृपतिः सद्व्यंतराधीशतां ॥ ५९ ॥ तस्मिन् परासौ क्षितिपे तदीयः । परिच्छदो म्लानिपदं बभूव ॥ अस्तं समाजग्मुषि धाम-

चौलुक्यभूमीप·
धाम्नि । विकस्वरः किं कमलाकरः स्यात ॥ ६० ॥ विधाय संस्कारविधिं महर्घ्यां । चौलुक्यभूमीप· ॥ ६१ ॥ अथ तथा·
निपुंगवस्य ॥ अंत्याः क्रियास्ता विदधुः समस्ता—स्तद्भ्रातृपुत्राजयपालमुख्याः ॥ ६१ ॥ अथ तथा·
विधधार्मिकगूर्जरा—धिपविपत्तिविषादितचेतसः ॥ कविवराः स्मृततद्गुणगौरवा । व्यरचयन्निति का·
व्यपरंपरां ॥ ६२ ॥ क्षीणो धर्ममहोदयोऽद्य करुणा प्राप्ता कथाशेषतां । शुष्का नीतिलता विचार·
सरणिः शीर्णा गता साधुता ॥ औचित्यं च परिच्युतं जिनमतोल्लासः कृशीयानभूत् । श्रीचौलुक्य·
महीपतौ क्षितितलात्स्वर्लोकमासेदुषि ॥ ६३ ॥ निर्दग्धस्त्रिदशद्रुमः सुरगवी प्रच्याविता प्राणतो ।
नीतः कामघटः कपालघटनां चिंतामणिश्चूर्णितः ॥ एकैकोचितदत्तलक्षकनकप्रोज्जीवितार्थिव्रजं ।
दैवेनाद्य कुमारपालनृपतिं नीत्वा यशःशेषतां ॥ ६४ ॥ भूयांसोऽपि भवंतु भूमिपतयो निःसीमदो·
र्विक्रमा—स्तन्मध्ये दधते न केऽपि समतां चौलुक्यधात्रीभृतः ॥ द्यूतादिव्यसनं निवार्य रुदती वि·
त्तं च मुक्त्वैव यो । मारिं वारितवांश्चतुर्दशसमान् विष्वक्क्षमामंडले ॥ ६५ ॥ लोको मूढतया प्रज·
ल्पतु दिवं राजर्षिरध्यूषिवान् । ब्रूमो विज्ञतया वयं पुनरिहैवास्ते चिरायुरयं ॥ स्वांते सच्चरितैर्नृणो·
ऽन्वहमनुगैः कैलासवैहासिकैः । प्रासादैश्च बहिर्यदेष सुकृती प्रत्यक्ष एवेक्ष्यते ॥ ६६ ॥

अथ सूरिविभवेन राज्यलक्ष्मीं । स्वयमपि तां कलयंतमाकलय्य ॥ महमहिम विधाय राज्यधुर्या—स्तमजयपालमतिष्टिपन्नृपत्वे ॥ ६७ ॥ निरीक्ष्य राजानमुदित्वरं तं । विलोचनासेचनकं स्वकांत्या ॥ उल्लासमासाद्य महांतमंतः । पौरास्तदानीं कुमुदांबभूवुः ॥ ६८ ॥ एवं चैतदनेकधार्मिककथासारं विचारांचितं । संक्षेपेण कुमारपालनृपतेः पूर्तिं चरित्रं ययौ ॥ विस्तारेण तु तस्य पुण्यपुरुषस्यामूलचूलं न त—द्वक्तुं सोऽपि यदा सहस्ररसनश्चेत्स्यात्स्वयं वाक्पतिः ॥ ६९ ॥ प्रपंचिताः संति यथोचितं ते । धर्मादयोऽस्मिन् सकलाः पुमर्थाः ॥ तदर्थिना भव्यजनेन सम्य—ग्निशम्यते तच्चरितं सदैव ॥ ७० ॥ न प्राचीनकवीशकाव्यतुलनां कर्तुं ध्रुवं कोविदै—र्ज्ञेयो नापि निजात्मबुद्धिकलतां धर्तुं ममायं श्रमः ॥ किंतु स्याच्चरितं सतां विरचितं निस्सीमपुण्यर्द्धये । ध्यात्वैवं विहितं मया किमपि तच्चौलुक्यपृथ्वीपतेः ॥ ७१ ॥ नेदृग् राजऋषेश्चिरंतनमनुस्यूतं चरित्रं क्वचि—न्नानाकारतया चकासति सतां वक्रे प्रबंधाः पुनः ॥ यादृग्दृष्टमिदं प्रभावकचरित्रादौ मया तादृशं । दृब्धं तेन न मेऽतिबुद्धिरधिका भव्या न वा न्यूनता ॥ ७२ ॥ न पदपदवी नव्या भव्या न वास्य विचित्रता । न च शुचिरलंकारः स्फारश्चकास्ति रसोऽत्र न ॥ तदपि चरितं विज्ञायैतत्कुमारमहीभृतः ।

सुकृततृपया दृश्यं शुद्धं विधाय विशारदैः ॥ ७३ ॥ यावद् द्योतयतः स्वदीधितिभरैर्द्यावापृथिव्यंतरं । पृथ्वीपाल-सूर्याचंद्रमसौ निरस्ततमसौ नित्यप्रदीपाविव ॥ तावत्तर्पयतादिदं नवसुधानिस्यंदवत्सुंदरं । कुमारपालचरितं चेतांसि पुण्यात्मनां ॥ ७४ ॥ इति कृष्णर्षीयश्रीजयसिंहसूरिविरचिते महाकाव्ये परमार्हतश्रीकुमारपालचरित्रे श्रीकुमारपालस्वर्गगमनवर्णनो नाम दशमः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

---

अथ प्रशस्तिः—वंशे वीरजिनाधिराजगणभृत श्रीमान्न सुधर्मप्रभो—रासीदार्यसुहस्तिशिष्यमुख्यातः स्वस्तरुवत्सदा कृतः श्रीगुप्तसूरिप्रभुः ॥ तस्माच्चारणलब्धिकेलिशरणात् श्रीचारणाख्यो गणः । वर्या श्रीस्थि-सुमनसां स्तोमेन संसेवितः ॥ १ ॥ शाखा तस्य तुरीयका ततककुप्श्रीर्वज्रनागर्यलं । कृतिधर्मनामविद्यापख्यं द्वितीयं कुलं ॥ तत्रासीदपसीमलब्धिवसतिर्वंदारुवृंदारक—व्रातख्याततपाः दध्रे पाजलनिधिः श्रीकृष्णनामा मुनिः ॥ २ ॥ यो मित्रव्ययदुःखतो व्रतमधाद्योऽभिग्रहानप्यलं । स क्ष्मा-व्यालविपाकुलान्नदजलैरुज्जीवयामास यः ॥ प्रत्यब्दं चतुरुत्तरां व्यरचयद्यः पारणात्रिंशतं । पालविबोधनः शमधनः कृष्णर्षिरास्तां मुदे ॥ ३ ॥ श्रीमन्नागपुरे पुरा निजगिरा नारायणश्रेष्ठितो ।

निर्माप्योत्तमचैत्यमंतिमजिनं तत्र प्रतिष्ठाय च ॥ श्रीवीरान्नवचंद्रससशरदि श्वेतेषुतिथ्यां शुचौ । ब-
भ्रामुख्यमबोधयत्स मुनिराट् द्वासप्ततिं गोष्टकं ॥ ४ ॥ तस्माद्विस्मयनीयचारुचरिते श्रीसूरिचक्रे क-
मा—ज्जाते श्रीजयसिंहसूरिरुदगूढ़ीतार्थचूडामणिः ॥ संवद्विक्रमतस्त्रयोदशशतेष्वेकोत्तरेष्वर्करु—
क्रांतं संघमजीजिवज्ज्वलनरैर्यो मंत्रकृष्टैर्मरौ ॥ ५ ॥ प्रभावकशिरोमणिः प्रणतलोकचिंतामणिः ।
प्रसन्नशशभृत्प्रभुस्तदनु दिद्युते दीप्रधीः ॥ यदीयचरणांबुजं निजशिरःकिरीटार्करु—करेण धरणीभु-
जां विकसितत्वमानिन्यिरे ॥ ६ ॥ प्रत्यब्दं दीनदुःस्थोध्धृतिसुकृतकृते दीयमानं स्वकोशात् । साक्षा-
द्दीनारलक्षं तृणमिव झटिति प्रोज्झ्य निर्लोभभावात् ॥ एकः सोऽयं महात्मानघ इति नृपतिश्रीम-
हम्मदसाहेः । स्तोत्रं प्रापत्स तापं क्षपयतु भगवान् श्रीमहेंद्रप्रभुर्नः ॥ ७ ॥ तत्पट्टपूर्वाचलमंम्ननैक-
चंम्रद्युतिः श्रीजयसिंहसूरिः ॥ कुमारपालक्षितिभृच्चरित्र—मिदं व्यधत्त स्वगुरुप्रसादात् ॥ ८ ॥ अ-
वधानसावधानः । प्रमाणनिष्णः कवित्वनिष्णातः ॥ अलिखन्मुनिनयचंद्रो । गुरुभक्त्यास्याद्यमा-
दर्शं ॥ ९ ॥ उच्चैर्हारिविसारिवारिधिजले दिक्पत्रमालाकुले । पातालस्थितशेषनालकलिते लक्ष्मी-
विलासोचिते ॥ यावत्पुष्यति मेदिनीसरसिजे स्वर्णाचलः कर्णिका—भावं तावदिदं चरित्रममलं

प्रीणातु विद्वज्जनं ॥ १० ॥ इति.

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैननास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

॥ श्रीजिनाय नमः ॥

# ॥ श्रीकुमारपालचरित्रं ॥

( कर्ता—श्रीजयसिंहसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४१. विक्रमसंवत—१९७१. सने—१९१५.

किं. रु.-८-४-०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर.